अनन्तशयनसंस्कृतग्रन्थावलिः ।

ग्रन्थाङ्कः ९१.

श्रीसेतुलक्ष्मीप्रसादमाला

ग्रन्थाङ्कः ३.

श्रीवराहमिहिराचार्यप्रणीतं

# होराशास्त्रं



श्रीरुद्रविरचितेन विवरणेन

समेतं

संस्कृतग्रन्थप्रकाशनकार्याध्यक्षेण

के. साम्बशिवशास्त्रिणा

संशोधितम् ।

---

तच्च

अनन्तशयने

महामहिमश्रीसेतुलक्ष्मीमहाराज्ञीशासनेन

राजकीयमुद्रणयन्त्रालये तदध्यक्षेण

मुद्रयित्वा प्रकाशितम् ।

---

कोलम्बाब्दाः ११०२, क्रैस्ताब्दाः १९२६.

श्रीपद्मनाभसेवि-
न्यखिलश्रीवर्धनी महाराज्ञी ।
श्रीसेतुलक्ष्म्यभिख्या
प्रत्यक्षा जयति वञ्चिभूलक्ष्मीः ॥

ग्रन्थावलिरियमिन्धे
प्रसाधिता तत्प्रसादगुणगुम्फा ।
श्रीसंहितसेतुलक्ष्मी-
प्रसादमाला सुवर्णमणिचित्रा ॥

# PREFACE.

This edition is based on the following three palm leaf manuscripts.

1. क. Belonging to the Palace Library, Trivandrum.
2. ख. Lent by Mr. Govinda Pisharoti, Kailasapuram, Vaikkam.
3. ग. Do. Srikumaran Moothathu, Ayankudi, Kaduthuruthi.

The colophons in these manuscripts show that the name of the commentary is Vivaraṇa, and its author Rudra; while the following verses at the end of the manuscript ख furnish certain facts regarding the date and nativity of the commentator.

"कृत्वा रुक्मिसहोदरीकमितरि प्रावण्यपूतं मन-
स्तद्विभ्रम्य गिरा वराहमिहिरोक्तेरर्थनामिश्रया ।
सत्स्वीकृत्यनुविद्धमागामिकताप्राणं सुधीदं (?) प्रिया-
यार्थं व्याकृषि वास्तवज्ञसदनो नन्वल्पयाहं धिया ॥
भद्राशीर्निधृताद्य ह्नि मकरेऽर्के बुधोदये ।
इदं होराविवरणं रुद्रेण सुसमापितम् ॥"

The manuscript क runs up to the end of 26th chapter. It is written on palm leaves in Malayalam characters and looks about three centuries old. It is almost free from errors. The commentary in this manuscript unlike in the other two mentions the name of the metre etc. in the text.

The manuscript ख having been returned to the owner soon after transcription, no description is given here.

The manuscript ग consists of Vivaraṇa, running up to the end of the 24th adhyāya with only a Malayalam commentary on the 25th. The commentary on the 26th chapter is incomplete; and at the end of the manuscript is found fragment of a Malayalam commentary on the 8th chapter. It is written on palm leaves in Malayalam characters. It is about two centuries old and is full of errors.

K. SĀMBASIVA SĀSTRI.

# INTRODUCTION.

The Hora Śastra of Varāhamihira is now published in the Trivandrum Sanskrit Series, along with the commentary of Rudra. The Jyotis śāstra consists of three branches viz., Ganita, Samhitā and Horā; and the last branch can be further classified as Jātaka, Praśna, Muhūrta and Nimitta. The present work apparently treating of Jātaka, includes in its scope the other topics also; and hence, it seems, the significant title Bṛhajjātaka (lit., the bigger Jātaka).

The Horā Śāstra is said to reveal to us the matured state of good and bad actions of men in their previous existences, ready to bear fruit, as is evident from,

> "कर्मार्जितं पूर्वभवे सदादि
> 
> यत् तस्य पक्तिं समभिव्यनक्ति ।" (p. 9).

In respect of its terse and laconic style containing depth of sense, the work approaches the sūtras of Pāṇini; and being suited to the needs and taste of students it has superseded the treatises on Hora by Maya, Yavana, Maṇintha, Saktipūrva and others as the following verse shows:—

> "भूयोभिः पटुबुद्धिभिः पटुधियां होराफलज्ञप्तये
> 
> शब्दन्यायसमन्वितेषु बहुशः शास्त्रेषु दृष्टेष्वपि ।
> 
> होरानन्तमहार्णवप्रतरणे भग्नोद्यमानामहं
> 
> स्वल्पं वृत्तविचित्रमर्थबहुलं शास्त्रप्लवं प्रारभे ॥" (p. 8).

The peculiar popularity of the work is also due to the fact that it contains, in a nutshell, all that is essential in the works on the subject by ancient teachers.

The author is known to have flourished about the middle of the 6th century A. D. The following verse makes it certain that he was born of the Kapiṣṭhila gotra in the Avanti country and received his education from his father and guru named Ādityadāsa.

> "आदित्यदासतनयस्तदवाप्तबोधः
> 
> कापित्थकः सवितृलब्धवरप्रसादः ।
> 
> आवन्तिको मुनिमतान्यवलोक्य सम्यग्
> 
> होरां वराहमिहिरो रुचिरां चकार ॥" (p. 327).

He is known to have written the following works on the different branches of the Jyotiś śāstra.

1. Pancasiddhānta
2. Laghujātaka

3. Bṛhadyātrā
4. Bṛhadvivāhapaṭala
5. Bṛhatsaṃhitā.

Treading the track of his predecessors the author reveals his high veneration for them, as is shown by the following extracts.

(1) "मययवनमणिन्थशक्तिपूर्वै-
दिवसकरादिषु वत्सराः प्रदिष्टाः ।" (p 130).

(2) "सत्स्वर्धं ह्रसति ततस्त्वथैकगाना-
मेकोंऽशं हरति बलीत्यथाह सत्यः ॥" (p. 132).

(3) "आयुर्दायं विष्णुगुप्तोऽपि चैवं
देवस्वामी सिद्धसेनश्च चक्रे ।" (p 137).

(4) 'स्वमतेन किलाह जीवशर्मा
ग्रहदायं परमायुषः स्वरांशम् ।" (p. 139).

(5) 'प्राहुर्यवनाः स्वतुङ्गगैः
क्रूरैः क्रूरमतिर्महीपतिः ।" (p. 186).

It can be seen from the following extracts that all the subsequent writers on astrology refer to the work as a great authority and regard the author as an incarnation of the sun.

(1) "यच्छास्त्रं सविता चकार विपुलैः स्कन्धैस्त्रिभिर्ज्योतिषां
तस्योच्छित्तिभयात् पुनः कलियुगे संसृत्य यो भूतलम् ।
भूयः स्वल्पतरं वराहमिहिरव्याजेन सर्वं व्यधा-
दित्थं यं प्रवदन्ति मोक्षकुशलास्तस्मै नमो भास्वते ॥"
(Bhaṭṭōtpala's commentary on the Hōrā).

(2) "ज्योतिश्शास्त्रमिदं विधाय विपुलं त्रिस्कन्धभिन्नं पुरा
लोकानां मतिमान् यतः कलियुगे तत्पातभीत्या पुनः ।
स्वल्पं तत् सकलं ततो रचितवानादित्यदासात्मजो
भूत्वा यो मिहिरो वराहमिहिरं नाम्ना नमस्कुर्महे ॥"
(Daśādhyāyi, a commentary on the Hora).

(3) "यः शास्त्रं विपुलं चकार विततैः स्कन्धैस्त्रिभिर्ज्योतिषां
तस्योच्छित्तिभयात् स्वयं कलियुगे संश्रित्य यो भूतलम् ।
भूयः स्पष्टतरं वराहमिहिरव्याजेन संक्षिप्तवान्
लोकानुग्रहमूर्त्तये भगवते तस्मै नमो भास्वते ॥" (p. 96).

An erudite commentary named Vivaraṇa by Rudra is added to the work. From the fact that the commentator is called in this country by the names Uzhutra Vāryar and Iṭṭutra Vāryar, which are apparently Malayalam corruptions

of the Sanskrit term Rudra, it can be surmised that he was a native of Kerala. Besides, the people called Vāryars are exclusively found to be natives of Kērala which, it is well-known, was the seat of many learned men in ancient days who made the study of astrology and medicine their speciality.

From the verse,

"भद्राशीर्निश्चिताद्यह्नि मकरेऽर्के बुधोदये।
इदं होराविवरणं रुद्रेण सुसमापितम् ॥"

it is evident that the commentary was written on a Wednesday of the month Makara when the date indicated by the chronogrmme 'भद्राशीर्निश्चिताद्य' coincides. The chronogramme, however, when taken as Kalidina comes to 1690524 which happens to be Monday the 16th in the month of Karkatakam of 702 of the Kollam Era (1527 A. D). It is therefore taken, though in quite a new way as indicating the Kollam year, month and date which is Wednesday the 24th of the 6th month of the year 170 (995 A. D). To ignore the words 'भद्राशीर्निश्चिताद्य' of the author and to guess out any possible alteration of the text so as to suit the Kalidina is inadmissible.

The commentary is quoted* as authority in the Praśnamārga written in 825 K. E. (1650 A. D.); and this fact itself makes it clear that it is about four centuries old. And even if we take the chronogramme as representing the Kalidina (702-12-16), either admitting or ignoring the disparity of Wednesday in Makara, there is every chance of the commentary being four centuries old.

Nīlakaṇṭha in his Bhāṣya on the Āryabhaṭīya, mentions† a Rudra as one of the teachers of Parameśvara who wrote Dṛggaṇita about the beginning of the 15th century A. D. If this Rudra is the same as the author of Vivaraṇa, his date may be assigned to the latter part of the 14th century A. D. As the chronogramme ends with the word अह्नि it seems natural to take it as representing Kali days; and if it is read as भद्रागी instead of भद्राशी as there is small difference between the Malayalam characters ग and श, it comes to 1690324 Kali days corresponding to the 13th ghatika of the 29th day in the month of Dhanu of the Kollam year 702 (1527 A. D.); and in case the Saṅkrānti happened on

---

* 'न्यायः सर्वगृहेष्वयं विवरणे प्रोक्तोऽथ सोऽप्युच्यते ।'

† "परमेश्वरस्तु रुद्रपरमेश्वरात्मज-नारायण-माधवादिभ्यो गोलविद्भ्यो गणित-गोलयुक्तीरपि बाल्य एव सम्यग् गृहीत्वा दृग्गणितं करणं चकार ।"

the same day, then the makarārka, the first day and Wednesday would also coincide.

There is another commentary on the work called Daśādhyāyī written by Govinda Somayāji. As this ends with the 10th chapter it cannot be said to serve the objects expected of a commentary. In the first two adhyāyas of both these commentaries are however found some parallel passages* which give rise to the inference that one of them must have been indebted to the other.

Bhaṭṭotpala's commentary named Bṛhajjātakavivṛti is narrow in its scope and is far from making the appearance of Vivaraṇa superfluous.

From the references† to Vyākaraṇa, Mīmāmsā and Yoga śāstras, the commentator appears to be wellversed in those branches of knowledge.

---

* "मेषादय: क्रमेण क्रियादिसंज्ञा भवन्ति । अत्राष्टानां क्रियादीनां समासः । तौक्षिकादयो व्यस्ता: प्रोक्ता: । तेनायमर्थः सूचितः—आत्माद्यष्टभावानां धर्मादिचतुर्भावसापेक्षत्वम् आत्मनो धर्मसापेक्षत्वं धनस्य प्रवृत्तिसापेक्षत्वं पराक्रमस्यार्थागमसापेक्षत्वं सुखस्य धनव्ययसापेक्षत्वं सुखसिद्धेर्धर्मसापेक्षत्वं शत्रुक्षयस्य प्रवृत्तिसापेक्षत्वं कलत्रसुखस्यार्थागमसापेक्षत्वं मरणरोगपराभवादावर्थनाशसापेक्षत्वम् इति" ॥

(Vivaraṇa p. 17).

संज्ञासंविधानमाह—क्रियेति । मेषादीनां क्रियादय: संज्ञा उक्ता: । अथाष्टादीनां क्रियादीनां समासः । तौक्षिकादयो व्यस्ता: प्रोक्ता: । तेनायमर्थ: सूचित: — आत्माद्यष्टभावानां धर्मादिचतुर्भावसापेक्षत्वम् आत्मनो धर्मसापेक्षत्वं धनस्य प्रवृत्तिसापेक्षत्वं पराक्रमस्यार्थागमसापेक्षत्वं सुखस्य धनव्ययसापेक्षत्वं सुतसिद्धेर्धर्मसापेक्षत्वं शत्रुक्षयस्य प्रवृत्तिसापेक्षत्वं कलत्रसुखस्यार्थागमसापेक्षत्वं मरणरोगपराभवादेरर्थनाशसापेक्षत्वम् इति ।

(Daśādhyāyī).

† "प्रसज्यप्रतिषेधोऽसौ क्रियया सह यत्र नञ् ।
पर्युदासः स विज्ञेयो यत्रोत्तरपदेन नञ् ॥" (p. 2).

"विशेषणमात्रप्रयोगे विशेष्यप्रतिपत्तिः" (p. 141).

"वस्तिद्वारे विपन्नायाः कुक्षिः प्रस्पन्दते यदि ।
जन्मकाले ततः शीघ्रं पाटयित्वोद्धरेच्छिशुम् ॥" (p. 73).

"मूलाधारोद्गतो वह्निर्द्वादशान्तमुपाश्रितः ।
पीयूषवर्षपूर्णात्मा कामदो ननु मोक्षदः ॥
स एवोर्ध्वगतस्तस्मादपवर्गाय सम्भवेत् ।" (p. 5).

It is a matter of extreme satisfaction for us that we are now in position to publish this learned commentary in the Trivandrum Sanskrit Series. A work on Jyotiṣa named Goladīpikā has already been published (No. 49. T. S. S); and we hope to enrich the series by publishing more works on the subject.

K. SĀMBASIVA SĀSTRĪ.

# उपोद्घातः ।

अस्य होराशास्त्रग्रन्थस्य प्रकाशने संशोधनावलम्बा आदर्शास्त्रयः । तत्रैकः क.संज्ञितो राजकीयग्रन्थशालीयः ।

द्वितीयः ख.संज्ञितो व्याघ्रालयान्तर्गतकैलासपुरनिवासिगोविन्दपिषारोटिसम्बन्धी ।

तृतीयः ग.संज्ञितः कटितिरुत्ति-आयाङ्कुटि-चोलिक्करभवनाधिपति-श्रीकुमारन्मूस्सतुस्वामिकः ।

त्रिष्वप्येषु सामान्यतस्तत्तदध्यायपरिसमाप्तिवाक्याद् विवरणमिति व्याख्याननामधेयं, रुद्र इति तत्कर्तृनामधेयं चावगम्येते ।

विशेषतस्तु ख.संज्ञितग्रन्थसमाप्तौ दृश्यमानेन

"कृत्वा रुक्मिसहोदरीकमितरि प्रावण्यपूतं मन-
स्तद्विभ्रम्य गिरा वराहमिहिरोक्तेरर्थनामिश्रया ।
सत्मीकृत्यनुविद्धमागमिकताप्राणं सुधीदं(?) प्रिया-
यार्थे व्याकृषि वास्तवज्ञसदनो नन्वल्पयाहं धिया ॥

भद्राशीर्निधुताघह्नि मकरेऽर्के बुधोदये ।
इदं होराविवरणं रुद्रेण सुसमापितम् ॥"

इति सन्दर्भेण ग्रन्थकर्तुर्निवासभवनं नामधेयं जीवितसमयश्च शक्यान्यवधारयितुम् ।

अत्र क.संज्ञित आदितः षड्विंशतिमध्यायान् यावदविकलं स्वरूपमुपलभ्यते । प्रायः शुद्धपाठोऽयमादर्शस्तत्र तत्र विवरणे मूलश्लोकसम्बन्धिवृत्तनामधेयनिवेदनपुरस्सरैरवतारिकादिभिरितराभ्यां विशिष्यते ।

अथ चायं त्र्यङ्गुलविस्तृतिभिस्त्रिवितस्तिदीर्घैः प्रायो वक्रिवेधचिह्नितोभयाञ्चलैः प्रतिपङ्क्ति मार्का पादोनग्रन्थत्रयनिविष्टपङ्क्तिदशकात्माभिः केरलीयलिपिभिरेकादशाधिकद्विशतसङ्ख्यैस्तालपत्रपुटै रूपितस्त्रिशतवर्षवृद्धः प्रतिभाति ।

ख.संज्ञितः प्रतिरूपणानन्तरं तत्स्वामिने प्रतिसमर्पित इति न विशिष्य निरूपयितुं शक्यः।

ग.संज्ञितस्त्वादितश्चतुर्विंशतेरध्यायानां प्रस्तुतेन विवरणेन, ततः पञ्चविंशस्य केनापि कैरलीव्याख्यानेन, षड्विंशस्य विश्रकलितव्याख्यानश्लोकसङ्कटनेन, सर्वान्ततो होराशास्त्रीयाष्टमाध्यायस्य कैरलीव्याख्यानघटितेन केनाप्यंशेन च लब्धाकृतिर्वर्तते। प्रायः स्खलितबहुलपाठोऽयं द्विशतवर्षपर्युषितः। अत्र च द्व्यङ्गुलवितानानि अध्यर्धवितस्तिदीर्घाणि च मनाग् जीर्णत्रुटितानि चत्वारिंशदुत्तरं पञ्चशतं केरलीयलिपीनि तालपत्रपुटानि दृश्यन्ते। तत्र च प्रतिपुटमष्ट पङ्क्तयः प्रतिपङ्क्ति एकैको ग्रन्थश्च विद्यन्ते।

अनन्तशयनम्,
१०-४-१०२.

के. साम्बशिवशास्त्री.

# अवतारिका ।

श्रीवराहमिहिराचार्यप्रणीतं किमपि ज्योतिर्निबन्धनमिदं होराशास्त्रं नाम श्रीरुद्रविरचितेन विवरणेन समन्वितं प्रकाश्यते । गणित-संहिता-होराभिधानैस्त्रिभिः स्कन्धैराचिताकृतेः किल महतो ज्योतिश्शास्त्रस्य कोऽप्य-न्यतमः स्कन्धो भवति होरा ।

वस्तुतो जातकं प्रश्नो मुहूर्तो निमित्तमिति चतुर्भिरङ्गैः स्वरूपिताया अपि होरायाः प्रथमं जातकं सुविपुलमवशिष्टाभिव्यञ्जनक्षमं च प्रतिपाद्य बृहज्जातकमिति नाम्नान्वर्थेन स्थाने प्रथतेऽयं ग्रन्थः ।

जन्मवतां पूर्वजन्मार्जितानां सतामसतां वा कर्मणां या पाकानुगुणा फलाभिसमर्पणप्रवणता तदभिव्यञ्जनमस्य मुख्यं कृत्यम् । तदुक्तमत्रैव —

"कर्मार्जितं पूर्वभवे सदादि
यत्तस्य पक्तिं समभिव्यनक्ति ।"

(पृष्ठम् . ९)

इति ।

जाग्रत्स्वपि मययवनमणित्थशक्तिपूर्वप्रमुखैः पूर्वैराचार्यैरुपनिबद्धेषु परेषु होराशास्त्रनिबन्धेष्विदमेव निबन्धनं पाणिनीयमिव वीर्यबहुलं सूत्रजालं, कार्यविपुलमाकृतिलघिष्ठमखिलादरणीयम् । तथाचोक्तमाचार्यैः —

"भूयोभिः पटुबुद्धिभिः पटुधियां होराफलज्ञप्तये
शब्दन्यायसमन्वितेषु बहुशः शास्त्रेषु दृष्टेष्वपि ।
होरातन्त्रमहार्णवप्रतरणे भग्नोद्यमानामहं
स्वल्पं वृत्तविचित्रमर्थबहुलं शास्त्रप्लवं प्रारभे ॥"

(पृष्ठम् . ८)

इति ।

बहूनां प्राचामाचार्याणां मतानि यावदपेक्षमालोक्य संहृत्य च सारं सप्रमाणं प्रवृत्तस्यास्य प्रतिष्ठा काप्यन्यैव मन्ये ।

अस्य चैवंविधस्य ज्योतिर्निबन्धस्य निबन्धा **श्रीवराहमिहिराचार्यः** क्रिस्तोरनन्तरं षष्ठ्याः शताब्द्यास्तृतीये पादे स्वजीवितप्रकाशेन भुवं प्रकाशयामासेति ज्ञायते ।

मुक्तकण्ठमाचार्योक्तमेव प्रमाणमधिकृत्येयांस्तु भागः प्रत्यक्षो विदुषाम्—

अस्याभिजनः —**कपिष्ठिलाभिधः**

जनकः शिक्षकश्च गुरुः — **आदित्यदासः**

जन्मभूमिः — **अवन्ती**

इति । यथा —

"आदित्यदासतनयस्तदवाप्तबोधः
कापिष्ठिलः सवितृलब्धवरप्रसादः ।
आवन्तिको मुनिमतान्यवलोक्य सम्यग्
होरां वराहमिहिरो रुचिरां चकार ॥"

(पृष्ठम् . ३२७)

इमे चैतदाचार्यविरचिता अन्ये ज्योतिषग्रन्थाः —

| | | |
|---|---|---|
| (१) पञ्चसिद्धान्तः | — | (गणितविषयः) |
| (२) लघुजातकम् | — | (होरांशः) |
| (३) बृहद्यात्रा | — | (मुहूर्तादि) (होरांशः) |
| (४) बृहद्विवाहपटलः | — | ,, ,, |
| (५) बृहत्संहिता | — | (संहिता) |

इति ।

पूर्वाचार्यबहुमतेन पथा सञ्चरमाणोऽयं स्वतन्त्रस्यागमसिद्धिमान्यतामात्मनश्च विद्याविनयगौरवमसामान्यमभिव्यञ्जयति । यथा —

(१) "मययवनमणित्थशक्तिपूर्वै-
र्दिवसकरादिषु वत्सराः प्रदिष्टाः ।"

(पृष्ठम् . १३०)

(२) "सत्त्वर्धं ह्रसति ततस्त्वथैकगाना-
मेकोंऽशं हरति बलीत्यथाह सत्यः ॥"

(पृष्ठम्. १३२)

(३) "आयुर्दायं विष्णुगुप्तोऽपि चैवं
देवस्वामी सिद्धसेनश्च चक्रे ।"

(पृष्ठम् . १३७)

(४) "स्वमतेन किलाह जीवशर्मा
ग्रहदायं परमायुषः स्वरांशम् ।"

(पृष्ठम् . १३९)

(५) "प्राहुर्यवनाः स्वतुङ्गगैः
क्रूरैः क्रूरमतिर्महीपतिः ।"

(पृष्ठम् . १८६)

इति ।

शास्त्रमिदमखण्डितमखिलज्योतिर्विदभ्युपगतेः सुप्रतिष्ठितम्, आचार्यश्चायं ग्रहाणामिवाधीश्वरस्तान्त्रिकाध्यक्षः साक्षान्मिहिर एवेति चाभियुक्तोक्तिमनुसरामः । यथा भट्टोत्पलकृतबृहज्जातकविवृतौ —

"यच्छास्त्रं सविता चकार विपुलैः स्कन्धैस्त्रिभिर्ज्योतिषां
तस्योच्छित्तिभयात् पुनः कलियुगे संसृत्य यो भूतलम् ।
भूयः स्वल्पतरं वराहमिहिरव्याजेन सर्वं व्यधा-
दित्थं यं प्रवदन्ति मोक्षकुशलास्तस्मै नमो भास्वते ॥"

गोविन्दसोमयाजिविरचितायां दशाध्याय्यां —

"ज्योतिश्शास्त्रमिदं विधाय विपुलं त्रिस्कन्धभिन्नं पुरा
लोकानां मतिमान् यतः कलियुगे तत्पातभीत्या पुनः ।
स्वल्पं तत् सकलं ततो रचितवानादित्यदासात्मजो
भूत्वा यो मिहिरो वराहमिहिरं नाम्ना नमस्कुर्महे ॥"

श्रीरुद्रकृते च प्रस्तुते विवरणे —

"यः शास्त्रं विपुलं चकार विततैः स्कन्धैस्त्रिभिर्ज्योतिषां
तस्योच्छित्तिभयात् स्वयं कलियुगे संश्रित्य यो भूतलम् ।
भूयः स्पष्टतरं वराहमिहिरव्याजेन संक्षिप्तवान्
लोकानुग्रहमूर्तये भगवते तस्मै नमो भास्वते ॥"

(पृष्ठम् . ९६)

इति ।

अथैतादृशो होराशास्त्रस्य विशदं विपुलं च विवरणाख्यानं किमपि व्याख्यानमप्यनुपदिदं प्रकाशितमवतार्यते ।

व्याख्यानस्यास्य नामधेयं विवरणमिति कर्ता चास्य रुद्रनामेति चाद-र्शतोऽवगम्यते । यथा —

१. "इति श्रीरुद्रकृते बृहज्जातकविवरणे द्रेक्काणाध्यायः पञ्च-विंशः ।"

२. "इदं होराविवरणं रुद्रेण सुसमापितम् ।" इति

अस्य च विवरणकर्तुः उष़ुत्र वारियर्, इड्डुत्र वारियर् इति वा श्रूयमाणं रुद्रदेश्यं नामान्तरं केरलीयत्वं विशदयति । यद् वारर्संज्ञिता हि केरलाभिजना एव दृष्टाः । केरलाश्च प्रायो बहोः कालादारभ्य ज्योतिषायुर्वेदा-दिनैकतन्त्रविज्ञाननिधीनां महापण्डितानां काप्याकरभूमिरिति चानपलपनीयं तत्त्वमप्यस्य मन्ये केरलीयतया सुतरां प्रसीदति ।

अस्य च रुद्रस्य जीवितसमयनिर्धारणाय पूर्वोक्तख.संज्ञितादर्शगतेना-नेन —

"भद्राशीर्निधृताद्यह्नि मकरेऽर्के बुधोदये"

इति परिसमाप्तिपद्यपूर्वार्धेन विवृत इव विविक्तः कोऽपि पन्थाः । येन गच्छता-मस्माकमिदमिदं द्रष्टव्यं भवति । तथाहि — 'भद्राशीर्निधृताद्ये'त्यंशेन निर्दि-श्यमानया कलिदिनसङ्ख्यया यावता मकरमासो बुधवारश्च सम्मिलतस्ता-वत्या भवितव्यम् । परन्तु इयं सा (१६९०५२४) निर्दिश्यमाना कलिदिन-सङ्ख्या ७०२ तमकोलम्बवर्षे कर्कटकमासं सोमवारं चैव सङ्घटयितुं कल्पते, नतु मकरार्कबुधोदयौ । तयोः सङ्घटनमनुसृत्य चेत् कामपि निर्दिश्यमानामन्यां *गणनामुद्दिशेम, तदा १७० तमे कोळम्बवर्षे पञ्चानां मासामतीतौ चतुर्विंशे दिवसे इति शक्यमुपपादयितुम् ।

"भद्राशीर्निधृताद्यह्नी"ति पद्यस्य चायमर्थः—भद्रया आशिषा निधृते सम्भृते आद्यह्नि अहर्मुखे मकरेऽर्के मकरमासि बुधोदये बुधवारे होराविवरणं नाम इदं व्याख्यानं रुद्रेण निर्विघ्नं परिसमापितम् इति ।

---

* कलिदिनगणनां विना कोळम्बवर्षमासदिवसात्मिकाम् ।

अत्र च 'भद्राशीर्निधृतीये'ति मङ्गलपरिसमाप्तिद्योतकशब्दघटनाचातुर्य-मन्यथयित्वा यथाकथञ्चिद् 'भूधृते निधृतायद्धी'त्यादिपाठभेदकल्पनेन मकरार्क-बुधोदयसङ्घटनानुगुणकलिदिनसङ्ख्यासम्पादनश्रमस्तु न क्षोदक्षमः ।

इयता विवरणकर्तायं रुद्रः १७० तमकोलम्बवर्षसमाने ए. डि. ९९५ तमे वर्षे व्याख्यानमिदं सुसमापयन् लब्धजीवितोऽभूदिति वक्तव्यं भवति । किन्तु मार्गोऽयमिदम्प्रथमः ।

८२५ तमे कोळम्बवर्षे (१६५० ए. डि.) कृतत्वेनाभ्युपगते प्रश्नमार्गे दृश्यमानेन

"न्यायः सर्वगृहेष्वयं विवरणे प्रोक्तोऽथ सोऽप्युच्यते"

इति श्लोकपादेन स्मर्यमाणमिदं विवरणं ततः प्राचीनं सत् स्वकर्तुः रुद्रस्य मार्की चतुःशताब्द्याः प्राचीनत्वमभिव्यक्तुमलम् ।

भद्राशीरिति यथास्थितरीत्या वा मकरार्कबुधोदययोः सम्मेलनानुगुणम-न्यथाकृतया वा ययाकयाचन विधया कलिदिनसङ्ख्यानिर्देशमभ्युपयतामपीद-मस्य चतुःशताब्द्याः प्राचीनत्वमपरिहरणीयमेव ।

आर्यभटीयसूत्रभाष्यकारेण नीलकण्ठसोमयाजिवरेण पुनराचार्येण दृग्गणितकृतः परमेश्वरपण्डितस्य गोलविद्यासम्पत्तिप्रभवानाचार्यान्—

"परमेश्वरस्तु रुद्रपरमेश्वरात्मजनारायणमाधवादिभ्यो गोलविद्भ्यो गणित-गोक्युक्तीरपि बाल्य एव सम्यग् गृहीत्वा दृग्गणितं करणं चकार ।"

इति स्मरता गृह्यमाणो रुद्रो यद्यस्माद्विवरणकारः स्यान्नाम तदा ए. डि. पञ्चदशशताब्द्याः प्रारम्भजीविनः परमेश्वरपण्डितात् प्राचीनोऽयम् ए. डि. चतुर्दशशताब्द्या उत्तरार्धजीवीत्यपि शक्यते सम्भावयितुम् ।

अत्र कश्चिदयमभ्यूहः— यद् 'अह्नि'पदस्वारस्यात् कलिदिनसङ्ख्या-वश्यम्भावेन, सादृश्यभूयस्त्वमूलकलेखकप्रमादापतिते 'शे''गे'न विनिर्मीयमाने 'भद्रागीरि'ति पाठाभ्युपगतौ सम्पद्यमानयानया १६९०३२४ कलिदिन-सङ्ख्यया ४६२७ तमकलिसंवत्सरसमाने ७०२ तमकोलम्बवर्षे (१५२७ तमे क्रैस्ताब्दे) कलिदिशा मेषतः अष्टानां मासामष्टाविंशतेर्दिवसानां त्रयोदशानां नाडिकानां चातिक्रमो लभ्यते । तदानीन्तनगणितप्रक्रियया यदि सूर्यसङ्क्रमो-ऽपि घटेत तदा मकरार्कः प्रथमदिनं बुधोदयश्चापि यथावत् प्रकल्प्येरन् । अतो व्याख्यानस्यास्य चतुश्शताब्द्याः प्राचीनत्वं वक्तव्यमिति ।

जाग्रत्यपि श्रीगोविन्दसोमयाजिवर्यविरचिता दशाध्यायीसंज्ञिता व्याख्या स्वतोऽसमग्रा नास्य विवरणस्य गतार्थताशङ्काया अप्यलम् । किन्तु प्रथमयोरध्याययोस्तत्र तत्रोपलभ्यमाना समानवाक्यसरणिरनयोरन्यतरप्रभवतां विशदयतीव च । यथा —

क्रियतावुरिजितुमकुलीरलेयपार्थोनजूककोर्प्याख्याः ।
तौक्षिक आकोकेरो हृद्रोगश्चेर्थसिः क्रमशः ॥

**विवरणव्याख्या** — मेषादयः क्रमेण क्रियादिसंज्ञा भवन्ति । अत्राद्यानां क्रियादीनां समासः । तौक्षिकादयो व्यस्ताः प्रोक्ताः । तेनायमर्थः सूचितः — आत्माद्यष्टभावानां धर्मादिचतुर्भावसापेक्षत्वम् आत्मनो धर्मसापेक्षत्वं, धनस्य प्रवृत्तिसापेक्षत्वं, पराक्रमस्यार्थागमसापेक्षत्वं, सुखस्य धनव्ययसापेक्षत्वं, सु(ख ? त)सिद्धेर्धर्मसापेक्षत्वं, शत्रुक्षयस्य प्रवृत्तिसापेक्षत्वं कलत्रसुखस्यार्थागमसापेक्षत्वं, मरणरोगपराभवादावर्थनाशसापेक्षत्वम् इति ॥ (पृष्ठम्. १७).

**दशाध्यायी** — संज्ञाविधानमाह — क्रियेति । मेषादीनां क्रियादयः संज्ञा उक्ताः । अथाद्या(दी ?)नां क्रियादीनां समासः । तौक्षिकादयो व्यस्ताः प्रोक्ताः । तेनायमर्थः सूचितः—आत्माद्यष्टभावानां धर्मादिचतुर्भावसापेक्षत्वम्, आत्मनो धर्मसापेक्षत्वं, धनस्य प्रवृत्तिसापेक्षत्वं, पराक्रमस्यार्थागमसापेक्षत्वं, सुखस्य धनव्ययसापेक्षत्वं, सुतसिद्धेर्धर्मसापेक्षत्वं, शत्रुक्षयस्य प्रवृत्तिसापेक्षत्वं, कलत्रसुखस्यार्थागमसापेक्षत्वं, मरणरोगपराभवादेरर्थनाशसापेक्षत्वम् इति ।

श्रीभट्टोत्पलाचार्यनिबद्धा नाम्ना बृहज्जातकविवृतिर्व्याख्यापि प्रायो मूलार्थविवरणसङ्कुचितगतिर्विवरणस्यास्य प्रादुर्भावापेक्षां न मनागपि निरोद्धुमर्हति ।

तत्रतत्रानुगुणैस्तन्त्रान्तरीयप्रमाणवाक्योद्धरणैर्ज्योतिस्तन्त्रव्याख्यातुरप्यस्य श्रीरुद्रस्यान्येष्वपि तन्त्रेषु किमप्यसाधारणं नैपुणमभिव्यज्यते । यथा —

(१) व्याकरणम् —

"प्रसज्यप्रतिषेधोऽसौ क्रियया सह यत्र नञ् ।
पर्युदासः स विज्ञेयो यत्रोत्तरपदेन नञ् ॥"

(पृष्ठम्. २).

(२) मीमांसा —

"विशेषणमात्रप्रयोगे विशेष्यप्रतिपत्तिः ।"

(पृष्ठम्. १४१).

(३) आयुर्वेदः —

"वस्तिद्वारे विपन्नायाः कुक्षिः प्रस्पन्दते यदि ।
जन्मकाले ततः शीघ्रं पाटयित्वोद्धरेच्छिशुम् ॥"

(पृष्ठम्. ७३).

(४) योगशास्त्रम् —

"मूलाधारोद्गतो वह्निर्द्वादशान्तमुपाश्रितः ।
पीयूषवर्षपूर्णात्मा कामदो नतु मोक्षदः ॥
स एवोर्ध्वगतस्तस्मादपवर्गाय सम्भवेत् ।"

(पृष्ठम्. ५).

किं बहुना —

पण्डितवरस्यास्य **श्रीरुद्रस्य** समग्रगुणसम्पन्नमिदं ज्योतिर्विदां बहुमतं **होराविवरणमस्मदनन्तशयनसंस्कृतग्रन्थावल्यामेव** प्रथमं प्रकाश्यत इति धन्या वयमपि । स्वसा चास्य काचिल्लब्धावतारा नाम्ना **गोलदीपिका** (ग्रन्थाङ्कः ४९) सगोत्रमनुजं प्रतीक्षमाणापि जाता कृतार्था । इतःपरमप्येवमनेकेषां सगर्भ्याणामप्याविर्भावेन प्रमोदितुमिमे कृतभागधेये स्तामित्याशंसुरथ विरमामि ।

अनन्तशयनम्,
१०-४-१०२.

**के. साम्बशिवशास्त्री.**

# विषयानुक्रमणी।

## वियोनिजन्माध्यायः ३.



## निषेकाध्यायः ४.

## जन्माध्यायः ५.

विषयः. | पृष्ठम्.

॥ श्रीः ॥

श्रीवराहमिहिराचार्यप्रणीतं

# होराशास्त्रं

## श्रीरुद्रविरचितेन विवरणेन समेतम् ।

---

### प्रथमोऽध्यायः ।

---

मूर्तित्वे परिकल्पितः शशभृतो वर्त्मापुनर्जन्मना-
मात्मेत्यात्मविदां क्रतुश्च यजतां भर्तामरज्योतिषाम् ।
लोकानां प्रलयोदयस्थितिविभुश्चानेकधा यः श्रुतौ
वाचं नः स दधातु नैककिरणस्त्रैलोक्यदीपो रविः ॥ १ ॥

(विवरणम् ।)

जयति भगवान् गजास्यो यत्कर्णव्यजनमारुता भजताम् ।
यान्तो व्यसनानि हरन्त्यायान्तश्चार्पयन्त्यभीष्टानि ॥

सत्यज्ञानपरब्रह्मज्योतिरानन्दरूपिणीम् ।
नौमि सर्वोत्तरोदात्तप्रश्नमालां सरस्वतीम् ॥

सत्यज्ञानप्रदायेष्टदेशकालप्रबोधिने ।
नमः श्रीगुरवे साक्षात्परमेश्वरमूर्तये ॥

येषामात्मनि गर्भसंस्कृतिमुखैर्मौञ्जीनिबन्धान्तिमैः
पूतैः कर्मभिरत्र भाति विधिवद् ब्रह्म प्रतिष्ठापितम् ।
श्रौतस्मार्तसमस्तकर्मसततानुष्ठाननिष्ठात्मन-
स्तानेतान् प्रणमामि भूमिविबुधा[1]निष्टार्थकल्पद्रुमान् ॥

---

१ '[illegible]' क. पाठः.

G. P. P. 2925. 500. 12-10-100 B

श्रीसूर्यादीन् सुसंवेद्यनिग्रहानुग्रहान् ग्रहान् ।
जगत्सृष्टिस्थितिलयज्ञानहेतूनुपास्महे ॥
श्रीमद्वराहमिहिरहोरातात्पर्यसागरे ।
सदर्थरत्नसंसिद्ध्यै टीकानौका विचार्यते ॥

तत्र लोकानुग्रहार्थमतीतानागतवर्तमानकालविषयफलविशेषज्ञानोपायभूतं होराशास्त्रं चिकीर्षुः श्रीवराहमिहिराचार्यः प्रथमम्

"आशीर्नमस्क्रिया वस्तुनिर्देशो वापि तन्मुखम्"

इत्युक्तं शिष्टाचारमनुसरन् प्रारिप्सितस्याविघ्नपरिसमाप्तये समुचितेष्टदेवतामाशीर्मुखेन परामृशति —

मूर्तित्वे इति । अत्र सप्तविंशतिः पदानि । सः रविः नः वाचं दधातु इति क्रियाकारकसम्बन्धः । सः यच्छब्दयुक्तवाक्यसप्तकोक्तगुणविशिष्टः । रविः 'रु शब्दे' इत्यस्माद्धातोर्निष्पन्नया शब्दब्रह्मस्वरूपत्रयीमयो भगवानादित्यो रविशब्देनोच्यते । 'एतद्यन्मण्डलं खे तपति दिनकृतस्ता ऋचोऽर्चींषि यानि द्योतन्ते तानि सामानी'त्यादिभिः सूर्यस्य त्रयीमयत्वम् अत एव शब्दब्रह्मस्वरूपत्वं च प्रदर्शयता रविशब्देन निर्देशाद् भगवतः श्रीसूर्यदेवस्यास्मिन्नादेशप्रधाने जातकशास्त्रे समुचितेष्टदेवतात्वं ध्वन्यते । नः अस्मभ्यं वाचं प्रार्थ्यत्वेन विशिष्टां वाचमित्यर्थः, वाङ्मात्रस्याप्रार्थनीयत्वात् । वाचो वैशिष्ट्यं च यथाकालप्रतिभानमप्रतिहतत्वं सत्यत्वं श्रोतृमनोहरत्वम् इत्यादिभिर्गुणैः संयोगः । तादृशीं वाचं दधातु । डुधाञ् धारणपोषणयोरित्यस्मादाशिषि लोट् । दधातु पोषयत्वित्यर्थः । नैककिरण इति प्रसज्यप्रतिषेधे नञ् । तथाच भर्तृहरिः —

"प्रसज्यप्रतिषेधोऽसौ क्रियया सह यत्र नञ् ।
पर्युदासः स विज्ञेयो यत्रोत्तरपदेन नञ् ॥"

इति । एककिरणो न इति योजना । एकप्रकारत्वमेकत्वम् । अत्रैक-

---

१. 'मस्तर', २. 'द्योत्यते । वाचं सत्यविषयां यथाकालप्रातिभानयुक्तामप्रातिहतां श्रोतृजनहृदयंगमां चेत्यर्थात् सिध्यति । केवलवाङ्मयस्याप्रार्थनीयत्वात् दधा' ग. पाठः. ३. 'धाञ् दानधारणयो', ४. 'सम्पादय', ५. 'त्वम् । तस्मादनेकप्रकारकिरणः उष्णकिरणः शीतकिरणश्चेत्यर्थः । या' क. ख. पाठः.

शब्देन शैत्यादियुक्तकिरणविशेषणेनैकप्रकारत्वमाक्षिप्यते। तस्मादेकत्वमेकप्रकारत्वमत्र नञा निषिध्यते। तथाच सति नैककिरणः शीतकिरणः उष्णकिरणः शीतोष्णकिरणश्चेत्युक्तं भवति। यानि यानि प्रकाशकत्वयुक्तानि वस्तूनि रत्नादीनि, तेषां प्रकाशकत्वशक्तिरर्कादेव जायत इत्यर्थः। अत एव त्रैलोक्यदीपः त्रैलोक्यस्य प्रकाशकत्वाद् दीपभूत इत्यर्थः। 'प्रकाशकौ द्वौ प्रथमौ ग्रहाणामि'त्यादिवचनेषु चन्द्रस्यापि प्रकाशकत्वमुक्तम्। तत् कथमित्यत्राह — यः शशभृतः मूर्तित्वे परिकल्पितः। य इति यच्छब्दः सप्तस्वप्यवान्तरवाक्येषु योजनीयः। शशभृतः चन्द्रस्य मूर्तित्वे मूर्तित्वशब्देनामूर्तत्वव्यावृत्तिरुच्यते। अमूर्तानामदृश्यत्वं प्रसज्यते। अतस्तन्मा भूदिति चन्द्रस्य मूर्तित्वे दृश्यत्वकरणे परिकल्पितः सामर्थ्ययुक्तः। इदं व्यक्तमुक्तमाचार्येण संहितायां —

"सलिलमये शशिनि रवेर्दीधितयो मूर्छितास्तमो नैशम्।
क्षपयन्ति दर्पणोदरनिहिता इव मन्दिरस्यान्तः॥"

इति। आर्यभटेनाप्युक्तं — "चन्द्रो जलमयोऽर्कोऽग्निः" इति। तस्माज्जलस्वरूपः स्वतः प्रकाशशून्यश्चन्द्रः सूर्यांशुसंस्पर्शवशाद् दृश्यमूर्तिर्भवतीत्यर्थः। तस्माच्चन्द्रस्य प्रकाशकत्वमपि रविकृतमेवेति सिद्धम्। तथा यः अपुनर्जन्मनां वर्त्म च भवति। अपुनर्जन्मनां पुनरावृत्तिशून्यानां वर्त्म मुक्तानां गमनभूमिरित्यर्थः। तथाचोक्तं—

"द्वावेव पुरुषौ लोके सूर्यमण्डलभेदिनौ।
परिव्राड् योगयुक्तश्च रणे चाभिमुखो हतः॥"

इति। यः आत्मविदामात्मा इति तृतीयं वाक्यम्। आत्मानं विदन्तीत्यात्मविदः। कः आत्मेति चेद् देहेन्द्रियमनोबुद्धिप्राणेभ्यो दृश्येभ्यो व्यतिरिक्तोऽन्तरतम आकाशवत् सर्वगतः सूक्ष्मो नित्यो निरवयवो निर्गुणो निरञ्जनो गमनागमनादिरहितोऽहङ्कारममकारेच्छाद्वेषप्रयत्नरहितः स्वयञ्ज्योतिःस्वभावोऽग्न्युष्णवत् सवितृप्रकाशवच्चाकाशादिभूतरहितो बुद्ध्यादिकरणरहितः प्राणादिवायुभेदरहितः

१. 'तैष्या' ख. पाठः. २. 'तथाचोक्तमा', ३. 'नि। आत्मविदामात्मा च भवति। आत्मानं' ग. पाठः.

सत्त्वादिगुणरहितोऽशनायापिपासाशोकमोहजरामरणबुद्धिशरीरधर्म-रहितो यः सर्वप्राणिहृदि स्थितः सर्वबुद्धेर्द्रष्टा स आत्मेत्यभिधीयते। तद्विदां निवृत्तिमार्गनिष्ठानां वैदान्तिकानां सिद्धान्तरूपेण प्रतिपाद्यो य आत्मा तत्स्वरूप इत्यर्थः। यः यजतां क्रतुश्च भवतीति सम्बन्धः। यजतां यज्वनां कर्मकाण्डनिष्ठानां गृहस्थानां क्रतुश्च, क्रतुः हविस्संस्थ-सोमसंस्थादिभेदैर्बहुविधः, तत्स्वरूपः। यजमानानामभीष्टफलप्रदा-यिक्रतुदेवतास्वरूप इत्यर्थः। तथा यः अमरज्योतिषां भर्ता। अम-राणां ज्योतिषां च क्रतुषु हविर्भागभुजां क्रतुसम्पादनसाधनभूतधन-धान्यवर्धकत्वद्वारेण भर्ता भरणशीलः। तथाचोक्तम्—

"अग्नौ प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठते।
आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः॥"

इति। यः लोकानां प्रलयोदयस्थितिविभुश्च भवतीत्यन्वयः। प्र-लयोदयस्थितिविभुः प्रलयस्य संहारस्य उदयस्य सृष्टेः स्थितेः पालनस्य च विभुः प्रभुः। कर्तुमकर्तुमन्यथाकर्तुमपि शक्तः प्रभु-रित्युच्यते। सांख्यैः सृष्टिस्थितिसंहारकर्तृत्वेन प्रतिपादितो य ईश्वरः तत्स्वरूप इत्यर्थः। यः श्रुतौ अनेकधा यो रविः श्रुतौ वेदे अनेकधा अनेकप्रकारेण पठ्यत इत्यर्थः। इति सप्तावान्तरवाक्यान्यत्र यद्वृत्तेन दर्शितानि। स तादृशः सर्वप्रकाशकानेककिरणोऽपवर्गप्रदः स्वर्गप्रदः सृष्टिस्थितिसंहारकर्ता प्रसिद्धो रविर्नो वाचं दधात्वित्येवंलक्षणेन प्र-धानवाक्येन सहात्रादिश्लोकेऽष्टौ वाक्यानि। अत्राशीर्वादैः, तन्मु-खेनेष्टदेवतानमस्कारश्च प्रदर्शितः। तथा वस्तुनिर्देशश्चात्र वाक्यैः पदै-रक्षरैश्च यथासारं प्रदर्शितः। तद्यथा — वस्तुनिर्देश इति वस्तुनः प्र-तिपिपादयिषितस्य प्रमेयशरीरस्य निर्देशः सूत्ररूपेण प्रकाशनमुच्यते। अत्र खलु होराशास्त्रे जातकफलप्रदर्शनविषये तन्मूलत्वेनाष्टौ सूर्य-सोमकुजबुधगुरुशुक्रशनैश्चरा लग्नराशिश्चेति परिगृह्यन्ते। तत्र प्रधान-वाक्येन साक्षाद्रविशब्दयुक्तेन सूर्यः। शशभृच्छब्दयुक्तेन वाक्येन चन्द्रः सूचितः। वर्त्मापुनर्जन्मनामित्यनेन वाक्येनापवर्गनिर्णयेणाप-वर्गस्य सत्त्वैकसाध्यत्वात् तथा परिव्राजकस्य रजोऽभिमुखहतस्य च

१. 'र्ता च भवति अ', २. 'धा स्थितश्च भवति। यो', ३. 'यद्वृ',
४. 'त्वयुक्तपुरुषसा' ग. पाठः.

सूर्यमण्डलभेदकत्वसामान्योक्तिबलात् सत्त्वरूपो भौमः सूचितः । अथवा भौमस्याग्नेयत्वादग्नेश्च योगसाधनत्वेनापवर्गस्य मूलत्वादपवर्गविषयेण वाक्येन भौमः सूच्यते । तथाचोक्तं योगप्रकरणे —

> "मूलाधारोद्गतो वह्निर्द्वादशान्तमुपाश्रितः ।
> पीयूषवर्षपूर्णात्मा कामदो ननु मोक्षदः ॥
> स एवोर्ध्वगतस्तस्मादपवर्गाय सम्भवेत् ।"

इति । एवमपवर्गस्य सत्त्ववह्निः साध्यत्वात् मयापेक्ष मूलाधारोद्गतवह्निसहकृतमनोमारुतमूलत्वाच्च वत्माऽपुनर्जन्मनामिति वाक्येन सत्त्वात्मक आग्नेयो भौमोऽत्र सूचितः । आत्मविदामात्मेति वाक्येन बुधनामधेयविच्छब्दयुक्तेन बुधश्च सूचितः । क्रतुश्च यजतामिति वाक्येन 'क्रतूपयोग्यानि तपस्विनश्च' इत्याद्युक्तरूपस्य चापादिद्रेक्काणस्य 'स्रुग्भाण्डयुक्के'त्याद्युक्तरूपस्य मीनादिद्रेक्काणस्य च स्वामी स्वयं स्वाध्यायप्रवर्तकः सुरगुरुश्च सूचितः । तथा भर्तामरज्योतिषामिति वाक्येन दाम्पत्यपुरुषवाचकभर्तृशब्दयुक्तेन कामात्मकः तथा भोगप्रधानश्च शुक्रः सूचितः । लोकानां प्रलयोदयस्थितिविभुरित्यनेन प्रलयशब्दयुक्तेन मृत्युकारकः शनैश्चरश्च सूचितः । भुताबनेकधा इति वाक्येन राशित्वसम्पादकानेकत्ववाचकानेकशब्दयुक्तेन लग्नराशिश्च सूचितः । ते च प्रत्येकं बहुविधविशेषयुक्ताः आयुर्दायेऽष्टकवर्गे पृथग्विधेषु योगेषु च गृह्यन्त इत्यष्टभिर्वाक्यैरत्र सूचिताः । तथा नवर्क्षचरणात्मकराशिचक्रगतानि सप्तविंशतिनक्षत्राणि सप्तविंशति(भिः?) पदैरत्र संख्यासाम्येन सूचितानि । त्रैलोक्यदीप इति पदेन जन्मनः पूर्वमपादानभूतस्यातीकशब्दवाच्यस्य पूर्वलोकस्य, जननादिमरणान्तस्य चेहलोकस्य, मरणात् परस्य गतिशब्दवाच्यस्य परलोकस्य चेति

१. 'नु । अथ नीवारशूकप्रभमथ रुचिरं गूत्रसूक्ष्मं परस्ताद् दीर्घोघदीपदण्डद्युति पुनरनलस्थूलताकाटमेतद् । पश्चात् कालाग्निजालप्रकृतिपरि(ग)तं पूर्णमद्वैतमन्ते भारूपं ++ + + भवभयतिभिरच्छेदि नोऽव्याद् भवाग्नम् ॥ इ' ग. पाठः. २. 'दि चापादिद्रेक्काणरूपेण सु', ३. 'कर्मानद्रेक्काणकोण च संबन्धवान् धर्मक्रियाफलप्रदो गुरुः सूत्रि' क. ख. पाठः ४ 'नः । एवमत्राष्टभिर्वाक्यैरकादिलग्नान्तस्य जातकफलोत्पत्तिनिमित्तभूतस्याष्टकस्य प्रस्तावः कृतः त चार्कोदयः प्रत्येकमायुर्दायाष्टकवर्गयोगादिषु बहुविधविशेषयुक्ता गृह्यन्त इति बोधयितुं तेषामवयवयुक्तैर्वाक्यैर्निर्देशः कृत इत्यवगन्तव्यम् । तथा नव' ग. पाठः.

त्रयाणां लोकानां दीपत्वं तत्रत्यसमस्तवृत्तान्तदर्शकत्वं भगवतो रवेः प्रतिपादयता होराशास्त्रप्रतिपाद्यं वस्तु समस्तं सूत्रितम् । एतत् इष्ट-जातकविषयम् । नष्टजातकविषयं चात्र किञ्चिदक्षरसंख्यया सूचितम् । तद्यथा — मूर्तित्वे परिकल्पितः शशभृतो वर्त्मापुनर्जन्मनामात्मेत्यं-तावतेतिशब्दान्तेन श्लोकांशेन तत् प्रदर्श्यते । शब्दन्यायसमन्वितेष्वि-त्युत्तरश्लोके वक्ष्यमाणपदेनास्य शास्त्रस्य शब्दन्यायव्यतिरेकेणापि क्व चित् क्वचिदर्थवाचकत्वं प्रतिपादयिष्यमाणमत्राप्यनुसन्धेयम् । मूर्तित्वे परिकल्पित इत्यत्र अपरिकल्पित इति पदच्छेदोऽप्यत्रापेक्ष्यते । तेन मू-र्तित्वे अपरिकल्पितः शशभृत आत्मा इति योजनीयम् । अस्यायमर्थः— मूर्तित्व इत्यक्षरसंख्यया पञ्चषष्ट्यधिकानि चतुश्शतानि भवन्ति । तत्र अपरिकल्पित इति परिकल्पितसंख्यया शून्यः परिकल्पितसंख्यां ततः शोधयेदित्यर्थः । इयमत्र प्रक्रिया — पञ्चषष्ट्यधिकचतुश्शतानि विन्यस्य ततः परिकल्पितशोधनं कर्तव्ये एकविंशत्यधिकशतस्य शो-धनं कर्तुं शक्यते । ततः परस्याङ्कद्वयस्य शोधनं यथान्यायं कर्तुं शोध-नविषयाङ्कशून्यत्वान्न शक्यते । अतः परिकल्पितसंख्यायां चतुर्थपञ्च-माङ्कयोः शोधनं मूर्तित्वसंख्यायां चतुर्थपञ्चमाङ्कयोः शून्यत्वात् पुनरपि तत्रैव मूर्तित्वसंख्यायां विलोमेन द्वितीयप्रथमयोरङ्कयोः कर्तव्यम् । तथा कृते पञ्चषष्ट्यधिकचतुश्शतानि अष्टाविंशत्यधिकत्रिशतानि भ-वन्ति । स च राशिः शशभृतः शशेन पञ्चपञ्चाशता भृतः पूरितः आत्मा भवति अस्य शास्त्रस्य श्लोकसंख्यारूपं शरीरं भवतीत्यर्थः । मूर्त्तित्वे सल्लापशोधनेन शशक्षेपेण च गोजालमिति त्र्यशीत्यधिकानि त्रीणि शतान्यस्य शास्त्रस्य आत्मभूतश्लोकप्रमाणभूतानि भवन्ति । आदेरारभ्य 'अध्यायानां विंशतिः पञ्चयुक्ते'ति अध्यायसंख्या कथनश्लोकावधिकानि गोजालप्रमाणानि पद्यान्यत्र शास्त्रे वक्ष्यन्त इत्युक्तं भवति । अत्र श्लोकसंख्यानयनप्रकारे तिस्रः संख्या निर्दिष्टाः । अत्र प्रथमा मूर्तित्वमिति, द्वितीया परिकल्पितरहितं मूर्तित्वं अरागौ-रिति, तृतीया परिकल्पितरहितं शशयुक्तमूर्तित्वं गोजालमिति । एतासु प्रथमा स्थानत्रयगतानां संख्यानां पञ्चषट्चतुर्णां योगे पञ्चदश भ-वन्ति । द्वितीयसंख्यास्थानत्रयस्थानाम् अष्टकद्विकत्रिकाणां, तथा तृती-

यसंख्यागतानां त्रिकाष्टकत्रिकाणां च योगः सप्तविंशतिर्भवति। पञ्चदशघटिकाप्रमाणो नवांशः सप्तविंशतिनक्षत्रात्मको भवतीत्यर्थो लभ्यते, ततोऽत्र पञ्चदशभिः प्रथमसंख्यागतैः द्वितीयतृतीयसंख्यागता सप्तविंशतिर्जाता। सा पञ्चदशघटिकाप्रमाणेन नवांशकथने सप्तविंशतिप्रमाणानि नक्षत्राणि लभ्यन्ते इति पञ्चदश प्रमाणराशिः सप्तविंशतिः फलराशिः नवांशगतनाडिका इच्छाराशिः एभिस्त्रैराशिकेन

"प्रमाणमिच्छा च समानजाती आद्यन्तयोस्तत्फलमन्यजातिः।
मध्ये तदिच्छाहतमादिहृत् स्यादिच्छाफलम्"

इत्युक्तलक्षणेन तात्कालिकलग्नगतनवांशकनाडिकाभ्यः प्रष्टुर्जन्मनक्षत्रं लभ्यते। अत्र क्रियालाघवाय त्रिभिरपवर्तने कृते नवकं गुणहारः पञ्चकं भागहारकश्च स्यात्। तथा लग्नचन्द्रयोस्तुल्यत्वाच्चन्द्रभुक्तनवांशनाडीभिरपि प्रष्टुर्जन्मनक्षत्रं लभ्यते। उभयत्रानीतयोर्जन्मनक्षत्रयोः संवादाभावे लग्नचन्द्रयोर्बलाधिकेनानीतं जन्मर्क्षं भवति। तथाचोक्तं—

"नवांशके शीतगुभुक्तनाडिकां
निहत्य रन्ध्रेण विभज्य पञ्चभिः।
फलान्युडून्येव तथैव लग्नभात्
प्रवर्तनं भाव्यमिति नष्टजातके॥"

इति। अन्योऽपि नष्टजातकप्रकारोऽत्र दिङ्मात्रेण सूचितः। उक्तोऽयं नष्टजातकप्रकारो लग्नविषयः। अथारूढविषयः प्रदर्श्यते — मूर्तित्वे परिकल्पितः शशभृत इति द्वादशभिरक्षरैः स्वस्वसंख्यावशाद् योजितैः षट्चत्वारिंशत्संख्यो राशिर्भवति। स च शशभृतः मूर्तित्वे परिकल्पितः कर्कटकराशावारूढत्वं परिकल्पितः। परिकल्पित इत्युक्तिबलेन तदानयनप्रकारोऽवगन्तव्यः। एकोनपञ्चाशद्राशिरत्र कूटस्थत्वेन परिगृह्यते। तस्मादारूढचक्रशोधनं कर्तव्यम्। तत्प्रकारश्च,

---

१. 'ततो लग्नगतनवांशनाडिका इच्छाराशिः सप्तविंशतिर्गुणकारः पञ्चदश भागहारः एभिस्त्रैराशिकैः प्रष्टुर्जन्मनक्षत्रं लभ्यते। अत्र क्रियालाघवाय गुणकारभागहारयोस्त्रिभिरपवर्तने कृते नवकं गुणकारः पञ्चकं भागहारश्च भवति। लग्नचन्द्रयोस्तुल्यफलत्वाच्चन्द्रभुक्तनवांशकनाडिकाभिरपि प्रष्टुर्जन्मनक्षत्रानयनं कर्तव्यम्। त', २. [illegible] क. ख. पाठः. ३. 'लभ्यो' ख. पाठः.

"प्रियो मौनी नटो गानी दानी यानी तनुः पटुः ।
भानुः खनिर्धनुः सूनुः क्रमात् त्याज्यास्त्वजादितः ॥"

इत्यनेनोक्तः । मेषादिराशिषु क्रमादारूढेषु सत्सु कूटस्थराशेः प्रिया दयः शोध्या इति न्यायेन कर्कटराशावारूढे सति कूटस्थात् गानी-शोधनेन यथोक्तः षट्चत्वारिंशत्संख्यो राशिर्भवति । स चात्र प्रद-र्शितेन श्लोकसंख्याप्रमाणेन गोजालेन स्थानत्रयसंख्यायोगवशात् संक्षिप्तेन चतुर्दशकेन हत्वा चतुष्पञ्चाशता विभज्य शिष्टेन प्रष्टुर्जन्म-नक्षत्रं लभ्यते । हारकः कुत्र प्रदर्शित इति चेत्, अत्र पूर्वत्वे परि-कल्पितः शशभृतो वर्त्मेति चतुर्दशभिरक्षरैः पञ्चपञ्चाशत्संख्यो रा-शिर्भवति । स च अपुनः एकोनः चतुष्पञ्चाशत्संख्यो भवति । सोऽत्र हारकत्वेन सूत्रितः । अत्रापि यथोक्तयोर्गुणहारयोः द्वाभ्यामप-वर्तनेन सप्तकं गुणकारः, सप्तविंशतिर्भागहारश्च स्यात् । "सप्ताहतं त्रिघनभाजितशेषमृक्षम्" इत्युक्तं भवति । कूटस्थराशेः सप्तकमपनीय आरूढचक्रशोधनं कृत्वा शेषेण यथोक्तकर्मण्यनुष्ठिते गुरुनक्षत्रं ल-भ्यते । सप्तकद्वयापनयनेन तद्वत् सूर्यनक्षत्रं लभ्यते । सप्तकत्रयापनय-नेन यथोक्तकर्मण्यनुष्ठिते लग्नराशिर्लभ्यते । एवमारूढविषयः नष्टजा-तकचतुस्साधनानयनप्रकारोऽत्र सूत्रग्राहिकया सूत्रित इति द्रष्टव्यम् । एवं वस्तुनिर्देशोऽपि सम्यक् प्रतिपादितः ॥ १ ॥

अथ स्वव्यापारस्य लोकानुग्रहविषयत्वं प्रदर्शयन् चिकीर्षितं प्रतिजानीते

भूयोभिः पटुबुद्धिभिः पटुधियां होराफलज्ञप्तये
शब्दन्यायसमन्वितेषु बहुशः शास्त्रेषु दृष्टेष्वपि ।
होरातन्त्रमहार्णवप्रतरणे भग्नोद्यमानामहं
स्वल्पं वृत्तविचित्रमर्थबहुलं शास्त्रप्लवं प्रारभे ॥ २ ॥

इति । अहं भूयोभिः पटुबुद्धिभिः होराफलज्ञप्तये बहुशः शास्त्रेषु दृष्टेषु सत्स्वपि होरातन्त्रमहार्णवप्रतरणे भग्नोद्यमानां पटुधियां शास्त्रप्लवं प्रारभे इत्यन्वयः । भूयोभिः बहुभिः पटुबुद्धिभिः पटुत्वं गुणसम्पन्नता तद्युक्तबुद्धिभिः । बुद्धेर्गुणाश्च —






"शुश्रूषा श्रवणं चैव ग्रहणं धारणं तथा ।
ऊहापोहार्थविज्ञानं तत्त्वज्ञानं च धीगुणाः ॥"

इति प्रसिद्धाः । अनेन पटुबुद्धिभिरिति होराचार्याणां निर्देशेन होरातन्त्रनिर्वहणे ऊहापोहपटुत्वं विशेषणापेक्ष्यते । तथाचोक्तं —

"स्वस्थचित्तो विविक्तस्थः पञ्चसिद्धान्तकोविदः ।
ऊहापोहपटुः सिद्धमन्त्रो जानाति जातकम् ॥"

इति । होराफलज्ञप्तये जातकफलाववबोधनार्थम् । दृष्टेषु श्रुतिमूलत्वात् पराशरादिभिः साक्षात्कृतेषु । होरातन्त्रस्य पूर्वजन्मैहिकपारत्रिकविषयबहुविधविशेषाववबोधकत्वाद् अदृष्टपारत्वेन महार्णवत्वरूपणम् । अतस्तत्प्रतरणसाधनत्वाच्चिकीर्षितशास्त्रस्य प्लवत्वरूपणं घटते । पूर्वशास्त्राणां शब्दन्यायसमन्वयकथनेन चिकीर्षितशास्त्रे शब्दन्यायव्यतिरेकेणापि क्वचित् क्वचिद् अर्थविशेषसूचनं ध्वन्यते । स्वल्पमिति सारसङ्ग्रहरूपत्वात् सुखाध्येयमिति भावः । अर्थबहुलं, स्वशास्त्रस्य जातकविषयत्वेऽपि[3] प्रश्नशास्त्राद्यर्थानामपि प्रतिपादकत्वं द्योत्यते । पूर्वेषां होराशास्त्राणामभिधायकाभिधेययोः शब्दार्थयोः बाहुल्याद् दुर्ग्रहत्वेन पटुधियामपि भग्नोद्यमत्वमुक्तम् । अत्र शास्त्रे सारमात्रोपदेशेन शब्दलाघवात् सुग्रहत्वेन होरातन्त्रमहार्णवतरणं सुकरं भवेदित्यभिप्रायः ॥ २ ॥

अथ शिष्यप्ररोचनाय होराशब्दनिर्वचनपूर्वकं होराशास्त्राभिधेयं प्रतिपादयति —

**होरेत्यहोरात्रविकल्पमेके**
**वाञ्छन्ति पूर्वापरवर्णलोपात् ।**
**कर्मार्जितं पूर्वभवे सदादि**
**यत् तस्य पक्तिं समभिव्यनक्ति ॥ ३ ॥**

इति । एके पूर्वापरवर्णलोपादहोरात्रविकल्पं होरेति वाञ्छन्ति इत्यन्वयः । एके मुख्याः । 'मुख्यान्यकेवलेष्वेक' इति सिंहः । पूर्वापरवर्णलोपात् पूर्वापरवर्णलोपं विधाय । पूर्ववर्णस्य अकारस्य अपरवर्णस्य त्रकारस्य च लोपं विधायेत्यर्थः । ल्यब्लोपे पञ्चमी । अहोरात्र-

१. 'नु' ग. पाठः. २. 'षं ध्व', ३. 'त्वेन होरातन्त्र' क. पाठः.

विकल्पं, विशिष्टः कल्पो विकल्पः। वैशिष्ट्यं जननेन वा प्रश्नेन वा। अहोरात्रे यो विकल्पः तम् अकारत्रकारयोर्लोपं कृत्वा होरा इति वा-ञ्छन्ति। जननोपलक्षितं वा प्रश्नोपलक्षितं वा तात्कालिकमहोरात्रा-वयवं होराशब्देन निर्दिशन्तीत्यर्थः। स च विशिष्टोऽहोरात्रावयवः तात्कालिकग्रहस्फुटानां लग्नस्य च निर्णयसाधनत्वेनास्मिञ्छास्त्रेऽवधा-रणीयः। तथाचोक्तं श्रीपतिना—'ज्ञेयोऽत्र प्रथमं हि जन्मसमयः' इति। तदवधारणप्रयोजनमाह—(कर्मेति।) अत्र सा होरेत्यध्याहर्तव्यः। सा होरा पूर्वभवे आर्जितं सदादि कर्म यत् तस्य पक्तिं समभिव्यनक्ति इति सम्बन्धः। पूर्वजन्मनि आर्जितं सदादि। आदिशब्देन असच्च सदसच्च गृह्यते। दृढकर्मोपार्जितं सत्, अदृढकर्मोपार्जितमसत्, दृढा-दृढकर्मोपार्जितं सदसद् इति त्रिविधं यत् कर्म तस्य पक्तिं परिपाकं समभिव्यनक्ति सम्यग् अभिव्यनक्ति। तथा च सारावल्यां —

"यदुपचितमन्यजन्मनि शुभाशुभं तस्य कर्मणः पक्तिम्।
व्यञ्जयति शास्त्रमेतत् तमसि द्रव्याणि दीप इव॥"

इति।

"दशाप्रभेदेन विचिन्तयेद् दृढं दृढेतरं चाष्टकवर्गगोचरैः।
दृढादृढं योगवशेन चिन्तयेदिति त्रिधा जातकसूक्ष्मसङ्ग्रहः॥"

इति फलचिन्तनस्य त्रैविध्यं चाचार्यैः प्रदर्शितम्। अत्र

'आधानजन्मापरिबोधकाले संपृच्छतां जन्म वदेद्विलग्नात्'

इति वक्ष्यमाणनष्टजातकादिप्रश्नविशेषेषु प्रथमावधारणीयस्योदय-लग्नस्य साधनभूतं दिनगतं निर्णेतुं कालारूढयोरवश्यभाविनः सम्ब-न्धस्य प्रतिपादकं सूक्ष्मराशिप्रमाणमपि दर्शितं होरेत्यहोरात्रविकल्प-मित्यनेन। कथमिति चेत्, 'लुप्लृ छेदने' इत्यस्माद्धातोर्निष्पन्नस्य लोप-शब्दस्य छेदार्थवाचकत्वेन छिन्नस्य च भागद्वयात्मकत्वेन पूर्वापर-वर्णविभागादित्यर्थात् सिध्यति। ततः होरेत्यत्र हकारः पूर्ववर्णः। रेफ-स्त्वपरवर्णः तदधःस्थितो वर्ण इति अक्षरसंख्यया रत्नदानमिति प्राण-द्वयाधिकाष्टविनाड्यात्मकं सूक्ष्मराशिप्रमाणमत्रोपदिष्टं भवति। षष्टि-घटिकात्मकस्याहोरात्रस्य द्वादशधा विभागे पञ्च पञ्च नाडिका मेषा-दिराशयो भवन्ति। तत्रैकस्य राशेः पञ्चघटिकात्मकस्य षट्त्रिंशो

भागो द्रेक्काणद्वादशांशस्वरूपः सूक्ष्मराशिप्रमाणं रत्नदानम् । तस्यापि त्रिधा विभागे सति त्र्यंशद्वययुक्तषोडशप्राणात्मकः सूक्ष्मद्रेक्काण इभस्तुल्यप्रमाणः स्यात् । शङ्कुच्छायाद्यवगते सावयवे प्रश्नकालदिनगते रत्नदानगणनेन यः सूक्ष्मराशिर्वर्तते तस्यारूढराशेश्च केन्द्रत्वे सति दिनगतं शुद्धं भवति । आरूढे चरराशौ सति वर्तमानरत्नदाने यज्ञरत्नमिति, स्थिरराशौ यज्ञभानुरिति, उभयराशौ यज्ञसूनुरिति प्रमाणवशाद् दिनगतनिर्णय इति साम्प्रदायिकस्य दिनगतनिर्णयस्य साधनभूतं सूक्ष्मराशिप्रमाणमत्र होराशब्देन प्रदर्शितम् । दिनगते यावन्ति रत्नदानप्रमाणानि गतानि तां संख्यां त्रिभिः सङ्गुणय्य द्वादशभिर्विभज्य शिष्टे अर्काधिष्ठितत्रिकोणचरराशिमारभ्य गणिते यो राशिर्भवति स एव पुनरिभस्तुल्यराशिः । ततः परं वर्तमानरत्नदाने उक्तक्रमागतमारूढकेन्द्रत्रिकोणैकतममिभस्तुल्यं दिनगतावधित्वेन गृह्णीयात् । तदा दिनगतं सूक्ष्मं भवतीति सम्प्रदायविदोऽत्र दिनगतनिर्णयं कुर्वते । एवं निर्णीतेन दिनगतेन तात्कालिकोदयलग्नानयनं तथा तत्कालग्रहस्फुटानयनं च गणितशास्त्रोक्तन्यायेन कर्तव्यम् । तथा कर्मपाकाभिव्यञ्जनकालस्य गुलिकसम्बन्धवशादवधारयितव्यत्वं द्योतयितुमत्र गुलिकोऽपि सूत्रितः । तद्यथा — एके इत्यहोरात्रविकल्पं वाञ्छन्तीत्यत्र विशब्देनाक्षरसंख्यया चतुष्कमुच्यते । तस्य कल्पः क्षयः । एके इति एकशब्देन मुख्यवाचिना सूर्यवार उच्यते । इतिशब्द आदिवचनः । 'इति हेतुप्रकरणप्रकारादिसमाप्तिषु' इत्यमरः । सूर्यवाराद्यहोरात्रगतश्चतुष्कक्षयः एके इत्यहोरात्रविकल्पः । अत्राक्षरसंख्यया षष्टिवाचकाद् इतिशब्दादनन्तरोक्ताहोरात्रशब्देन अह्नो रात्रेश्च त्रिंशन्नाडिकात्मकत्वं द्योतितम् । तयोः सूर्यवारादिचतुष्कक्षयः गुलिकवाक्यसंवादी । तथाहि—सूर्यवारे विकल्पः चतुष्कक्षयः षड्विंशतिर्नाडिकाः । सोमवारे ततो विकल्पः द्वाविंशतिः । भौमवारे ततोऽपि क्षयः अष्टादश । बुधवारे चतुर्दश । गुरुवारे दश । भृगुवारे षट् । मन्दवारे द्वावित्यहोरात्रविकल्पशब्देन व्यञ्जितं भवति । तस्मादहोरात्रविकल्पो गुलिकः । तथाचोक्तं —

१. 'गु' ख. पाठः.

"चन्द्रो रुद्रो जयो विद्या नयः स्तेनः खनी रवेः ।
त्रिंशन्नाड्यह्नि गुलिको दिनपञ्चमवन्निशि ॥"

इति । गुलिकस्वरूपं चोक्तमन्यत्र—

"अथ गुलिकः क्रूरतमः शनैश्वरस्यात्मजः खलः पापः ।
सर्पाकृतिरत्युग्रो निगद्यते मृत्युरखिलसंहारी ॥

नीलाञ्जनसङ्काशो रक्ताक्षो विषमभीषणो दीर्घः ।
पञ्चास्यः पृथुदंष्ट्रो भयङ्करः सर्वदा गुलिकः ॥"

इत्याद्युक्तस्वरूपो गुलिकोऽप्यत्र सर्वकालोपादानकारणत्वेनात्र शास्त्रारम्भे प्रदर्शित इति वेदितव्यम् । अत्रान्योऽपि योजनप्रकारः—एके अहोरात्रविकल्पं पूर्वापरवर्णलोपाद् होरेति वाञ्छन्ति इति योजना । एके केचित् सम्प्रदायविद इत्यर्थः । अहोरात्रविकल्पम् अहोरात्रशब्देन द्वादशराशयः कथ्यन्ते । तेषां घटिकामण्डलसमानत्वात् । अथवा अहोरात्रेत्यत्र हकाराक्षरसंख्ययाष्टकं, रेफेण द्विकं, त्रकारेण च द्विकम्, एतेषां सङ्कलिते द्वादश लभ्यन्त इत्यहोरात्रेण द्वादशराशयः कथ्यन्ते । एतेषां विकल्पः चतुर्धा कल्पनम् एकैकस्य राशेश्चतुश्चतुर्भागकल्पनं होरेति वाञ्छन्ति पूर्वापरवर्णलोपात् पूर्वापरवर्णलोपं निमित्तीकृत्य । पूर्वशब्देन लयरहितः यथापूर्वस्थायी धातुरुच्यते, अपरशब्देन भूमाववगाढं मूलमुच्यते । वर्णशब्देन ब्राह्मणक्षत्रियादिजीवविशेषवाचिना जीवसामान्यमुच्यते । लोपशब्देन विनष्टं वस्तूच्यते । पूर्वं च अपरं च वर्णश्च लोपश्चेति द्वन्द्वसमासः । 'सर्वो द्वन्द्वो विभाषैकवद्भवती'त्येकवद्भावः । धातुमूलजीवमृतानि वस्तूनि निमित्तीकृत्येत्यर्थः । मेषादिराशिषु चतुर्धा विभक्तेषु प्रथमो भागो धातुः द्वितीयो मूलं तृतीयो जीवः चतुर्थो मृत इति कल्पनं होरेति वाञ्छन्तीत्युक्तं भवति । चतुर्भागस्य होरात्वकथनेन तत्र चतुर्भागे लग्नवद् अंशकल्पनं कर्तव्यमिति द्योत्यते । तद्यथा—एको राशिः नवर्क्षचरणात्मकः । तस्य चतुर्भागः पादत्रययुक्तास्त्रयस्त्रिंशद्घटिका भवन्ति । तत्र[2] नवांशकः पादोनचतुर्नाडिकात्मको भवति । पञ्चांशश्च

१. 'र्धा षोडशध', २. 'तन्नवां' ग. पाठः.

पृथिव्यप्तेजोवाय्वाकाशात्मकः पादोनसप्तनाडिकात्मको भवति। पञ्चांशस्य नवभागः पादोनघटिकात्मको भवति। द्वादशांशकः (सपादैकोन)-पञ्चाशद्विनाडिकायुक्तघटिद्वयात्मकश्च भवेत्। इत्यादिभिर्धात्वादीनां विशेषा वक्तव्या इति वियोन्यादिष्वस्योपयोगाद् दशा द्योत्यते। तस्मादह्नो रात्रेश्च वृद्धिह्रासयोस्त्रैराशिकेन गुलिकानयनं कर्तव्यमित्यपि द्योत्यते। कालनिर्देशमात्रादेव ग्रहस्फुटानामुदयलग्नस्य चानयनं गणितशास्त्रज्ञानात् सेत्स्यति। गुलिकानयनमत्र व्यक्तमुक्तं च। अतो जातकादिनिरूपणस्योपादानसर्वस्वमत्राभिहितं भवति ॥ ३ ॥

अथ जननोपलक्षिते वा प्रश्नोपलक्षिते वा कालावयवे शुभाशुभनिर्देशस्य कर्तव्यत्वात् प्रथमं कालपुरुषस्य देहावयवभूतान् राश्यंशकानुपदिशति —

> कालाङ्गानि वराङ्गमाननमुरो हृत्क्रोडवासोभृतो
> वस्तिर्व्यञ्जनमूरुजानुयुगले जङ्घे ततोऽङ्घ्रिद्वयम् ।
> मेषाश्विप्रथमा नवर्क्षचरणाश्चक्रस्थिता राशयो
> राशिक्षेत्रगृहर्क्षभानि भवनं चैकार्थसम्प्रत्यये ॥ ४ ॥

इति। नवर्क्षचरणाः मेषाश्विप्रथमाः चक्रस्थिताः राशयः वराङ्गादीनि कालाङ्गानि भवन्तीति सम्बन्धः। सप्तविंशतिनक्षत्रेषु द्वादशधा विभक्तेषु एको भागः नवर्क्षचरणात्मको भवति। मेषाश्विप्रथमाः नक्षत्राणां कादाचित्कयोः धनिष्ठादित्वकृत्तिकादित्वयोर्व्युदासाय अश्विप्रथमत्वमुक्तम्। चक्रस्थिताः चक्रं द्विविधं स्थिरचक्रं चरचक्रं च, तत्र स्थिरचक्रं 'प्राच्यादिगृहे क्रियाद्य' इत्यादिना वक्ष्यते। चरचक्रं तु

> "मेषादेः कन्यान्तं सममुदगपमण्डलार्धमपयातम् ।
> तौल्यादेर्मीनान्तं शेषार्धं दक्षिणेनैव ॥"

इत्युक्तस्वरूपमपक्रममण्डलम्। तत्र स्थिरचक्रस्थिता राशयः प्रश्नेष्वारूढज्ञानार्थं गृह्यन्ते। चरचक्रस्थिता राशयः पुनर्जातके प्रश्ने च विलग्नानयनार्थं गृह्यन्ते। राशय इति। वनसेनादिवद् अवयवनिर्वर्त्यार्थत्वेन राशिशब्दः स्वस्मादंशकानां प्राधान्यं व्यनक्ति। अंशकेष्वपि नवर्क्षचरणा इत्युक्त्या नवांशकानां प्राधान्यं ध्वन्यते। एते राशयः

---

१. 'गः। काल' ग. पाठः.

कालपुरुषस्य अङ्गानि। तत्र मेषो वराङ्गं पडायारेभ्यः परस्ताद्भागः। वृषभः तस्य अधः स्थितम् आकण्ठाद्ग्वदनम्। उरस्तदधो यावद्बाह्वन्तरालं मिथुनम्। तदधः स्तनान्तरम् उदरस्योपरि हृदयं कर्कटकः। तस्याधस्तान्नाभेरुपरिभाग उदरं सिंहः। नाभेरधस्ताद् वस्तेरुपरिभागो वासःस्थानं कन्या। लिङ्गनाभ्योर्मध्यादारभ्य लिङ्गमूलावधिप्रदेशो वस्तिशब्देनोच्यते, स तुलाराशिः। लिङ्गनाभ्योर्मध्यप्रदेशे द्विधा विभक्ते तदुपरिभागः कन्याराशिः, तदधोभागस्तुलाराशिरित्युक्तं भवति। लिङ्गमूलादारभ्य गुदावधिर्व्यञ्जनं वृश्चिकराशिः। अयं पुमान इयं स्त्रीति व्यज्यतेऽनेनेति व्यञ्जनम्। गुदादिजानुपर्यन्तावूरू चापराशिः। जानुमण्डलद्वयं मकरराशिः। तदधो गुल्फावधि जङ्घायुगलं कुम्भराशिः तस्याधोभागः पादयुगलं मीनराशिः। इति देहे स्थिरचक्रन्यासः प्रदर्शितः। अङ्गालभनादिभिर्वा इति वक्ष्यमाणनष्टजातकप्रश्नादावस्योपयोगः। राश्यादयः पञ्च शब्दा भवनशब्दश्च एकार्थसम्प्रत्यये एकस्यार्थस्य सम्प्रत्यये अवबोधने वर्तन्ते ॥ ४ ॥

कालाङ्गत्वेन प्रस्तुतानां राशीनां कथंविशेषाज्ञानोपायभूतं मुनिभिः प्रदर्शितमाकारादिकमाह—

मत्स्यौ घटी नृमिथुनं सगदं सवीणं
चापी नरोऽश्वजघनो मकरो मृगास्यः।
तौ(लिः ? ली) ससस्यदहना प्लवगा च कन्या
शेषाः स्वनामसदृशाः स्वचराश्च सर्वे ॥ ५ ॥

इति। अविनाभावसिद्धेनाक्षेपेणात्रान्वयो निर्वहणीयः। मीनो राशिः मत्स्यौ मुखपुच्छप्रतिबद्धमत्स्यद्वितयाकारः। कुम्भराशिः घटी स्कन्धन्यस्तरिक्तघटः पुरुषः। सगदं सवीणं नृमिथुनं गदाहस्तः

---

१. 'हः। तस्य सिंहराशिस्थानस्य कटिभागो नाभिमारभ्य नाभिलिङ्गान्तरालावधिकं वासोबन्धनस्थानं वासोभृच्छब्देनोच्यते।

ओजवीतपुरापिण्डं नाभिजानुनिरोहणम्।
अच्छिद्रं धवलं वासः पुंसां पृच्छे विनिर्जयाम (?)॥

इति वचनान्नाभेर्वासस्थानाभावः सिध्यति तद् वासोभृत्स्थानं कन्याराशिः। तदधोभाग वस्तिस्थानं लिङ्गमूलावधिकं तुलाराशिः ततो लिङ्गादिगुदान्तं स्थानं व्यञ्जनशब्देनोच्यते तद् वृश्चिकराशिः। गुदा' ग. पाठः.

पुरुषः वीणाहस्ता नारी च (मिथुनराशिः) । नवमो राशिः चापी धनुर्धरः अश्वाकाराधश्शरीरार्धः नरः । दशमो राशिः मृगाकारपूर्वार्धो मकराकारापरार्धश्च । सप्तमो राशिः तुलाधरः पुरुषः । षष्ठो राशिः प्लवगता ससस्यदहना करधृतेन सस्येन दहनेन च सहिता कन्यका । शेषाः स्वनामसदृशाः । तत्र प्रथमो मेषाकारः । द्वितीयो वृषभाकारः । चतुर्थः कर्कटाकारः । पञ्चमः सिंहाकारः । अष्टमो वृश्चिकाकारः । सर्वे स्वचराश्च सर्वे मेषादयो द्वादश राशयः स्वस्वाकारसमुचितप्रदेशचारिणः । तथा मेषः दिवा वनचरः रात्रौ ग्रामचरः । तद्वद् वृषभः क्षेत्रचरश्च इत्यादिप्रदेशा नष्टद्रव्यचोरादिस्थानज्ञानार्थमवधार्याः । तत्र मेषराशेः पूर्वस्य मीनराशेः प्रथमग्रहणाद् व्ययराशिना पूर्वजन्मविवेक इति सूचितम् ॥ ५ ॥

उद्दिष्टानां राशीनां राशिसंज्ञस्वामिद्वादशानां नवांशकानां द्वादशांशकानां चाधिपतीनाह

**क्षितिजसितज्ञचन्द्ररविसौम्यसितावनिजाः**
**सुरगुरुसौरिमन्दगुरवश्च गृहांशकपाः ।**
**अजमृगतौलिचन्द्रभवनादि नवांशविधि-**
**र्भवनसमांशकाधिपतयः स्वगृहात् क्रमशः ॥ ६ ॥**

इति । क्षितिजसितज्ञादयो गृहांशकपाः । भवन्तीति शेषः । क्षितिजः मेषराशेर्मेषनवांशकस्य मेषद्वादशांशकस्य चाधिपतिः । सितः वृषभराशेर्वृषभनवांशकस्य वृषभद्वादशांशकस्य चाधिपतिः । इत्याद्यनुसन्धेयम् । तत्राष्टमभवनपर्यन्तमैहिकराशयः । अन्ये पारात्रिकराशयः । ग्रहेष्वपि तथैव द्रष्टव्यम् । नवांशविधिः अजमृगतौलिचन्द्रभवनादि इति सम्बन्धः । मेषराशौ मेषादिचापान्तानां नवांशानां सम्भवाद् वृषभे मकरादिकन्यान्ताः, मिथुने तुलादिमिथुनान्ताः, कर्कटके कर्क्यादिमीनान्ताश्च नवांशका भवेयुः इत्यनुवादः । अतो मेषादिचतुष्के षट्त्रिंशन्नवांशकाः राशेर्नवर्क्षचरणत्वाद् , एको नवांशक एकं नक्षत्रचरणम् । ततः मेषवृषमिथुनकर्कटकनवांशात्मकम् अश्विनीनक्षत्रम् । सिंहाद्यंशचतुष्कं भरणी । चापाद्यंशचतुष्कं कृत्तिका इत्युक्तं भवति । एवं नव नव नक्ष-

१. 'र्याः ॥ उ' ख. ग. पाठः. २. 'तम् । अयं श्लोको नवजातके वर्ण्यः ॥ उ' क. पाठः. ३. 'यम् । नवां' ख. ग. पाठः.

त्राणि षट्त्रिंश(द्भिः ? ता) नवांशकैर्भवन्ति । भवनसमांशकाधिपतयः, द्वादशांशकाधिपतयः स्वगृहात् क्रमशो भवन्ति, स्वं स्वं राशिमारभ्य द्वादशांशका भवन्तीत्यर्थः । मेषे मेषादिमीनान्ताः वृषे वृषादिमेषान्ता इत्यादि । अत्र कालचक्रदशाक्रमोऽपि सूच्यते । क्षितिजाग्रष्टपदानां समासः सुरगुर्वादिचतुर्णां समासः । तेन दक्षिणर्क्षेषु मेषादिमीनान्तं क्रमेण गणनीयं वृश्चिकादिचापान्तं व्युत्क्रमेण गणनीयम् । तदर्थं क्षितिजाग्रष्ट पदच्छेदः कृतः । वामर्क्षेष्वपि चापादिवृश्चिकान्तं क्रमेण गणनीयं मीनादिमेषान्तं व्युत्क्रमेण गणनीयम् इत्युक्तं भवति । तदर्थः सुरगुरुसौरिमन्दगुरवश्चेति चतुर्णां पृथक् समासः । अजमृगतौलिचन्द्रभवनादि नवांशविधिरिति दशापहारः कथितः । मेषत्रिकोणराशीनां मेषादिनवांशाधिपा दशापहर्तारः । वृषत्रिकोणानां मृगादिनवांशाधिपाः, मिथुनत्रिकोणराशीनां तुलादिमिथुनान्तनवांशाधिपाः, कर्किंत्रिकोणराशीनां कर्क्यादिनवांशाधिपा दशापहर्तारः । भवनसमांशकाधिपतय इति । मेषादिमीनान्ते गणिते सति पुनरत्र वृश्चिकादि व्युत्क्रमेण गणना कार्या इत्युक्तं भवति ॥ ६ ॥

त्रिंशांशकानाह —

> **कुजरविजगुरुज्ञशुक्रभागाः**
> **पवनसमीरणकौर्पिजूकलेयाः ।**
> **अयुजि युजि तु ते विपर्ययस्थाः**
> **शशिभवनालिझषान्तमृक्षसन्धिः ॥ ७ ॥**

इति । अयुजि पवनसमीरणकौर्पिजूकलेयाः कुजरविजगुरुज्ञशुक्रभागाः भवन्ति । ओजराशौ पञ्चभागाः प्रथमे कुजस्य, ततः पञ्च शनेः, ततोऽष्टौ गुरोः, ततः सप्त बुधस्य, ततः पञ्च शुक्रस्येत्यर्थः । ते युजि विपर्ययस्थाः युग्मराशौ ते ग्रहांशाः उक्तविपर्ययेण प्रथमपञ्चांशाः शुक्रस्य, ततः सप्त बुधस्य, ततोऽष्टौ गुरोः, ततः पञ्च शनेः, ततः पञ्च कुजस्येति यावत् । अन्यदर्थान्तरं चिन्त्यम् । यस्य त्रिंशांश उदितः तद्वशाद् भवनादिष्ववकाशोऽवगन्तव्यः । कुजरविजयोः शुक्र-

१. -'त् । शशि' ख. ग. पाठः.

स्याप्यल्पोऽवकाशः गुरोरवकाशबाहुल्यं, बुधस्य मध्यमोऽवकाश इति भोजनशयनादीनां स्थानावकाशोऽनेन ज्ञेयः। तथाच कृष्णीये —

"ग्रहभागेष्ववकाशो भोजनविधिशयनमैथुनानि पुनः।
वाच्यो वर्णोत्कर्षो विप्रादीनां पुरोक्तानाम्॥"

इति। तत्र यस्मिन्नङ्गे विरुद्धभूतित्रयं सम्भवति तत्र तथाविधो रोगो वाच्यः। शशिभवनालिझषान्तमृक्षसन्धिर्भवति कर्कटकवृश्चिकमीनानामन्त्यमृक्षयोः राशिनक्षत्रयोः सममवसितत्वाद् ऋक्षसन्धिर्भवति। अतोऽस्मिन् राशिचक्रे त्रयः खण्डाः। अत्रान्तशब्देन यस्यकस्यचिदवसाने वक्तव्ये कर्कटकवृश्चिकमीना निरूपणीया इत्युक्तं भवति। नक्षत्रराश्योर्युगपच्छेद(समा? वसा)नो गण्डान्तसंज्ञः। अन्तशब्देनाशुभत्वं सूचितम्।

"जातो न जीवति नरो मातुरपत्यं भवेत् स कुलहन्ता।
यदि जीवति गण्डान्ते बहुगजतुरगो भवेद् भूपः" ॥ ७ ॥

मषादीनां पारिभाषिकाणि संज्ञान्तराण्याह—

**क्रियताबुरिजितुमकुलीरलेयपार्थोनजूककोप्यर्याख्याः।**
**तौक्षिक आकोकेरो हृद्रोगश्चेत्थसिः क्रमशः॥ ८॥**

मेषादयः क्रमेण क्रियादिसंज्ञा भवन्ति। अत्राष्टानां क्रियादीनां समासः। तौक्षिकादयो व्यस्ताः प्रोक्ताः। तेनायमर्थः सूचितः— आत्माद्यष्टभावानां धर्मादिचतुर्भावसापेक्षत्वम् आत्मनो धर्मसापेक्षत्वं धनस्य प्रवृत्तिसापेक्षत्वं पराक्रमस्यार्थागमसापेक्षत्वं सुखस्य धनव्ययसापेक्षत्वं सुखसिद्धेर्धर्मसापेक्षत्वं शत्रुक्षयस्य प्रवृत्तिसापेक्षत्वं कलत्रसुखस्यार्थागमसापेक्षत्वं मरणरोगपराभवादावर्थनाशसापेक्षत्वम् इति॥ ८॥

एवं चतुर्भिः श्लोकैः राशीनां नामस्वरूपप्रतिपादनं कालपुरुषस्य देहं चोक्त्वा षड्वर्गानाह —

**द्रेक्काणहोरानवभागसंज्ञा-**
**स्त्रिंशांशका द्वादशसंज्ञिताश्च।**
**क्षेत्रं च यद्यस्य स तस्य वर्गो**
**होरेति लग्नं भवनस्य चार्धम्॥ ९॥**

१. 'न्ति॥ एवं', २. 'मरू' ख. ग. पाठः. ३ 'कं' क. पाठः.

इति । द्रेक्काणहोरानवभागसंज्ञाः त्रिंशांशका द्वादशसंज्ञिताश्च क्षेत्रं च एतेषु षट्सु यद् यस्य स तस्य ग्रहस्य वर्गो भवतीति यावत् । होरा इति लग्नं भवनस्य अर्धं च । होरेत्युदयलग्नस्य राश्यर्धस्य च संज्ञा इति यावद् । अत्र कालपुरुषदेहप्रतिपादनानन्तरमुक्तानां षड्वर्गाणां द्रेक्काणादिक्रमेणोक्त्या कालपुरुषस्य मूलाधारादयः षडाधाराः क्रमेण सूचिताः ।

"मूलाधारे दृगाणः स्यात् पितृचिन्ता रविस्तथा ।
स्वाधिष्ठाने तु होरा स्यान्मातृचिन्ता तथा शशी ॥
मणिपूरे नवांशश्च भ्रातृचिन्ता कुजोऽपि च ।
अनाहते च त्रिंशांशो वाणीचिन्ता बुधस्तथा ॥
विशुद्धौ द्वादशांशः स्यात् पुत्रचिन्ता तथा गुरुः ।
आज्ञायां क्षेत्रमुद्दिष्टं जायाचिन्ता सितस्तथा ॥
द्वादशान्ते शनैश्चारी नाशचिन्ता च कीर्त्तिता ।
तत्रस्थैस्तदधीशैश्च बलाबलवशात् फलम् ॥"

इति तत्र दिङ्मात्रमित्यवगन्तव्यम्[1] । तत्र चन्द्रार्कयोस्त्रिंशांशकाभावाद् भौमादीनां होराभावाद् यथासम्भवं (त्या? च्या)द्वित्रिकल्पा ग्रहस्य वर्गा उच्यन्ते । तत्र षड्वर्गाणां वेदाङ्गत्वं प्रदर्शयति द्रेक्काणः पादौ, होरा वक्त्रं, नवभागाः पाणियुगलं, त्रिंशांशकश्चक्षुषी, द्वादशांशका नासापुटं, क्षेत्रं श्रवणयुगलम् इति । अन्यदप्यर्थान्तरमत्र सूचितम् । नवांशका नव प्राणात्मकाः ।

"प्राणोऽपानः समानश्चोदानव्यानौ च वायवः ।
नागः कूर्मश्च कृकलो देवदत्तो धनञ्जयः ॥"

धनञ्जयव्यतिरिक्ता नव प्राणा नवांशकाः । द्वादशांशकास्तु मनोबुद्धीन्द्रियदशकात्मकाः । नवभिः प्राणैर्द्वादशभिरिन्द्रियैरपि एकविंशतिविधं सूक्ष्मशरीरमुत्पद्यते । तथाचोक्तं भगवत्पादाचार्येण —

"इह तावदक्षदशकं मनसा सह बुद्धितत्त्वमथ वायुगणः ।
इति लिङ्गमेतदमुना पुरुषः सह सङ्गतो भवति जीवः ॥"

---

१. 'च उद', २. 'व्यम् ॥ गोजा' ख. ग. पाठः.

इति । स्थूलशरीरं तु त्वगसृङ्मांसमेदोऽस्थिमज्जाशुक्रमयं तद्राशिसंज्ञम् इति । तत्र जातके लग्नराशेरर्थं फलम् अर्धं चन्द्रस्य प्रश्नोऽप्युदयारूढयोस्तद्वत् । अतः लग्नचन्द्रयोर्बलवतः षड्वर्गफलं होराशास्त्रेण निरूपणीयमिति सूचितम् ॥ ९ ॥

गोजाश्विकर्किमिथुनाः समृगा निशाख्याः
पृष्ठोदया विमिथुनाः कथितास्त एव ।
शीर्षोदया दिनबलाश्च भवन्ति शेषा
लग्नं समेत्युभयतः पृथुरोमयुग्मम् ॥ १० ॥

समृगा गोजाश्विकर्किमिथुना निशाख्याः कथिता इत्यन्वयः । विमिथुनास्त एव पृष्ठोदया इति सम्बन्धः । शेषाः शीर्षोदयाः दिनबलाश्च भवन्ति । तत्र विशेषमाह— पृथुरोमयुग्मम् उभयतो लग्नं समेति मुखपुच्छप्रतिबद्धत्वात् । अतो मीनराशिरुभयोदयः । अत्रान्यदप्यर्थान्तरं सूचितम् । निशाख्या इत्युक्तत्वान्निशापतेरप्येते राशयो भवन्ति । दिनबला इत्युक्तत्वाद् दिनपते राशय इत्युक्तम् । तथा चोक्तं—

"सिंहः कन्या तुलाली च कुम्भान्त्यौ सूर्यराशयः ।
अन्ये तु राशयश्चान्द्रा धुनिशाराशयश्च ते ॥"

निशाराशयो निशाफलदाः दिनराशयो दिवाफलदाः । पृष्ठोदयाः अशुभदाः, शीर्षोदयाः शुभदाः, इत्युक्तम् । तथा च कृष्णीये —

"पृष्ठोदयेषु नित्यमशुभं मूर्धोदयेषु शुभमुक्तम् ।
उभयोदये विमिश्रं ग्रहरहितेभ्यः फलं वाच्यम् ॥"

इति । पृष्ठोदये पापसंयुतेऽत्यन्तमशुभत्वं शुभसम्बन्धे मध्यमत्वं तद्विपरीतं शीर्षोदयेषु वक्तव्यम् । पृष्ठे उदयो येषां ते पृष्ठोदयाः चिरेण शुभफलदा इत्यर्थः । अन्यथा शीर्षोदयाः । पृष्ठोदयस्थानां ग्रहाणां राशिषु दशासु च पृष्ठे फलोदयः, शीर्षोदयस्थानामादौ । उभयोदयस्थानां मध्ये फलोदयः । वक्ष्यति च — 'पृष्ठोभयकोदयर्क्षगाः स्वान्त्यान्तःप्रथमेषु पाकदा' इति ॥ १० ॥

१. 'त्यन्वयः । शे' क. ग. पाठः. २. 'यः ॥ अन्यम' ख. ग. पाठः.

अन्यमपि राशिविषयं विशेषमाह —

क्रूरः सौम्यः पुरुषवनिते ते चरागद्विदेहाः
प्रागादीशाः क्रियवृषनृयुक्कर्कटाः सत्रिकोणाः ।
मार्तण्डेन्द्वोरयुजि समभे चन्द्रभान्वोश्च होरे
द्रेक्काणाः स्युः स्वभवनसुतत्रित्रिकोणाधिपानाम् ॥ ११ ॥

इति । क्रूरः सौम्यः ओजराशयः क्रूराः युग्मराशयः सौम्याः । पुरुषवनिते ओजराशयः पुरुषाः युग्मराशयः स्त्रियः । क्रूरः सौम्य इत्यत्र जन्मना स्वाभाविकं क्रूरत्वं सौम्यत्वं च । मेषसिंहकुम्भा निसर्गतः क्रूराः । मिथुनतुलाचापधराः क्रूरेषु सौम्याः । वृषभझषौ निसर्गसौम्यौ । अन्ये सौम्येषु क्रूराः । क्रूरसौम्याश्रितानामपि क्रूरत्वं सौम्यत्वं च भवति। राश्यधिपानां बलहीनत्वे राशयः फलदा भवन्ति । अनेन ओजराशिषु जाताः क्रूरा भवन्ति, युग्मराशिषु जाताः पुरुषाः सौम्या भवन्ति । तथाच सारावल्याम् —"ओजेषूग्राः पुरुषाः सौम्या युग्मेषु सर्वभवनेषु" । ओजराशिषु द्रव्याण्यपि रूक्षाणि युग्मराशौ द्रव्याणि सौम्यानि । ओजराशिषु विषमसंख्यं मिथुनकर्म युग्मराशिषु समसंख्यम् । तथाच कृष्णीये —

"विषमेषु ग्रहराशिषु मैथुनमेकं द्विवारमितरेषु ।"

किं बहुना सर्वपदार्थानां विषमराशिषु क्रूरत्वं समराशिषु सौम्यत्वं च वक्तव्यम् । ओजराशिषु जाताः सत्त्वादिगुणयुताः युग्मराशिषु जाताश्चापल्यादिस्त्रीगुणयुताः । ओजराशिषु ग्रहबहुत्वे पौरुषयुक्तो भवति । विपरीते विपरीतम् । अस्योपयोगो जातकेषु जन्मलग्नराश्योस्तदधिपस्थितराश्योश्च ओजयुग्मत्वमवगत्य जातानां क्रूरसौम्यत्वं पुरुषवनितात्वं च निर्णेतव्यम् । ते च राशयः चरागद्विदेहाः चरस्थिरोभयाश्च भवन्ति । पुनरपि तथैव क्रमः । अतो मेषकर्कटतुलामकराः चरा इत्यादि । चरराशिषु जन्मल(ग्न। ? ग्ने) तदीशौ चरस्थौ चेत् जातोऽपि सञ्चारशीलः । स्थिरराशिगताः सर्वे चेत् स्थितिशीलः । उभयराशिषु मिश्रस्वभावः । प्रश्नादावपि चरराशौ चरभूतं

१. 'यः । ते चरागद्वि' ख. ग. पाठः. २. 'रा', ३. 'रा उभ' क. पाठः. ४. 'दि । सत्रि' ख. ग. पाठः.

फलं स्थिरराशौ स्थिरम् उभये मिश्रमिति । तथाच भट्टोत्पलः —

"स्थिरराशौ लग्नगते स्थानप्राप्तिं वदेन्न गमनं च ।
रोगोपशमो नाशो द्रव्याणां स्यात् पराभवो नात्र ॥
चरराशौ विपरीतं मिश्रं वाच्यं द्विमूर्त्युदये ।
स्थिरवत् प्रथमेऽर्धे स्यादपरं चरराशिवत् सर्वम् ॥"

इति । धातुमूलजीवाश्चरादिभिरूह्याः । चरो धातुः धातोर्नहि स्थिरवासः, न गच्छतीत्यगः स्थिराणि मूलद्रव्याणि, द्विदेहाः देहशब्देन जीव उक्तः इति । सत्रिकोणाः क्रियवृषनृयुक्कर्कटाः प्रागादीनां दिशामीशा भवन्ति । अनेन दिक्परिज्ञानं प्रयोजनम् । ते राशयो बलवन्तश्चेत् तेषु दिक्षु कार्यादिलब्धिः । अयुजि होरे मार्तण्डेन्द्वोः ओजराशौ राश्यर्धरूपा होरा प्रथमा सूर्यस्य द्वितीया चन्द्रस्य । समभे चन्द्रभान्वोश्च समराशौ प्रथमाहोरा चन्द्रस्य द्वितीया सूर्यस्य[1] । अधिपतिबलसंपूर्तावेव होरायाः फलत्वमन्यथा विफलत्वं, तदर्थं मार्तण्डेन्द्वोरिति सम्बन्धार्थे षष्ठी । द्रेकाणाः स्वभवनसुतत्रित्रिकोणाधिपानां स्युः राशित्रिभागरूपेषु द्रेकाणेषु प्रथमस्तद्राशिपतिरस्य[2] द्वितीयः पञ्चमाधिपस्य तृतीयो नवमाधिपस्य इति यावत् । अन्यथान्ये व्याचक्षते । एकस्मिन् राशौ नवांशकवशात् स्वभवनसुतत्रित्रिकोणाधिपानामित्युक्ताः । कथमिति चेद् एकस्मिन् राशौ प्रथमपञ्चमन(वां ? वमां)शाधिपानां द्रेकाणाः । यथा — मेषे कुजरविगुरूणां, वृषे शनिसितबुधानाम् इत्यादि । तथाच कृष्णीये—

"क्षितिसुतरविगुरुशौरा भृगुजबुधौ भार्गवश्च रवितनयः ।
बुधचन्द्ररुधिरजीवा द्रेकाणगणेश्वराः प्रोक्ताः ॥"

इति । द्रेकाणाः स्युरिति फलदानशक्ता भवेयुरित्युक्तम् । प्रश्नादावपि —

"द्रेकाणसदृशश्चोरो लग्नांशसदृशं धनम् ।"

इति ॥ ११ ॥

होराद्रेकाणयोः पक्षान्तरमाह—

**केचित्तु होरां प्रथमां भपस्य**
**वाञ्छन्ति लाभाधिपतेर्द्वितीयाम् ।**

---

१. 'न्ति । अयु' क. ख. पाठः. २. 'महोरा सू' ख. पाठः. ३. 'स्य । द्रे', ४. 'तृ ॥ हो' ख. ग. पाठः.

द्रेक्काणसंज्ञामपि वर्णयन्ति
स्वद्वादशैकादशराशिपानाम् ॥ १२ ॥

इति । केचित्तु प्रथमां होरां भपस्य वाञ्छन्ति । भपो राश्य-धिपः । द्वितीयां लाभाधिपतेः । चन्द्रार्कयोर्दौर्बल्ये कस्मिंश्चिद् विप-र्ययं विधिर्निरूपणीयः । प्रथमोक्तहोराविधिर्जातके, पुनरुक्तः प्रश्ने इति वाचा(र्य ? यो)क्तम् । तथाचोक्तं कैश्चित् —

"रवीन्द्वोर्विषमे चन्द्ररव्योश्चात्र समे क्रमात् ।
होरा स्याल्लग्नपस्याद्या द्वितीया लाभपस्य तु ॥
आद्या तु जातके प्रोक्ता द्वितीया प्रश्नकर्मणि ।"

इति । द्रेक्काणसंज्ञामपि[2] वर्णयन्ति स्वद्वादशैकादशराशिपानाम्, अत्र कल्पिमित्यध्याहर्तव्यम् । प्रथमद्रेक्काणस्तद्राश्यधिपस्य, द्वादशस्थाना-धिपस्य द्वितीयः, एकादशस्थानाधिपस्य तृतीयः । अत्र द्रेक्काणविधि-स्त्रिप्रकारः । द्रेक्काणाः स्युः स्वभवनसुतत्रित्रिकोणाधिपानामित्येकः । चरागद्विदेहा इत्युक्तक्रमेण त्रिकोणगतचरराशिपतेः प्रथमद्रेक्काणः, स्थिरराशिपतेर्द्वितीयः, उभयराशिपतेस्तृतीय इति द्वितीयः प्रकारः । द्रेक्काणसंज्ञामपि वर्णयन्तीत्यादिनोक्तस्तृतीयः । केचित्त्वित्यत्र तुश-ब्देन विषयभेदोऽस्तीति सूचितम् । आद्यः पक्षो जातविधाने द्वितीयो जातकविधाने तृतीयः प्रश्ने । आचार्यस्य पूर्वोक्त एवेष्टः ॥ १२ ॥

राशीनां ग्रहवशेन विशेषमाह—

अजवृषभमृगाङ्गनाकुलीरा
झषवणिजौ च दिवाकरादितुङ्गाः ।
दशशिखिमनुयुक्तिथीन्द्रियांशै-
स्त्रिनवकविंशतिभिश्च तेऽस्तनीचाः ॥ १३ ॥

इति । अजवृष(भ)मृगाङ्गनाकुलीरा झषवणिजौ च दिवाकरादि-तुङ्गा भवन्ति । दिवाकरस्य मेषस्तुङ्गः चन्द्रस्य वृष इत्यादि । अत्युच्च-भागानाह—दशशिखिमनुयुक्तिथीन्द्रियांशैस्त्रिनवकविंशतिभिश्च इति ।

१. 'तेः । द्रेक्का' ख. ग. पाठः. २. 'पि कल्पितमपि स्व', ३. 'नां वर्णयन्ति । अ' क. पाठः. ४. 'हार्यम्, ५. 'यः ॥ अथ राशी' ख. ग. पाठः.

तत्रापि तुङ्गा[1] इत्यध्याहार्यम्[2] । तत्र मेषे दशभिरंशकैस्तुङ्गो दिवाकर इत्यादि योजनीयम् । तेऽस्तनीचाः ते ग्रहाः अस्तं नीचं येषां तेऽस्तनीचाः । उच्चानां सप्तमराशयो नीचाः । तेषां दशाद्यंशा अतिनीचाश्चेत्युक्तं भवति । अत्र अजवृषभादि पञ्च राशय एकेन पदेनोक्ताः । ततः पञ्चसु ग्रहेषु तुङ्गगतेषु जातो दिव्यो भवतीति सूचितम् । तथाच कृष्णीये —

"सुखिनः प्रकृष्टकार्या राजप्रतिरूपकाश्च राजानः ।
एकद्वित्रिचतुर्भिर्जायन्ते स्वोच्चगैरतःपरं दिव्याः ॥"

इति ॥ १३ ॥

उच्चोपदेशानन्तरमुच्चतुल्यफलान्[3] वर्गोत्तमानाह —

**वर्गोत्तमाश्चरगृहादिषु पूर्वमध्य-**
**पर्यन्ततः सुशुभदा नवभागसंज्ञाः ।**
**सिंहो वृषः प्रथमषष्ठहयाङ्गतौलि-**
**कुम्भास्त्रिकोणभवनानि भवन्ति सूर्यात् ॥ १४ ॥**

इति । चरगृहादिषु पूर्वमध्यपर्यन्ततः नवभागसंज्ञाः वर्गोत्तमा भवन्ति । सुशुभदाः सुतरां शुभदाः, शत्रुनीचाद्यंशत्वेऽपि वर्गोत्तमानां शुभदत्वमस्तीत्युक्तं भवति । तथाच स्वयमेव वक्ष्यति — 'शुभं वर्गोत्तमे जन्म' इति,

"वर्गोत्तमस्वपरगेषु शुभं यदुक्तं तत्पुष्टमध्यलघुताऽशुभमुत्क्रमेण"

इति च । मेषे मेषनवांशः वृषे वृषनवांशः इत्यादि । नवभागसंज्ञाः सुशुभदा इत्युक्तत्वाद् द्वादशांशाः शुभदा इति तर्कणीयम् । तथाच सारावल्यां —

"वर्गोत्तमा नवांशास्तथादिमध्यान्तगाश्चराद्येषु ।
सूतेः[4] कुलमुख्यकरा द्वादशभागाः स्वराश्याद्याः ॥"

इति । मूलत्रिकोणानाह[4] — सिंहादयः सूर्यात् त्रिकोणभवनानि भवन्ति । सिंहस्य रवेः क्षेत्रत्वं त्रिकोणत्वं च, वृषभस्य चन्द्रस्य उच्चत्वं

१. 'ङ्गशब्दोऽध्या', २. 'र्यः ।' ख. पाठः. ३. 'ति ॥ उच्चो' ख., 'ति ॥वर्गो' ग. पाठः. ४. 'नि । मूल' ख. ग. पाठः ५. 'तेः' क. पाठः.

त्रिकोणत्वं च, कन्यायां बुधस्य क्षेत्रत्वमुच्चत्वं त्रिकोणत्वं च, इत्यादि । (ते)षु विशेषमाह विद्यामाधवः —

"सिंहे विंशतिरादितो गवि परे सर्वेंऽशकास्तुङ्गतो
मेषे द्वादश पञ्च योषिति परे तुङ्गाद्धयाङ्के दश ।
जूके पञ्च घटे तु विंशतिरमी मूलत्रिकोणाह्वयाः
सूर्यादेः क्रमशो ग्रहस्य कथिताः शेषाः स्वराश्यंशकाः ॥"

इति । अत्र सिंहो वृष इति द्वे पदे । अन्यत् समस्तम् । तेन चन्द्रादित्यप्राधान्यमुक्तम् । त्रिकोणभवनानि भवन्ति सूर्यादिति वचनात् त्रिकोणराशीनां स्वक्षेत्रेभ्यः प्राधान्यं सूचितम् ॥ १४ ॥

राशीनां प्रश्नादिकालविषयं विशेषमाह —

**होरादयस्तनुकुटुम्बसहोत्थबन्धु-**
**पुत्रारिपत्निमरणानि शुभास्पदायाः ।**
**रिःफाख्यमित्युपचयान्यरिकर्मलाभ-**
**दुश्चिक्यसंज्ञितगृहाणि न नित्यमेके ॥ १५ ॥**

इति । होरादयः राशयः तनुकुटुम्बसहोत्थबन्धुपुत्रारिपत्निमरणानि शुभास्पदायाः रिःफाख्यमिति भवन्ति । एतैर्द्वादशभावैः शरीरिणां प्रश्नजातकेषु समस्तपदार्थश्चिन्त्येत । ततः सम्यगविज्ञातजन्मकालस्यैव जातकफलं चिन्त्यम् । तथाचोक्तं —

"तन्त्रे सुपरिज्ञाते लग्ने छायाम्बुयन्त्रसंविदिते ।
होरार्थे च सुरूढे नादेष्टुर्भारती वन्ध्या ॥"

इति । श्रीपतिश्चाह — "ज्ञेयोऽत्र प्रथमं हि जन्मसमयश्छायाम्बुयन्त्रैः स्फुटम्" इति । अत्र तनुः शरीरं, कुटुम्बो भरणीयजनः, सहोत्था भ्रातरः, बन्धुशब्देन मातृपितृभागिनेयादिरुच्यते, पुत्राः आत्मजाः । अरिशब्देन शत्रुरोगादिरुच्यते, पत्नी भार्या, मरणशब्देन द्रव्यनाशविपद्रोमपराभवादिरुच्यते, शुभशब्देन भाग्यधर्मादिरुच्यते । आस्पदशब्देनावलम्बः । आयशब्देन सर्वाभीष्टागमः । रिःफशब्देन पापरागादिरुच्यते । इतिशब्देनामी भावा एव सर्वजन्तूनां सर्वपदार्थज्ञापका

१. 'ति ॥ राशीनां प्र', २. 'न्ति । अरिकर्म' ख. ग. पाठः.

इति सूचितम् । किं पुनस्त्रिविधमुक्तं लग्नादारभ्याष्टमपर्यन्तमैहिकराशयः, नवमादारभ्यैकादशपर्यन्तं पारत्रिकराशयः, द्वादशतमः सर्वेषां सुकृतदुष्कृतानां धनानां च व्ययभावत्वान्मोक्षराशिरिति विशेषः । अरिकर्मलाभदुश्चिक्यसंज्ञितगृहाणि उपचयानि भवन्ति । लग्नात् षष्ठदशमैकादशतृतीयराशय उपचयसंज्ञा भवन्ति, शिष्टा अपचयराशयः । यतस्तत्र स्थिता ग्रहा उपचयकराः । अत्र मतान्तरमाह—एके उपचयत्वं न नित्यमिति वदन्ति ।

"अथोपचयसंज्ञा स्यात् त्रिलाभरिपुकर्मणाम् ।
न चेद्भवन्ति ते दृष्टाः पापैः स्वस्वामिशत्रुभिः ॥"

इत्यादिवचनदर्शनादेवमुक्तम् । इदं वराहमिहिराचार्यस्य नाभिप्रेतम् ॥ १५ ॥

लग्नादीनामेव संज्ञान्तराण्याह —

**कल्यस्वविक्रमगृहप्रतिभाक्षतानि**
**चित्तोत्थरन्ध्रगुरुमानभवव्ययानि ।**
**लग्नाच्चतुर्थनिधने चतुरश्रसंज्ञे**
**द्यूनं च सप्तमगृहं दशमर्क्षमाज्ञा ॥ १६ ॥**

इति । होरादय इत्यनुवर्तते । होरादयः कल्यादिसंज्ञावन्तोऽपि भवन्ति । लग्नाद्येकेन पदेनोक्ता अदृश्यभागस्थाः सप्तमादिषड्भागा दृश्यभागस्था इत्युक्तं भवति । 'पर्यायमन्यदुपलभ्य(?) वदेच्च लोकादि'त्युत्तरत्र वक्ष्यति । तस्मादन्यशास्त्रेभ्योऽप्येतेषां पर्याया वेद्याः । लग्नाच्चतुर्थनिधने चतुरश्रसंज्ञे भवतः । तत्र चतुर्थं जननगृहम् अष्टमं परैर्दत्तम् । तत्राष्टमराशिः स्वाधिपतिना युक्तश्चतुर्थराशिर्बलहीनश्चेत् तदा स्वपूर्वभवनं परेषां दत्त्वान्यद् गृहं धनेनादाय तत्र स्थितो भवति । सप्तमगृहं द्यूनं च भवति । दशमर्क्षमाज्ञा च भवति ॥ १६ ॥

पुनः प्रकारान्तरेण लग्नादीनां नामान्तराण्याह —

**कण्टककेन्द्रचतुष्टयसंज्ञाः**
**सप्तमलग्नचतुर्थखभानाम् ।**

---

१. 'या उ' ग. पाठः. २. 'प' क. ग. पाठः. ३. 'रमाह' ख. पाठः. ४. 'न्ति । अत्र' ग. पाठः.

तेषु यथाभिहितेषु बलाढ्याः
कीटनराम्बुचराः पशवश्च ॥ १७ ॥

इति । सप्तमलग्नचतुर्थखभानां कण्टककेन्द्रचतुष्टयसंज्ञा भवन्ति । मप्तमादीनां चतुर्णां कण्टकं केन्द्रं चतुष्टयम् इति तिस्रः संज्ञा भवन्ति । अत्र लग्नादिभावानामुभयत्र संज्ञानिर्देशेन लग्नादिभावानां तत्तत्संज्ञाविषयफलं प्रति प्रत्येकं संज्ञान्तरानपेक्षितया स्वातन्त्र्यं द्योत्यते । यस्य पुरुषस्य जातकं निरूप्यते, तस्य साक्षात्सम्बन्धिनः कल्यादयो भावाः, परम्परया सम्बन्धिनस्तन्वादय इति विशेषद्योतनाय च पृथङ्निर्देशः कृतः । तद्यथा — कल्यः स्वस्थः । "वार्तो निरामयः कल्य उल्लाघो निर्गतो गदाद्" इत्यमरः । रोगारोग्यसुखदुःखाद्यनुभवकृदन्तरात्मा कल्यः सः प्रथमभावः । स्वम् आत्मनो वसनाशनादिसम्पादकं धनं स द्वितीयो भावः । तृतीयो विक्रमः । 'विक्रमस्त्वतिशक्तिता' । चतुर्थो गृहम् आत्मनो भोजनशयनासनाद्यधिकरणं मन्दिरम् । पञ्चमः प्रतिभा तत्तदुचितकार्याकार्यविशेषप्रतिभानम् । षष्ठभावः क्षतं वातपित्तादिनिमित्तो वा अभिघातपतनादिनिमित्तो वा निजागन्तुकभेदाद् द्विविधो व्रणः । सप्तमभावश्चित्तोत्थः वनिताभोगाभिनिवेशः । अष्टमो रन्ध्रम् आधिव्याध्याद्यनिष्टागमः । नवमो गुरुः ऐहिकपारत्रिकसुखोपायोपदेष्टा । दशमो भावो मानश्चित्तसमुन्नतिः । एकादशो भवोऽर्थागमः । द्वादशो व्ययः अर्थव्यय इति यावत् । एते भावा आत्मनः सम्बन्धिनः । तन्वादयस्तु परम्परया सम्बन्धिनः । तत्र मातृपितृशुक्लशोणितोद्भवस्त्वगसृङ्मांसमेदोस्थिमज्जाशुक्लस्वरूपः स्वकीयो देहः । तत्रात्मनः काष्ठाग्निवत् सम्बन्धः प्रसिद्धः स प्रथमभावः । द्वितीयो भावः कुटुम्बं वसनाशनादिप्रदानभरणीयो वर्गः । तृतीयो भ्राता समानोदरः । सहोत्थशब्देन भ्रातृसदृशा वयस्यादयो गृह्यन्ते । चतुर्थो बन्धुः मातुलपितृव्यादयः । पञ्चमः पुत्रः । षष्ठः शत्रुः । सप्तमः पत्नी । अष्टमो मरणं प्राणवियोगावस्था । नवमं शुभं धर्मम् । दशममास्पदं शत्रुभिरपरिभवनीयस्थानम् । एकादशद्वादशाभ्यामायव्ययौ । एषां तन्वादीनां

१. 'दीना', २. 'दीनां', ३. 'म' क. पाठः. ४. 'न्धः स' ग. पाठः. ५. 'म इत्यादि । एषां' क. पाठः. ६. 'गस्थानम् । न', ७. 'एतेषां' ग. पाठः.

परम्परया स्वकीयत्वेन सम्बन्धः । एवं परम्परया सम्बन्धवन्तोऽन्येऽपि भावाः शास्त्रान्तरोक्ता अपि तन्वादिभिः साधर्म्येणोपलक्ष्यन्ते । तथाहि —

"लग्नाद्याः स्युर्भावा मूर्त्तिः कोशो यौधो वाहो मन्त्रः ।
शत्रुर्मार्गोऽथायुर्धर्मो व्यापारश्च प्राप्त्यप्राप्ती ॥
मूर्तिरमत्रं भक्ष्यं भोज्यं भोजयितृभाव(मु ? उ)पदंशः ।
सेचनमन्नं सहभुक् पूर्तिकथा शयनमपि विलग्नाद्याः(?) ॥"[1][2]

इत्यादि । तनुशब्देनात्मशरीरस्वास्थ्यादृष्टस्थानमानसम्बन्धासम्बन्धतत्स्थानवृष्टिनद्यधोजलाशयश्च लक्षिताः । अत्र सप्तमलग्नयोः चतुर्थखभयोरेकत्वेऽपि पृथग्भावः सूचितः । सप्तमलग्नयोः कण्टकसंज्ञा, चतुर्थखभयोः केन्द्रसंज्ञा । सर्वेषां चतुष्टयसंज्ञा[3] । राशीनां बलाबलनिरूपणप्रकारमाहोत्तरार्धेन—यथाभिहितेषु[4] तेषु सप्तमलग्नचतुर्थखभेषु कीटनराम्बुचराः पशवश्च बलाढ्या भवन्तीति । कीटशब्देन दुष्टजातयो लक्ष्यन्ते व(न्ध्य ? न्य)महिषवराहादयः । तेषामस्ते सन्ध्यायां बलं भवति । नरशब्देन तद्विपरीतनराः उदये वीर्यवन्तः । अम्बुचराश्चतुर्थे मध्याह्ने वीर्यवन्तः शशिभृगू च । स्नानव्रतनियमानुष्ठानहोमादिकं चतुर्थभवनादूह्यम् । चतुर्थभवनाधिपः स्थिरराशौ चेत् स्वगृहस्थः कर्मादिकं करोति, चरराशौ विदेशगृहस्थ इति विशेषः । उभयमपि द्रष्टव्यम् । खं दशमं, पशूनां चतुष्पाद्राशीनां दशमे बलमित्युक्तं भवति[5] ॥ १७ ॥

केन्द्रान्तरालराशीनां संज्ञामाह —

**केन्द्रात् परं पणपरं परतश्च तद्व-**
**दापोक्लिमं हिबुकमम्बु सुखं च वेश्म ।**
**जामित्रमस्तभवनं सुतभं त्रिकोणं**
**मेषूरणं दशममत्र च कर्म विद्यात् ॥ १८ ॥**

इति । केन्द्रात् परं पणपरं भवति केन्द्रस्यानन्तरो राशिः पणपर-

१. 'युःस्वान्तं धर्मो' ग. पाठः. २. 'र्तिश्च तथा कथा च शयनमपि ॥', ३. 'ज्ञा । ब', ४. 'षु स' क. पाठः. ५. 'ति । सप्तमे कीटराशिर्बलवान् लग्ने नरराशिर्बलवान् चतुर्थे जलराशिः दशमे चतुष्पाद्राशिरित्युक्तं भवति ॥ १७ ॥' ख. ग. पाठः.

संज्ञो भवति । तद्वद् आपोक्लिमं तद्वत् परत आपोक्लिमं भवति पण-परात् परो राशिरापोक्लिमसंज्ञ इत्यर्थः । केन्द्रपणपरापोक्लिमगतैर्ग्रहैर्बा-ल्ययौवनवार्धकावस्थासु फलं वाच्यम् । तथाच सारावल्यां —

"केन्द्रात् परं पणपरमापोक्लिमसंज्ञितं तयोः परतः ।
बालयुवस्थविरत्वे क्रमेण फलदा ग्रहास्तेषु ॥"

इति । केषाञ्चिद् भावानां प्रसिद्धानि संज्ञान्तराण्याह — वेश्मराशिः हिबुकम् अम्बु सुखं च भवति । अस्तभवनं जामित्रं भवति । सुतभं त्रिकोणं भवति । दशमं मेषूरणं च भवति । अत्र कर्म च त्रियाद् दशमे कर्मेति संज्ञामपि विद्यात् । कर्म विद्यादिति शब्देन ज्ञातव्य प्रवृत्तिं विद्यादिति सूचितम् । चशब्दाद् यज्ञादिकर्म चिन्तनीयम् ॥ १८ ॥

क्रमबलमाह —

**होरा स्वामिगुरुज्ञवीक्षितयुता नान्यैश्च वीर्योत्कटा**
**केन्द्रस्था द्विपदादयोऽह्नि निशि च प्रासे च सन्ध्याद्वयं ।**
**पूर्वार्धे विषयादयः कृतगुणा मानं प्रतीपं ततो**
**दुश्चिक्यं सहजं तपश्च नवमं त्र्याद्यं त्रिकोणं च तत् ॥**

इति । स्वामिगुरुज्ञवीक्षितयुता होरा वीर्योत्कटा भवति स्वामिना गुरुणा बुधेन च वीक्षिता युता वा होरा वीर्योत्कटा भवति । अन्यै-र्नच अन्यैः स्वामिगुरुबुधेतरैः । अत्रान्यशब्देन पापग्रहा गृह्यन्ते । तत्र गुरुज्ञौ भाववृद्धिकरौ । अर्कस्य भावानां क्रौर्यत्वं तनुकुटुम्बादिभावेक-ष्णत्वम् । चन्द्रोऽपि बलिष्ठो भाववृद्धिक(रः) क्षीणश्चेत् प्रकृतिवदनवरत-शोककरः । शुक्रः सर्वत्र औशनसनयफलदः ईक्षणभावनाद्यकश्च । तथा चोक्तं —

"यो यो भावः स्वामिदृष्टो युतो वा
सौम्यैर्वा स्यात् तस्य तस्याभिवृद्धिः ।
पापैरेवं तस्य भावस्य हानि-
र्निर्देष्टव्या जन्मिनां पृच्छतां वा ॥"

"मूर्त्यादिभावनाथाः स्वक्षात् षष्ठाष्टरिःफगा नेष्टाः" इत्यादि च विचि-

१. थैः । केषा', २. 'त्' ॥ १८ ॥', ३. 'रैः । केन्द्र' ख. ग. पाठः.

न्तनीयम् । केन्द्रस्था राशयो वीर्योत्कटा इति शेषः । अत एव पणपरस्थाः मध्यबला आपोक्लिमस्था हीनबला इति च द्रष्टव्यम् । तथा बादरायणः —

"केन्द्रस्थाः स्युरतिबला मध्यबलाः पणपराश्रिता ज्ञेयाः ।
आपोक्लिमगाः सर्वे हीनबला राशयः कथिताः ॥"

इति । द्विपदादयः अह्नि निशि च सन्ध्याद्वये प्राप्ते च वीर्योत्कटा भवन्ति । द्विपाद्राशयः अह्नि चतुष्पाद्राशयो रात्रौ कीटराशयः पूर्वसन्ध्याyाम् अपरसन्ध्यायां च वीर्योत्कटा भवन्तीत्यर्थः[1] । अत्र कीटशब्देन वृश्चिकमीनमकरान्त्यार्धा उक्ताः । पूर्वार्धे मेषादिषट्के विषयादयः पञ्च षट् सप्त अष्ट नव दश च संख्याः कृतगुणाः चतुर्गुणाः मानं राशिप्रमाणं भवतीति शेषः । तत उत्तरार्धे तुलादिषट्के प्रतीपं प्रतिलोमेन दशादयो विषयान्ताः संख्याश्चतुर्गुणाः प्रमाणं भवति । ततो मीनमेषयोर्विंशतिः प्रमाणं, वृषभकुम्भयोश्चतुर्विंशतिरित्याद्युक्तं भवति । ह्रस्वदीर्घादिपरिज्ञाने अस्य प्रमाणस्योपयोगः, नोदयलग्नादौ । सहजं दुश्चिक्यं भवति, नवमं तपश्च भवतीति शेषः । तत् त्र्याद्यं त्रिकोणं च नवमस्य त्रित्रिकोणमिति संज्ञाप्यस्तीति यावत्[2] । अत्र नवमस्थानं विशेषतश्चिन्तनीयमिति सूचितम् । तथाचोक्तं—"सर्वमपहाय चिन्त्यं भाग्यर्क्षं प्राणिनां विशेषेण" इति ॥ १९ ॥

राशीनां[3] वर्णानाह —

**रक्तः श्वेतः शुकतनुनिभः पाटलो धूम्रपाण्डु-**
**श्चित्रः कृष्णः कनकसदृशः पिङ्गलः कर्बुरश्च ।**
**बभ्रुः स्वच्छः प्रथमभवनाद्येषु वर्णाः[4] प्लवत्वं**
**स्वेशाशाख्यं दिनकरयुताद् भाद् द्वितीयं च वेसिः ॥**

इति । मेषो रक्तः वृषः श्वेतः मिथुनः शुकतनुनिभः हरित इत्यादि । प्रथमभवनाद्येषु मेषादिराशिषु वर्णाः रक्तादय इति सम्बन्धः । प्लवत्वं स्वेशाशाख्यं प्लवत्वं दिक्प्रवणत्वं स्वेशाशाख्यं राशीश्वरस्य दिगाख्यम् । ग्रहदिशः 'प्रागाद्या' इति वक्ष्यन्ते । ततो मेषराशिः दक्षिणप्लव

1. 'र्थः । पू', 2. 'त् ॥ १९ ॥' ख. ग. पाठः. 3. 'शिव' ग. पाठः. 4. 'षु वर्णाः मे', 5. 'रदि' क. पाठः.

इत्यादि । स्वजन्मलग्नराशिः प्रश्नराशिर्वा यद्दिक्प्लवो भवति तां दिशं गतो राजाचिरेण रिपून् जयति । तथाच सारावल्यां —

"भवनाधिपैतिदिशातः प्लव इति यवनैः प्रयत्नतः प्रोक्तम् ।
तत्प्लवगो विनिहन्यादचिरेण महीपतिः शत्रून् ॥"

इति । दिनकरयुताद् भाद् द्वितीयं वेसिसंज्ञं च भवति । द्वादशं वासीति चकारात् सूच्यते । एवं राशीनां निसर्गभवाः ग्रहभवाः समयभवाश्च विशेषा उक्ताः ॥ २० ॥

इति होराविवरणे राशिप्रभेदः-प्रथमोऽध्यायः ॥

---

## अथ द्वितीयोऽध्यायः ।

अथ ग्रहाणां नामरूपादिकं विवक्षुः प्रथमं मेषादिराश्यवयविना कालपुरुषेण सम्बन्धं आत्मत्वादिकं तेनाह —

**कालात्मा दिनकृन्मनस्तुहिनगुः सत्त्वं कुजो ज्ञो वचो**
**जीवो ज्ञानसुखे सितश्च मदनो दुःखं दिनेशात्मजः ।**
**राजानौ रविशीतगू क्षितिसुतो नेता कुमारो बुधः**
**सूरिर्दानवपूजितश्च सचिवौ प्रेष्यः सहस्रांशुजः ॥ १ ॥**

इति । दिनकृत् कालात्मा काल[3]पुरुषस्यात्मा आत्मशब्देन देहाधिष्ठितो जीवात्मोच्यते । तुहिनगुः मनः चन्द्रोऽन्तःकरणम् । कुजः सत्त्वम् । सत्त्वशब्देनात्र "अविकारकरं सत्त्वं व्यसनाभ्युदयागमे" इत्युक्तो गुणोऽभिधीयते । वीर्यमिति यावत् । ज्ञः वचः वागिन्द्रियम् । जीवः ज्ञानसुखे ज्ञानं सुखं च । सितश्च शुक्रोऽपि ज्ञानसुखे, किन्तु मदनः कामात्मकश्च । दिनेशात्मजः दुःखम् । आत्मादिभूतेषु ग्रहेषु बलवत्सु जातस्य पुरुषस्यात्मादयोऽपि बलिनो भवन्ति, दुर्बलेषु दुर्बला भवन्ति । आत्मभूतस्य दिनकृतो बलवत्त्वे जातस्यात्मप्रभावो जायते, मनोभूतस्य चन्द्रस्य बलवत्त्वे मनःप्रभावो जायते, प्रभावादेव सर्वकार्यसिद्धिः । आत्ममनसोरितरेतराश्रयत्वात् सूर्याचन्द्रमसोरेकस्य बलवत्त्वादितरस्य बलसिद्धिः । तथाच संहितायाम् —

---

१. 'दि । दिन', २. 'न्वमाह' ख. ग. पाठः. ३. 'लस्या' क. पाठः.

* 'पतिदिनाम प्लव' इति मुद्रितसारावलीपाठः.

"आत्मा सहैति मनसा मन इन्द्रियेण
स्वार्थेन चेन्द्रियगणः क्रम एवमेषः ।
एष शीघ्रः (?) ।
योगोऽयमेव मनसः किमगम्यमस्ति
यस्मिन् मनो व्रजति तत्र गतोऽयमात्मा ॥"

इति । अत्र दिनकृदादयः क्रमेण कथिताः । तेन किञ्चित् प्रयोजनं विद्यते दिनयामाधिपत्यविज्ञानम् । तथाचोक्तं —

"ग्रहा वारनाथादयो वासरस्य
(सृ ? प्र) माणाष्टभागाधिनाथाः क्रमेण ।
तथा यामवत्याश्च तत्पञ्चमाद्या
य आद्यांशनाथः स एवाष्टमस्य ॥"

दिनेशात्मज इति दिनेशशब्देन अन्त्यांशस्य वारेशाधिपत्यमुक्तम् । दुःखस्वरूपस्य शनेर्यामात्मना विद्यमानस्य गुलिकस्यापि दुःखत्वं सूचितम् । मनस्तुहिनगुरिति पुरुषस्य मनःप्राधान्येन सर्वप्रवृत्तिर्दृश्यते । तस्माच्चन्द्रबलक्षयेऽन्यग्र(हेन ? हैर्न) किञ्चित् प्रयोजनं विद्यते । तथाचोक्तं —

"चन्द्रार्कौ बलयुक्तौ कुजादयः प्रोक्तमार्गबलहीनाः ।
शुभफलदास्ते सर्वे दशासु योगेषु सञ्चिन्त्याः ॥"

इति । किन्तु जन्मनि बलवद्ग्रहैरेत एव भावा आत्मादयः शुभा भवन्ति, दुर्बलैर्दुर्बलाः, सौरस्य(?) विपरीतम् । तथाच सारावल्याम् —

"आत्मादयो गगनगैर्बलिभिर्बलवत्तराः ।
दुर्बलैर्दुर्बला ज्ञेया विपरीतं शनेः स्मृतम् ॥"

इति । रविशीतगू राजानौ । रविः राजा, चन्द्रो राज्ञी । क्षितिसुतो नेता दण्डनायकः । बुधः कुमारः । सूरिः दानवपूजितश्च सचिवौ । जीवः कार्यसचिवः, शुक्रो नर्मसचिव इति विशेषः । सहस्रांशुजः प्रेष्यः किङ्करः । जन्मकाले यो ग्रहो बलवान् जातस्तत्समानरूपो भवतीति । राजानौ रविशीतगू इत्यनेनान्यदपि सूचितं —दिनपतिर्निशापतिश्च द्वादशराशीनामधिपौ । तत्र रविः (न्ध ? स्व)स्थानात् सिंहादारभ्य क्रमात्

षड्राश्यधिपतिः। तत्र चन्द्रः (स्व)स्थानादारभ्योत्क्रमेण षड्राश्याधिपतिः। रविचन्द्राभ्यां दत्तमेव कुजादीनां राश्याधिपत्यम्। कुमारभूतस्य बुधस्य रविणा स्वस्थानाद् धनस्थानं दत्तं, पराक्रमसचिवस्य शुक्रस्य तृतीयं पराक्रमस्थानं दत्तम्। सेनापतेः कुजस्य बन्धुस्थानम्। बुद्धिसचिवस्य गुरोर्बुद्धिस्थानम्। प्रेष्यस्य शनेः प्रेष्यस्थानं षष्ठं दत्तम्। एवं चन्द्रेण व्युत्क्रमगणनया धनादिस्थानानि दत्तानि इति। तथाच साग-वल्यां —

"द्वादशमण्डलभगणस्तस्या(र्थे? र्धे) सिंहतो रविर्नाथः।
कर्कटकात् प्रतिलोमं शशभृदथा(स्या? न्येऽ)पि तद्दानात्।
भानोरर्धे विहगैः शूरास्तेजस्विनश्च साहसिकाः।
शशिनो मृदवः सौम्याः सौभाग्ययुताः प्रजायन्ते॥"

इति॥ १॥

अधुना व्यवहारार्थं ग्रहाणां संज्ञां कर्तुकामः शालिनीमाह —

**हेलिः सूर्यश्चन्द्रमाः शीतरश्मि-**
**र्हेमा विद् ज्ञो बोधनश्चेन्दुपुत्रः।**
**आरो वक्रः क्रूरदृक् चावनेयः**
**कोणो मन्दः सूर्यपुत्रोऽसितश्च॥ २॥**

इति। सूर्यो हेलिः। शीतरश्मिः चन्द्रमाः। इन्दुपुत्रः हेमा विद् ज्ञः बोधनश्च, बुधस्य चत्वारि नामान्युक्तानि। आवनेयः आरः वक्रः क्रूरदृक् च, कुजस्य त्रीणि नामान्युक्तानि। सूर्यपुत्रः कोणः मन्दः असितश्च, मन्दस्य त्रीण्युक्तानि॥ २॥

अधुना गुरुशुक्रराहुकेतूनां *संज्ञास्तिलकेनाह —

**जीवोऽङ्गिराः सुरगुरुर्वचसांपतिरिज्यो**
**शुक्रो भृगुर्भृगुसुतः सित आस्फुजिच्च।**
**राहुस्तमोऽगुरसुरश्च शिखीति केतुः**
**पर्यायमन्यदुपलभ्य वदेच्च लोकात्॥ ३॥**

इति। जीव इति गुणवचनं जीवनप्रदत्वात्। अङ्गिरा इत्यनेन विशिष्टगोत्रजात इति। सुरगुरुरित्यनेनाग्न्याधानाद्यश्वमेधपर्यन्तानां

* वसन्ततिलकेनेत्यर्थः।

क्रतूनामुपदेष्टृत्वमुक्तम् । वचसां पतिरित्यनेन शास्त्रव्याख्यानादिव्यवहारपटुत्वं सूचितम् । ज्योक् एतानि गुरोर्गुणनामधेयानि । शुक्रः भृगुः भृगुसुतः सित आस्फुजित् च एतानि शुक्रस्य गुणनामधेयानि । राहुः तम अगुः असुरश्च, राहोस्त्रीण्युक्तानि । केतुः शिखीति केतोः शिखीत्येकं नामोक्तम् । अनुक्तानां नाम्नां ग्राह्यत्वमाह चतुर्थपादेन— अ(न्यत् ? न्यं) पर्यायं च लोकादुपलभ्य वदेत् ॥ ३ ॥

अधुना ग्रहवर्णान् वक्तुकामः शालिनीमाह—

**रक्तश्यामो भास्करो गौर इन्दु-**
**र्नात्युच्चाङ्गो रक्तगौरश्च वक्रः ।**
**दूर्वाश्यामो ज्ञो गुरुर्गौरगात्रः**
**श्यामः शुक्रो भास्करिः कृष्णदेहः ॥ ४ ॥**

इति । भास्करः रक्तश्यामः भवति, उच्चे रक्तः नीचे श्यामः । इन्दुर्गौरः धवलप्रायरक्तः । वक्रो नात्युच्चाङ्गः रक्तगौरश्च नातिदीर्घाङ्गः उच्चे रक्तः नीचे गौरः । ज्ञः दूर्वावर्णः । गुरुर्गौरगात्रः पीतगात्रः । 'गौरोऽरुणे सिते पीत' इत्यमरः । शुक्रः श्यामः । भास्करिः कृष्णदेहः[1] कृष्णवर्णः । वर्णज्ञानप्रयोजनं सर्वग्रहेषु यो बलवांस्तद्वर्णस्तत्काले जातो भवति । प्रश्नकाले चोरादेरपि ॥ ४ ॥

अधुना ग्रहाणां वर्णस्वाम्यं ग्रहदेवताश्च दिक्स्वाम्यं सौम्यपापत्वं च शार्दूलविक्रीडितेनाह—

**वर्णास्ताम्रसितातिरक्तहरितव्यापीतचित्रासिता**
**वह्न्यम्ब्वग्निजकेशवेन्द्रशचिकाः[2] सूर्यादिनाथाः क्रमात् ।**
**प्रागाद्या रविशुक्रलोहिततमस्सौरेन्दुवित्सूरयः**
**क्षीणेन्द्वर्कमहीसुतार्कतनयाः पापा बुधस्तैर्युतः ॥ ५ ॥**

इति । क्रमात् सूर्यादिनाथाः वर्णाः ताम्रसितातिरक्तहरितव्यापीतचित्रासिता इत्यन्वयः । तत्र ताम्रवर्णस्य नाथः सूर्यः, सितस्य श्वेतवर्णस्य नाथश्चन्द्रः, अतिरक्तस्य लोहितस्याङ्गारकः, हरितस्य शुकवर्णस्य बुधः, व्यापीतस्य हरिद्रावर्णस्य जीवः, चित्रो नानावर्ण-

---

१. 'हः ॥ ४ ॥ एवं ग्रहाणां निजशरीरवर्णानुक्त्वा तदाधिदैवतानां वर्णानाह—',
२. 'न्द्रः इत्यादि द्रष्टव्यम् । व्यापीतं विशेषेणापीतम् । वह्न्य' ख. ग. पाठः.

स्तस्य शुक्रः, असितस्य शनैश्चरः। बलवति ग्रहे हृतनष्टादिद्रव्यवर्णज्ञानं जन्मनि प्रश्नकाले चोक्तद्रव्यलाभः। अन्यथा हानिः। ग्रहपूजायां तद्वर्णकुसुमपूजा। वह्न्यम्ब्वग्निजकेशवेन्द्रशचिकाः क्रमेण सूर्यादिनाथा भवन्ति। अत्र सूर्यादीनां नाथा इति सम्बन्धः। आदित्यस्य वह्निर्देवता, चन्द्रस्य अम्बु जलं देवता, कुजस्य अग्निजः सुब्रह्मण्यः, बुधस्य विष्णुः, गुरोरिन्द्रः[1]। 'इदि परमैश्वर्ये' इत्यस्माद्धातोर्निष्पन्नेन परमेश्वर उच्यते। शुक्रस्य शची। शचीशब्देन शक्तिविशेषवाचकेन शक्तिसामान्यलक्षणमाया मूलप्रकृतिरुच्यते। शनेः कः ब्रह्मा[1]। अत्रायं विशेषः—वह्निशब्देनाग्निश्च रुद्रश्च विवक्षितौ। चन्द्रस्याम्ब्वित्युक्तत्वाद् धाराशङ्खाभिषेकादि। तत्र क्रूरक्षेत्रे हरपूजा शुभक्षेत्रे विष्णुपूजा युग्मराशौ दुर्गा इति विशेषः। अग्निज इत्यत्र स्थिरे यदि गृहे षष्ठ्यादिपूजा, चरे यदि स्कन्दालये। केशव इत्यनेन श्रवणपूजादिकम्। इन्द्र इत्यनेनायुष्मत्यादिदूर्वाहोमपर्यन्तं कर्मोक्तं, विप्रपूजादिकं च। जीवस्यापि क्रूरक्षेत्रे हरपूजा शुभक्षेत्रे वैष्णवपूजा युग्मे दुर्गा क्रूरे युग्मे काली चेति। शचीत्यनेन बलहीनः शुक्रो महायक्षीचामुण्ड्यादीनामधिदेवता। क इत्यनेन ब्राह्मणानां प्रेष्यजनानाम् अन्यदेवतानां च ग्रहणम्। तत्र गणहोमादिकं कर्तव्यम्। अत्र प्रयोजनं ग्रहपूजायां ग्रहोक्तदेवतापूजा, तथाच चोराणां नामानयने बलवद्ग्रहोक्तदेवपर्यायनाम, तथाच यात्रायां ग्रहदेवतां सम्पूज्य तद्दिशं यायाद् इति। रविशुक्रलोहिततमःसौरेन्दुवित्सूरयः प्रागाद्याः[2]। प्रागादीनां दिशां नाथा इति यावत्। अत्र पक्षान्तरमाह कृष्णीये—

> "रविकुजसुरगुरुशशितनयभृगुजसौरेन्दुसैंहिकेयानाम्।
> प्रादक्षिण्येन दिशः प्रागाद्याः कल्पिताश्चान्यैः॥"

अयं पक्षो नष्टमुष्ट्यादिषु ग्राह्यः। एतदाचार्यस्य नाभिप्रेतम्। प्रयोजनं केन्द्रस्थे ग्रहे सूतिकागृहे द्वारज्ञानं हृतनष्टादिषु चोरादेर्गमनं च। क्षीणेन्द्वर्कमहीसुतार्कतनयाः पापा भवन्ति पापफलसूचकाः। तैर्युतो[3] बुधश्च। क्षीणेन्दुः, "अमावास्याचतुर्दश्योः क्षीणश्चन्द्रो न

१. 'न्द्रः, शुक्रस्य शची, शनेः' क. ख. पाठः. २. 'द्याः। रवि' ग. पाठः. ३. 'तः। क्षी' ख. ग. पाठः.

सर्वदा" इति चन्द्रस्यापरपक्षावसान एव पापत्वम् । अत एवाक्षीण-चन्द्रः केवलः शुभयुतश्च बुधो गुरुशुक्रौ च शुभा इत्युक्तं भवति । आदित्यस्य स्वोच्चादिषु क्रूरत्वमेव न पापत्वम् । अत्र चन्द्रस्य क्षी-(ण)त्वे पापफलदत्वं न स्वतो जायते । चन्द्रस्य क्षीणत्वे अन्ये ग्रहाः स्थानबलादिबलवन्तोऽपि विबला भवन्ति । तस्मात् सर्वे ग्रहाः शुभानि न दद्युः । तेन हि क्षीणचन्द्रस्य पापत्वम् । चन्द्रादप्यर्कस्य पापत्वं, तस्मादपि कुजस्य, तस्मादपि शनेः । रविकुजौ तु वह्निभूतस्वरूपौ क्षत्रकुलाधिपौ च । तथापि रवेः सत्त्वगुणत्वादत्यन्तं पापत्वं न वि-द्यते । कुजस्य तमोमयत्वात् पापत्वमुच्यते । शनेस्तु तमोमयत्वादन्त्य-जातित्वाद् वायुमयत्वाद् दुःखमयत्वाच्च कुजादपि पापत्वं जायते । यवनपक्षे रवेः क्रूरत्वं कुजशन्योः पापत्वमिति विशेषः । तथाच त-द्वाक्यं—

"क्रूरग्रहोऽर्कः कुजसूर्यजौ तु पापौ शुभाः शुक्रशशाङ्कजीवाः"

इति । अस्य प्रयोजनं तु शुभग्रहैः पापग्रहैश्च बलयुतैः फलभेद उ-च्यते । तथाच सारावल्याम्—

"आचारसत्त्वशुभशौचयुताः सुरूपा-
स्तेजस्विनः कृतविदो द्विजदेवभक्ताः ।
स्रग्वस्त्रगन्धजलभूषणसम्प्रियाश्च
सौम्यग्रहैर्बलयुतैः पुरुषा भवन्ति ॥
लुब्धाः कुकर्मनिरता निजकार्यनिष्ठाः
साधुद्विषः सकलहाश्च तमोभिभूताः ।
क्रूराः सदा वधरता मलिनाः कृतघ्नाः
पापग्रहैर्बलयुतैः पिशुनाः कुरूपाः ॥"

इति ॥ ५ ॥

अधुना ग्रहाणां प्रकृत्यादीनौपच्छन्दसिकेनाह—

**बुधसूर्यसुतौ नपुंसकाख्यौ**
**शशिशुक्रौ युवती नरास्तु शेषाः ।**
**शिखिभूखपयोमरुद्गणानां**
**वशिनो भूमिसुतादयः क्रमेण ॥ ६ ॥**

१. 'ति । पापग्रहाः पापफलसूचकत्वात् पापा इत्युच्यन्ते ॥ ५ ॥', २. 'एवं स्त्रीनपुंसकव्यञ्जकत्वात् तथाप्युच्यन्ते (?)—बुध' ख. ग. पाठः।

इति। बुधसूर्यसुतौ नपुंसकाख्यौ भवतः। शशिशुक्रौ युवती भवतः। शेषास्तु नरा भवन्ति। अत्र उत्तरत्र प्रथमं स्त्रीनिर्देशाद् बुधः स्त्रीनपुंसकमिति शनिः पुन्नपुंसकमिति च सिध्यति। अत्रार्थविशेषो ध्वन्यते— शेषा रविकुजगुरवः पुरुषाः। तेषां मध्येऽर्कः पिता कुजो भ्राता गुरुः सुत इति। तथा शशिशुक्रौ युवती। शशी माता शुक्रो भार्या इति। भूमिसुतादयः क्रमेण शिखिभूखपयोमरुद्गणानां वशिनो भवन्ति। गणशब्दः पादपूरणार्थ इति केनचिद् व्याख्यातम्। तदसत्। यतोऽर्थबहुलं स्वल्पं शास्त्रप्लवं प्रारभ इत्युक्तवताचार्येण न केवलं पादपूरणार्थमयं शब्दः प्रयुक्त इति प्रतिभाति। तस्मादयमर्थोऽत्र गम्यते—गणशब्दः प्रत्येकं योजनीयः। शिखिगणस्तावद् वह्निरूपचक्षुरिन्द्रियपादव्यानमनोमयकोशाः। भूगणस्तु पृथिवीगन्धघ्राणेन्द्रियोपस्थप्राणान्नमयकोशाः। खगणो ह्याकाशशब्दश्रोत्रेन्द्रियवाक्समानानन्दमयकोशाः। पयोगणः खल्वब्रसरसनेन्द्रियपाय्वपानप्राणमयकोशाः। मरुद्गणो वायुस्पर्शत्वगिन्द्रियपाण्युदानविज्ञानमयकोशाः। एवमुपदेशसिद्धोऽर्थः। मेषादिराशीनामपि स्वामिग्रहोक्तान्येव भूतानीत्यवगन्तव्यं, राशीनां भूतानुपदेशात्। नन्वादित्यचन्द्रयोः कस्मान्नोक्तम्। उच्यते। तयोः पूर्वमेवोक्तं वह्न्यम्ब्विति तावेव प्रसिद्धौ। प्रयोजनं "छायां महाभूतकृतां च सर्वेऽभिव्यञ्जयन्ति स्वदशामवाप्य" इति वक्ष्यति। तत्र जलप्रश्ने वर्षप्रश्ने चास्य विनियोगः॥ ६॥

अधुना ग्रहाणां ब्राह्मणादिवर्णाधिपत्यं चोपजातिकयाह—

**विप्रादितः शुक्रगुरू कुजार्कौ**
**शशी बुधश्चेत्यसितोऽन्तराणाम्।**
**चन्द्रार्कजीवा ज्ञसितौ कुजार्की**
**यथाक्रमं सत्त्वरजस्तमांसि॥ ७॥**

इति। शुक्रगुरू कुजार्कौ शशी बुधश्च विप्रादितो, वर्णानामधिपतय इति शेषः। शुक्रगुरू विप्रौ, कुजार्कौ क्षत्रियौ, शशी वैश्यः, बुधः शूद्र

१. 'ति। तथाचोक्तं— 'चन्द्रशुक्रौ स्त्रियौ ज्ञेयाविन्दुजः स्त्रीनपुंसकः। पुमांसः कुजजीवार्का रविजः पुन्नपुंसकः॥ इति। भूमिसु', २. 'न्ति। तत्फलमुन्नतम्। भवन्ती-त्यर्थः॥ ६॥ वि' ख. ग. पाठः.

इति । असितः अन्तराणाम्, अधिपतिरिति शेषः । अन्तरा अनुलोमप्रतिलोमाः । अन्तरशब्देन विप्रक्षत्रियवैश्यशूद्रसङ्करवर्णेषु समीपप्रेष्यत्वमुच्यते । उच्चादिस्थो विप्रक्षत्रियसङ्करवर्णजाः देवपार्षदा(दीन्? दयः) । मध्यबले क्षत्रियवैश्ययोः सङ्करजाः फल्लातप्रभृतयः । नीचारिस्थः शनैश्चरः शूद्रान्तर्भूतजनाश्चण्डालादयः । राहुशिखिनोरपि तथैव । शशी बुधश्च वैश्याधिपौ । शनिः शूद्राधिपतिरिति केचित् । तथाच कृष्णीये —

"विप्रौ भृगुजेन्द्रगुरू क्षत्रियभावौ दिवाकरोर्वीजौ ।
वैश्यौ बुधचन्द्रमसौ शनैश्चरः शूद्रसङ्करकृत् ॥"

इति । शुक्रगुरू इत्यत्र शुक्रो मध्यमब्राह्मणः । गुरुरुत्तमब्राह्मणः । राशिग्रहसंबन्धवशाच्छेषम् । कुजार्कावित्यत्रायं न्यायो द्रष्टव्यः । कुजो माण्डलिकः रविः सार्वभौमः । सामाद्युपायचतुष्ट(यजन? याधिपत्यमप्य)नेन सूचितम् । शुक्रगुर्वोर्विप्रत्वात् सामाधिपत्यमूह्यम् । कुजार्कयोः क्षत्रियाधिपत्वाद् दण्डाधिपत्यमवगन्तव्यम् । शशिनो वैश्यत्वाद् दानाधिपत्यं ज्ञेयम् । बुधशन्योरन्त्यवर्णाधिपत्वाद् भेदाधिपत्यं वेद्यम् । तथाच सङ्ग्रामविजये —

"साम्नो भृग्वङ्गिरसौ दण्डाधीशौ दिवाकरोर्वीजौ ।
दानाधिपः शशाङ्को भेदस्य बुधार्कपुत्रौ च ॥"

इति । ग्रहाणां द्विपदचतुष्पदपक्षिसरीसृपत्वमप्यनेन सूचितम् । विप्रशब्देन द्विपात्प्रवरो हि ब्राह्मणजनः । शुक्रगुरू द्विपदौ, कुजार्कौ चतुष्पदौ, शशी सरीसृपः, बुधासितौ पक्षिणौ इति । तथाच कृष्णीये —

"सूर्यात्मजेन्दुपुत्रौ पक्षिसमानौ सरीसृपश्चन्द्रः ।
द्विपदौ भृगुदेवगुरू चतुष्पदौ भूमिपुत्रार्कौ ॥"

प्रयोजनं हृतनष्टादिषु ग्रहबलाच्चोरादीनां ग्रहोक्तवर्णप्रभवः । एवमुपघाते तद्वर्णोपघातः । चन्द्रार्कजीवाः ज्ञसितौ कुजार्की यथाक्रमं सत्त्वरजस्तमांसि भवन्ति । चन्द्रार्कजीवाः सत्त्वगुणसूचकाः

"सात्त्विकं शौचमास्तिक्यं शुभेकर्मरतिर्मतिः ।"

---

१. 'मा: । चन्द्रार्क' ख ग. पाठः. २. 'क्र' क. ग. पाठः

झसितौ रजोगुणसूचकौ

"राजसं बहुभाषित्वं मानकृद्दम्भमत्सराः ।"

भुजाका तमोगुणसूचकौ

"तामसं भयमज्ञानं निद्रालस्यं विषादिता"

इति । यस्मिन् ग्रहे बलवति जातस्तद्गुणस्वभावो भवति । पूर्वमभिहितं 'सत्त्वं कुज' इति तच्चन्द्रार्कजीवाः पुनः किमित्युक्तम् । उच्यते । इह गुणवचनः सत्त्वशब्दः, तत्र शौर्यपर्यायः, यत् सिंहादीनामप्यस्ति । तथाच —

"एकाकिनि वनवासिन्यराजलक्ष्मण्यनीतिशास्त्रज्ञे ।
सत्त्वोच्छ्रिते मृगपतौ राजशब्दः परिणमति (?) ॥"

अथ गुणस्वरूपं—

"यः सात्त्विकस्तस्य दया स्थिरत्वं
सत्यार्जवं ब्राह्मणदेवभक्तिः ।
रजोधिकः काव्यकलाक्रतुस्त्री-
संसक्तचित्तः पुरुषोऽतिशूरः ॥
तमोधिको वञ्चयिता परेषां
मूर्खोऽलसः क्रोधपरोऽतिनिद्रः ।
मिश्रैर्गुणैर्मिश्रगुणस्वभावा
भवन्ति सर्वेऽपि शरीरभाजः ॥"

इति । अथवा यस्य त्रिंशांशे रविः तद्गुणप्रधानः पुरुषो भवति । तथाच स्वल्पजातके—

"सत्त्वं रजस्तमो वा त्रिंशांशे यस्य भास्करस्तादृक् ।"

इति ॥ ७ ॥

अधुना चन्द्रार्कयोः स्वरूपं तोटकेनाह(?)—

मधुपिङ्गलदृक् चतुरश्रतनुः
पित्तप्रकृतिः सवितात्पकचः ।
तनुवृत्ततनुर्बहुवातकफः
प्राज्ञश्च शशी मृदुवाक् शुभदृक् ॥ ८ ॥

---

१. 'ता ॥ ७ ॥', २. सार्धैस्त्रिभिः श्लोकैर्ग्रहाणां रूपमाह —' ख. ग. पाठः.

इति । सविता एवंविधगुणो भवति । मधुपिङ्गलदृक् मधुवत्पिङ्गले दृशौ यस्य स तथा । चतुरश्रतनुः तिर्यक्प्रसारितभुजयुगलप्रमाणदैर्घ्ययुक्तशरीर इत्यर्थः । पित्तप्रकृतिः

"पित्तं वह्निर्वह्निजं वा यदस्मात् पित्तोद्रिक्तस्तीव्रतृष्णो बुभुक्षुः"
इत्याद्युक्तगुणयुक्तशरीरः । अल्पकचश्च । पुनर्भावफलाध्याये 'शूरः स्तब्ध' इति वक्ष्यति । तदनेन योज्यम् । व्याधिप्रश्नोपयोगार्थमन्योऽर्थो ध्वन्यते । मधुपिङ्गलदृगिति नयनविकलः अल्पकचः नष्टकचः पित्तप्रकृतिः पित्तप्रधानदाहोष्णज्वरादयः (?) इत्यादि । तनुवृत्ततनुरिति । शशी तनुवृत्ततनुर्भवति । ह्रस्ववर्तुलदेहः बहुवातकफः वातश्लेष्ममिश्रप्रकृतिरित्यर्थः । प्राज्ञः विद्वान् । मृदुवाग् अतीक्ष्णवचनः । शुभदृक् शोभननेत्रः । मधुपिङ्गलदृक् शुभदृग् इत्याभ्यां विशेषणाभ्यां चन्द्रार्कयोर्नेत्रगतविशेषव्यञ्जकत्वं द्योत्यते ॥ ८ ॥

क्रूरदृक् तरुणमूर्तिरुदारः
पैत्तिकः सुचपलः कृशमध्यः
श्लिष्टवाक् सततहास्यरुचिर्ज्ञः
पित्तमारुतकफप्रकृतिश्च[3] ॥ ९ ॥

कुज एवंविधगुणो भवति । क्रूरदृक् तरुणमूर्तिः तरुणवयसि फलप्रदत्वं द्योत्यते । उदारः दाता कीर्तिप्रिय इत्यर्थः । पैत्तिकः आग्नेयत्वात् पित्तप्रधान इत्यर्थः । सुचपलः धैर्यरहितः । कृशमध्यः मध्ये कृशः दर्शनीयः । क्रूरं पश्यतीति क्रूरदृक् । अनेन नाम्ना निर्देशात् प्राणिवधरुचिरिति द्योत्यते । अथवा क्रूरा दृगस्येति कुजदृष्टेरशुभत्वं सूचितम् । तथाच सारावल्याम्—

"ह्रस्वः पिङ्गललोचनो दृढवपुर्दीप्ताग्निकान्तिश्चलो
मज्जावानरुणाम्बरः पटुतरः शूरश्च निष्पक्ववाक् ।
हिंस्रः कुञ्चितदीप्तकेशतरुणः पित्तात्मकस्तामस-
श्चण्डः साहसिको विघातकुशलः संलक्षणोरुः कुजः ॥"

इति । ज्ञ एवंगुणः, श्लिष्टवाक् श्लिष्टा श्लेषवती वाग् यस्य स तथा ।

१. 'चः स्वल्पकेशः । शशी' ख. ग. पाठः. २. 'श्च । इति । कु' क. पाठः. ३. 'ते । ज्ञ' ख. ग. पाठः.

व्यङ्ग्यप्रधानवचन इति यावत् । सततहास्यरुचिः हास्यरसकुशलः । पित्तमारुतकफप्रकृतिश्च भूम्यात्मकत्वाद् भूमेश्च शब्दस्पर्शरूपरसगन्धगुणात्मकत्वात् सन्निपातप्रकृतिरित्यर्थः । अत एव योगवाही च भवति ॥९॥

जीवशुक्रयोः स्वरूपं वंशस्थेनाह —

बृहत्तनुः पिङ्गलमूर्धजेक्षणो
बृहस्पतिः श्रेष्ठमतिः कफात्मकः ।
भृगुः सुखी कान्तवपुः सुलोचनः
कफानिलात्मासितवक्रमूर्धजः ॥ १० ॥

इति । बृहस्पतिरेवंगुणो भवति । बृहत्तनुः स्थूलकायः । पिङ्गलमूर्धजेक्षणः पिङ्गलकेशः पिङ्गलनेत्रश्च । काचनेत्र इत्यन्यत्र पठ्यते । नेत्रविकारयुक्त इत्यर्थः । श्रेष्ठमतिः मतिः शास्त्रोपस्कृता बुद्धिः विशिष्टबुद्धिरित्यर्थः । कफात्मकः श्लेष्मप्रधानः[1] । तथाच सारावल्याम्—

"ईषत्पिङ्गललोचनः श्रुतिपरः सिंहाब्दनादः स्थिरः
सत्त्वाढ्यः सुविशुद्धकाञ्चनवपुः पीनोन्नतोरःस्थलः ।
ह्रस्वो धर्मपरः सुनीतिनिपुणो बद्धोत्कटाक्षः क्षमी
व्यापीताम्बरभृत् कफात्मकतनुर्मेदःप्रधानो गुरुः ॥"

इति । भृगुरेवंगुणः । सुखी भोगप्रधानः । कान्तवपुः कमनीयशरीरः । सुलोचनः शोभननेत्रः । कफानिलात्मा श्लेष्मवातप्रकृतिः । असितवक्रमूर्धजः कृष्णकुटिलकेशः[3]। तथाच सारावल्यां —

"चारुर्दीर्घभुजः पृथूरुवदनः शुक्राधिकः कान्तिमान्
कृष्णाकुञ्चितसूक्ष्मलम्बिचिकुरो दूर्वाङ्कुरश्यामलः ।
कामी वातकफाधिकोऽतिसुभगश्चित्राम्बरो राजसो
लीलावान् मतिमान् विशालनयनः स्थूलात्मदेहः सितः॥"

इति ॥ १० ॥

शनैश्चरस्वरूपादिकं वसन्ततिलकेनाह —

मन्दोऽलसः कपिलदृक् कृशदीर्घगात्रः
स्थूलद्विजः परुषरोमकचोऽनिलात्मा ।

---

१. 'ति ॥ ९ ॥ बृ', २. 'नः । भृ', ३. 'शः ॥ १० ॥ म' ख. ग. पाठः.

**स्नाय्वस्थ्यसृक् त्वगथ शुक्रवसे च मज्जा**
**मन्दार्कचन्द्रबुधशुक्रसुरेज्यभौमाः ॥ ११ ॥**

इति । एवंगुणो मन्दः । अलसः मन्दोत्साहः । कपिलदृक् नेत्रविकारी । कृशदीर्घगात्रः कृशं च दीर्घं च गात्रं यस्य स तथा । स्थूलद्विजः विकृतदन्त इत्यर्थः । परुषरोमकचः केशश्मश्र्वादिधारणशील इति यावत् । अनिलात्मा वातप्रकृतिः । किमर्थं रोमशब्दः कचशब्दश्च सह प्रयुक्ताविति चेदुच्यते । कर्णस्याधोभागेऽपि परुषाणि रोमाणि बहूनि सन्ति इति ज्ञापनार्थम् । एतत्सर्वं बलहीनस्य मन्दस्येति मन्यामहे । बलयुतस्यान्यथा दृश्यते ज्ञानसामर्थ्यं श्रेष्ठतादि । राहुर्मन्दसमः । केतुर्भौमसमः । इत्याद्यन्यशास्त्रोक्तमत्रापि द्रष्टव्यम् । उत्तरार्धेन ग्रहाणां शरीरधातुसम्बन्धमाह—मन्दार्कचन्द्रबुधशुक्रसुरेज्यभौमाः स्नायुः अस्थि असृक् त्वक् शुक्रवसे मज्जा च भवन्तीति शेषः । अथशब्दः कात्स्न्र्ये । यथोक्तानां कात्स्न्र्येन अधिपतयः पृथक् पृथग् आत्मीयधातुसारदेहा इत्यर्थः । तत्र मन्दः स्नायुसारः । स्नायुशब्देन ग्रथितसिरासङ्घात उच्यते । सिरालदेह इत्युक्तं भवति । अर्कोऽस्थिसारः । चन्द्रो रुधिरसारः । रुधिरशब्देन मांसमप्याक्षिप्यते । रुधिरस्य जीवनावस्थायामेव सद्भावात् । अतो मृगादिषु मांसविषयविशेषकथनं चन्द्रेणैवेत्यवगन्तव्यम् । बुधस्त्वक्सारः । त्वक्शब्देन रसधातुरेवोच्यते । धात्वग्निना पच्यमानाद्रसधातोरसृग्भावे त्वचः सम्भवात् । तथाच वाहटः— "तत्र सप्त त्वचोऽसृजः । पच्यमानात् प्रजायन्ते क्षीरात् सन्तानिका इव ॥" इति । शुक्रः शुक्रसारः । गुरुर्वसासारः । मेदस्सार इति यावत् । भौमो मज्जासारः । मज्जा नाम अस्थ्नामन्तर्वर्तमानस्तदवष्टम्भकरो धातुः । जन्मनि यो ग्रहो बलवान् तदुक्तधातुसारश्च भवति । अन्यथा तेषु रोगादिना पीडा च । व्याधिप्रश्ने यल्लग्नं यश्च नवांशको लग्ने वर्तते तत्स्वामिनो बलवशादभिहितदोषेण वा पीडा ॥ ११ ॥

---

१. 'तिः । रा' ख. ग. पाठः. २. 'ढुः कुजस' क. ग. पाठः. ३. 'रभ', ४. 'ढुः ॥ ११ ॥ ग्रहाणां प्रदेशादीनाह— दे' ख. ग. पाठः.

अधुना ग्रहाणां स्थानादीन् शार्दूलविक्रीडितेनाह —

**देवाम्ब्वग्निविहारकोशशयनक्षित्युत्कराः स्युः क्रमाद्**
**वस्त्रं स्थूलमभुक्तमग्निकहतं मध्यं दृढं पाटितम् ।**
**ताम्रं स्यान्मणिहेमशुक्तिरजतान्यर्कात्तु मुक्तायसी**
**द्रेक्काणैः शिशिरादयः शशिगुरुज्ञाग्वादिषूद्यत्सु वा ॥**

इति । अर्कात् क्रमाद् देवाम्ब्वग्निविहारकोशशयनक्षित्युत्कराः स्युरित्यन्वयः । अर्कात् । ल्यबलोपे पञ्चमी । अर्कादारभ्येति यावत् । अर्कस्य देवालयं स्थानम् । चन्द्रस्य जलाशयः । तेन समुद्रनदीतटाकवापीकुल्यादिरुक्तः । तदपि चन्द्रबलवशाद् राशिवशाच्च कल्पनीयम् । भौमस्याग्निः स्थानं तेन श्रौतस्मार्ताग्निर्वा पाकशालासु पचनसाधनभूतो वा श्मशानाग्निर्वा । तदपि भौमस्य बलानुसारेण द्रष्टव्यम् । बुधस्य विहारः तेन क्रीडाभवनोद्यानादिरुक्तः । गुरोः कोशगृहम् । शुक्रस्य शयनगृहम् । शनेः क्षित्युत्करः उच्छिष्टक्षेपणस्थानम् । बलवति ग्रहे ग्रहोक्तस्थाने प्रसवज्ञानं हृतनष्टादिषु चोरादेरवस्थानं च प्रयोजनम् । अर्काद् वस्त्रं स्थूलादि । अर्कस्य स्थूलं स्थूलैः सूत्रैर्निर्मितम् । चन्द्रस्य अभुक्तं नववस्त्रम् । कुजबुधयोः अग्निकहतम् । कुजस्याग्निहतम् । दग्धैकदेशमिति यावत् । बुधस्य कहतं जलक्लिन्नं[3] मलिनं छिन्नं वा । तथाच कृष्णीये —

"मलिनच्छिन्नदृढादृढदग्धस्थूलाम्बुधौतजीर्णानि ।
सौम्येन्दुगुरुभुजङ्गमकुजशिखिभृगुसूर्यजानां स्युः ॥"

इति । गुरोर्मध्यम्[4] । नातिनवं नातिजीर्णं च । अतिबलिष्ठे पीतवर्णरूषितपट्टवस्त्रादि । शुक्रस्य दृढं[5] कालान्तरस्थायि चि(न्त्रि ? त्री)कृतपट्टवस्त्रादिकं वा । शनेः पाटितं छिन्नभिन्नजीर्णवस्त्रम् । अतिबलयुतस्य कृष्णवर्णरूषितपट्टवस्त्रमिति । प्रयोजनं सूतिकालवस्त्रज्ञानं हृतनष्टादिचिन्तायां चोरादेर्बलवद्ग्रहवशाद् वस्त्रज्ञानम् । अर्काद् द्रव्याणि । अर्कस्य ताम्रम् । चन्द्रस्य मणयः वैडूर्यादयः । कुजस्य हेम । बुधस्य

१. 'यः। भौमस्याग्निशाला । बुधस्य विहारः बौद्धावासः । बौद्धानां तु विहारोऽस्त्री इत्यमरः गु', २. 'नम् । अ', ३. 'न्नम् । गुरो', ४. 'ध्यम् । शु', ५. 'ढम् । श', ६. 'म्रम् । अर्को' ख. ग. पाठः.

शुक्तिः । यमलरूपाणीति यावत् । गुरोः रजतं रूप्यम् । 'बलवत्त्वे हेम' इति बादरायणवचनम् । शुक्रस्य मुक्ता मौक्तिकम् । शनेः अयः कृष्णलोहः, सीसत्रपुणी च । तथाच बादरायणः—

"अर्कस्य ताम्रं मणयो हिमांशोर्भौमस्य हेमं शशिजस्य शुक्तिः ।
जीवस्य रूप्यं स्वगृहे स्थितस्य तस्यैव हेमं भृगुजस्य मुक्ता ॥
तीक्ष्णांशुदेहप्रभवस्य सीसं कृष्णायसं च प्रवदन्ति तज्ज्ञाः ।"

प्रयोजनं सूतिकागृहे बलवद्ग्रहद्रव्यसत्ता हृतनष्टादिचिन्तायां च तद्द्रव्यनाशपरिज्ञानं तच्छुभदशायां तस्मिन्नुपचयस्थे च तदाप्तिः उक्तविपरीते हानिरिति । अथ ग्रहाणाम् ऋतव उच्यन्ते—शशुरुचज्ञग्वादिषूद्यत्सु शिशिरादयः । आद्यक्षरेण ग्रहाणां नामोच्यते । शादिः शनिः तस्य ऋतुः शिशिरः । शु शुक्रः तस्य वसन्तः । रु रुधिरः तस्य ग्रीष्मः । च चन्द्रः तस्य प्रावृट् । ज्ञः बुधः तस्य शरत् । गु गुरुः तस्य हेमन्तः । वाशब्दो भिन्नक्रमः । द्रेक्काणैर्वा, एषामुदयाभावे द्रेक्काणैः ऋतुः कल्पनीयः । शनिद्रेक्काणेन शिशिरः शुक्रद्रेक्काणेन वसन्तः इत्यादि द्रष्टव्यम् । आदित्यस्य ऋतुं नष्टजातके वक्ष्यति 'ग्रीष्मोऽर्कलग्ने'ति । अतः कुजार्कयोरुदये तद्द्रेक्काणोदये वा ग्रीष्मो वक्तव्यः । अत्र ग्रहाणामृतुविशेषकथनेन अन्येऽपि फलपाकनिर्देशोपयोगिनश्चारविशेषवारताराराशिकालहोरादयोऽप्युपलक्ष्यन्ते । अत्रोक्तानां ग्रहजात्याकारवर्णगुणस्थानवस्त्रद्रव्यकालादीनां ग्रहोदयवद् ग्रहदृष्ट्यापि नष्टमुष्टिचिन्तादिषु बलाबलवशेन विशेषो ज्ञातव्य इति । प्रयोजनं नष्टजातके ऋतुनिर्देशः हृतनष्टादिचिन्तायां च 'अन्तःसाराञ्जनयति रविरि'ति वक्ष्यमाणग्रन्थोक्तग्रहवृक्षाणां तस्मिन् ऋतौ फलकुसुमादिधारणं च द्रष्टव्यम् । अत्राचार्येण ग्रहाणां शाखाधिपत्यं नोक्तम् । उक्तं च स्वल्पजातके—'ऋगथर्वसामयजुषामधिपा गुरुसौम्यभौमसिताः' इति । प्रयोजनं चास्य बलवति शाखाधिपे ब्राह्मणो जातस्तच्छाखापाठको भवति । ब्राह्मणे चोरे ज्ञाते (त)च्छाखाभिज्ञानम्, अनिष्टस्थानस्थे ग्रहे तन्मन्त्रैः शान्तिरिति ॥ १२ ॥

---

१. 'यः । अथ' ख. ग. पाठः. २. 'रसु वा शि', ३. 'र्दीनि श' ग. पाठः. ४. 'क्तानुक्तानां' क. पाठः. ५. 'नि ॥ १२ ॥' ख. ग. पाठः.

ग्रहाणां दृष्टिस्थानानि[1] मञ्जुभाषिण्याह —

**त्रिदशत्रिकोणचतुरश्रसप्तमा-**
**नवलोकयन्ति चरणाभिवृद्धितः ।**
**रविजामरेज्यरुधिराः परे च ये**
**क्रमशो भवन्ति किल वीक्षणेऽधिकाः ॥ १३ ॥**

इति । रविजामरेज्यरुधिराः परे ये ते च त्रिदशत्रिकोणचतुरश्रसप्तमान् चरणाभिवृद्धितोऽवलोकयन्तीत्यन्वयः । त्रिदशस्थानयोश्चतुर्थांशं पश्यन्ति त्रिकोणयोरर्धं पश्यन्ति चतुरश्रयोश्चरणत्रयं पश्यन्ति सप्तमे सर्वं पश्यन्ति । क्रमशः वीक्षणेऽधिका भवन्ति किल । रविजः त्रिदशस्थानयोरपि दर्शनेऽधिकः । सर्वं पश्यतीत्यर्थः । तथा अमरेज्यस्त्रिकोणयोः सर्वं पश्यति । तथा कुजश्चतुरश्रयोः सर्वं पश्यति । सर्वेऽपि सप्तमे सर्वं पश्यन्तीति पूर्वमेवोक्तम् । तथाच यवनेश्वरः —

"जामित्रभे दृष्टिफलं समग्रं स्वपादहीनं चतुरश्रयोश्च ।
त्रिकोणभे[2] दृष्टिफलार्धमाहुर्दुश्चिक्यसंज्ञे दशमे च पादम् ॥"

गार्ग्यश्च विशेषदृष्टिलक्षणमाह —

"दुश्चिक्यदशमानार्किस्त्रिकोणस्थान् बृहस्पतिः ।
चतुर्थाष्टमगान् भौमः शेषाः सप्तमसंस्थितान् ॥"

इति[3] । अर्थादेव ग्रहोऽनुक्तस्थानानि न पश्यति । तथाच यवनः—

"द्वौ पश्चिमौ षष्ठमथ द्वितीयं संस्थानराशेः परिहृत्य राशिम् ।
शेषान् ग्रहः पश्यति सार्वकालमिष्टेषु चैषां विहिता दृगिष्टा ॥"

इति । किलशब्देन ग्रहदृष्टेरनिश्चितत्वं सूचितम् । सर्वप्रश्नजातकविषयेऽवश्यं विचार्यत्वं सूचितम् । अनेन श्लोकेन ग्रहाणां कक्ष्याक्रमः कालहोराधिपत्यं च सूचितम् ॥ १३ ॥

अधुना[4] ग्रहाणां कालनिर्देशं वैतालिकेनाह—

**अयनक्षणवासरर्तवो**
**मासोऽर्धं च समा च भास्करात् ।**

---

१. 'दृष्टिविशेषानाह —' ख. ग. पाठः. २. 'योर्दृष्टि' क. पाठः. ३. 'ति ॥ १३ ॥', ४. 'फलपाकसमयज्ञानार्थं ग्रहाणां कालविशेषानाह —' ख. ग. पाठः.

कटुकलवणतिक्तमिश्रिता
मधुराम्लौ च कषाय इत्यपि ॥ १४ ॥

इति । भास्करादयनक्षणवासरर्तवः मासः अर्थं च समा च भवन्तीत्यन्वयः । आदित्यस्य अयनाख्यः कालांशकः, चन्द्रस्य क्षणाख्यः, कुजस्य वासरः । बुधस्य ऋतुः, गुरोर्मासः, शुक्रस्यार्धमासः, शनैश्वरस्य संवत्सरः । अनेन लग्ननवांशकवशाद् रिपुविजयादिकालनिर्देशः । तथाच मणित्थः—

"वक्तव्यो रिपुविजये गर्भाधाने च कार्यसंयोगे ।
लग्नांशकपतितुल्यः कालो लग्नांशसमसङ्ख्यः ॥"

इति । लग्नाधिपेन लग्नांशकाधिपेन लग्नस्थितेन वा कालो वक्तव्यः । लग्ने यस्य ग्रहस्य नवांशकोदयः स ग्रहस्तस्मान्नवांशकाद् यावत्सङ्ख्ये नवांशे भवति तावत्सङ्ख्योऽयनादिको ग्रहोपलक्षितः कालः शुभाशुभफलस्य पक्तौ वाच्य इति केचित् । उत्तरार्धेन ग्रहाणां रसविशेषानाह— भास्करात् कटुकलवणतिक्तमिश्रिताः मधुराम्लौ च कषायश्च इत्यपि । भास्करस्य कटुको रसः चन्द्रस्य लवणः कुजस्य तिक्तः बुधस्य मिश्रः गुरोर्मधुरः शुक्रस्याम्लः शनैश्वरस्य कषायः । प्रयोजनम् आधानकाले यो ग्रहो बलवान् तदुक्तरसदोहदो गर्भिण्या भवति । जन्मकाले केन्द्रगतग्रहरसाभिरुचिः । भोजनप्रश्नादावुदयारूढवशाद् वा केन्द्रगतैर्ग्रहैर्वा षष्ठस्थानेन वा षड्रसाश्चिन्त्याः । उदयारूढयोर्बलवति राशावोजे रूक्षमन्नं युग्मे सौम्यं 'क्रूरः सौम्य' इत्युक्तत्वात् । जलराशौ जलग्रहदृष्टियोगे चार्द्रम् । तथाचोक्तं—

"शुभोदये भवेन्मिश्रं भोजनं जीवनाश्रयम् ।
शुभराश्युदये तद्वदार्द्रं युग्मजलर्क्षयोः ॥
पापोदये क्रूरलग्ने तूष्णमत्युष्णकारकम् ।"

इति । 'भौमस्यारिविमर्दे'त्यादिश्लोकेनाविकाजाधिपत्यमुक्तं भौमस्य । तस्माद् भौमसम्बन्धे माहिषदध्यादि, चन्द्रसम्बन्धे इक्षुक्षीरविकारादि

१. 'लनिर्देशः ल' क. पाठः. २. 'मः । उ', ३. 'ः ॥ १४ ॥' ख. ग. पाठः.

चिन्त्यम् इत्याद्यूह्यम् । 'निगदितमिह चिन्त्यं सूतिकालेऽपि युक्त्या' इत्युक्तत्वात् सर्वत्र देशजातिदशाकाला निरूपणीयाः । चतुष्पाद्राशौ द्रवा वाच्याः । 'अन्तःसाराणि'त्यनेनोपदेशभेदाश्चिन्त्याः । ते 'चराग-द्विदेहा' इत्युक्तविधिना आसनस्य (म ? च) रादित्वं चिन्त्यम् । 'जीर्णं संस्कृतमित्यनेन गृहविशेषाश्चिन्त्याः । 'प्रागाद्या' इत्यादिना राशिप्लव-वशेन भोक्तुः प्रागाद्यभिमुखत्वमूह्यम् । मधुराम्लाविति समासाद् द्वयो-र्गुरुशुक्रयोर्मधुराम्लसम्बन्धोऽभिप्रेतः ॥ १४ ॥

इति ग्रहयोगेक्षणवशान्निरूप्य वक्तव्यानि नष्टमुष्टिचिन्ताकथनानर्थान्तरकाणि आस्या-कृतिवर्णगुणद्रव्यवस्त्रदेशकालरसादीनि निर्दिश्य ग्रहाणां बलाबलनिरूपणाय शत्रुमित्रोदासी-नविधिं[1] शार्दूलविक्रीडितेनाह —

जीवो जीवबुधौ सितेन्दुतनयौ व्यर्का विभूजाः क्रमाद्
वीन्द्वर्का विकुजेन्द्विनाश्च सुहृदः केषाञ्चिदेवं मतम् ।
सत्योक्ते सुहृदस्त्रिकोणभवनात्स्वात्स्वान्त्यधीधर्मपाः
स्वोच्चायुस्सुखपाश्च लक्षणविधेर्नान्ये विरोधादिति॥१५॥

इति । केषाञ्चिन्मतमेवमिति सम्बन्धः । अर्कस्य जीवः सुहृत् । चन्द्रस्य जीवबुधौ सुहृदौ । कुजस्य[2] सितेन्दुतनयौ सुहृदौ । बुधस्य अर्कादन्ये पञ्च सुहृदः । गुरोर्भौमादन्ये पञ्च सुहृदः । शुक्रस्य च-न्द्रार्कौ विना चत्वारः सुहृदः । शनैश्चरस्य चन्द्रार्ककुजान् विना त्रयः सुहृदः[3] । अन्ये शत्रवः इति । केचिद् यवनेश्वरादयः । तथाच—

"रवेर्गुरुर्मित्रमतोऽन्यथान्ये गुरोस्तु (सौम्यं ? भौमं) परिहृत्य सर्वे ।
चान्द्रेरनर्का भृगुनन्दनस्य त्वर्केन्दुवर्जाः सुहृदः प्रदिष्टाः ॥
भौमस्य शुक्रं शशिजं च मित्रमिन्दोर्बुधं देवगुरुं च विद्यात् ।
सौरस्य मित्राण्यकुजेन्दुसूर्याः शेषान् रिपून् विद्धि नृणां च तद्वत् ॥"

इति । केषाञ्चिन्मतमुपदिश्य स्वाभिमतं सत्याचार्यमतमाह — सत्योक्ते[4] स्वात् त्रिकोणभवनात् स्वान्त्यधीधर्मपाः स्वोच्चायुःसुखपाश्च सुहृदः । लक्षणविधेर्विरोधादन्ये नेत्यन्वयः । 'सिंहो वृष' इत्याद्युक्तलक्षणात् स्वात् त्रिकोणभवनात् स्वान्त्यधीधर्मपाः द्वितीयद्वादशपञ्चमनवमस्था-

1. 'नानुपदिशाति श्लोकद्वयेन — जी' ख. ग. पाठः. 2. 'स्य शुक्रौ सु' क. पाठः. 3. 'दः । इति केषां' ख. ग. पाठः. 4. 'त् स्वात् त्रि' ख. पाठः.

नाधिपतयः, स्वोच्चायुस्सुखपाः निजतुङ्गाष्टमचतुर्थस्थानाधिपतयश्च बन्धवः । अनुक्तस्थानाधिपाः शत्रवः । उक्तानुक्तस्थानाधिपा उदासीना इत्यादि द्रष्टव्यम् । अयं प्रकारश्च स्पष्टमुक्तः केनापि—

"शत्रू मन्दसितौ समः शशिसुतो मित्राणि शेषा रवे-
स्तीक्ष्णांशुर्हिमरश्मिजश्च सुहृदौ शेषाः समाः शीतगोः ।
जीवेन्दूष्णकराः कुजस्य सुहृदो ज्ञोऽरिः सिताकीं समौ
मित्रे सूर्यसितौ बुधस्य हिमगुः शत्रुः समाश्चापरे ॥
सूरेः सौम्यसितावरी रविसुतो मध्यः परे त्वन्यथा
सौम्यार्की सुहृदौ समौ कुजगुरू शुक्रस्य शेषावरी ।
शुक्रज्ञौ सुहृदौ समः सुरगुरुः सौरस्य चान्येऽरयो
ये प्रोक्ताः सुहृदस्त्रिकोणभवनात् तेऽमी मया कीर्तिताः ॥"

अत्र केचिद् यवनमतेन नैसर्गिकभावमङ्गीकृत्य (स ? स्व)मतेन तत्कालबन्धुभावं च परिकल्प्य प्रश्नजातकादिफलं निरूपयन्ति । तथाच कृष्णीये—

"मूलत्रिकोणभवनाच्चतुर्थपञ्चमधनव्ययाष्टमगाः ।
स्वोच्चे धर्मे च गता ग्रहास्तु तात्कालिकाः सुहृदः" ॥ १५ ॥

अथ ग्रहाणां नैसर्गिकमित्रामित्रविभागं शार्दूलविक्रीडितेनाह

**अन्योन्यस्य धनव्ययायसहजव्यापारबन्धुस्थिता-**
**स्तत्काले सुहृदः स्वतुङ्गभवनेऽप्येकेऽरयस्त्वन्यथा ।**
**द्व्येकानुक्तभवान् सुहृत्समरिपून् संचिन्त्य नैसर्गिकां-**
**स्तत्काले च पुनस्तु तानधिसुहृन्मित्रादिभिः कल्पयेत् ॥**

इति । अन्योन्यस्य धनव्ययायसहजव्यापारबन्धुस्थिताः तत्काले स्थितिकाले सुहृदो भवन्ति । एके स्वतुङ्गभवनेऽपि स्थितः सुहृद् भवतीति वदन्ति । ते च यवनेश्वरादयः । तथाच तद्वाक्यं—

"मूलत्रिकोणाद् धनधर्मबन्धुपुत्रव्ययस्थानगता ग्रहेन्द्राः ।
तत्कालमेते सुहृदो भवन्ति स्वोच्चे च यो यस्य विकृष्टवीर्यात् ॥"

इति । अन्यथा अरयः । अन्यत्र स्थिताः शत्रवो भवन्ति । नैसर्गिकान्

१. 'इति द्व' क. ग. पाठः. २. 'र्णात्यादि ॥ १५ ॥'. ३. 'तात्कालिकबन्धुशत्रूदासीनानाह—' ख. ग. पाठः. ४. 'न्ति । अन्य' ग. पाठः.

ध्येकानुक्तभवान् सुहृत्समरिपून् सञ्चिन्त्य पुनस्तत्कालेनाधिसुहृन्मित्रादिभिः कल्पयेत् । ध्येकानुक्तभवान् एकस्य ग्रहस्य द्वे क्षेत्रे विद्येते, तत्र द्वयोरपि बन्धुत्वे बन्धुः । एकस्य बन्धुत्वे उदासीनः । द्वयोरप्यनुक्तत्वे शत्रुः । एवं नैसर्गिकाः सुहृत्समरिपवः सञ्चिन्त्याः । पुनर्नैसर्गिकबन्धोस्तत्कालसुहृत्त्वे अधिबन्धुत्वं, नैसर्गिकसमस्य तत्कालबन्धुत्वे बन्धुत्वं, नैसर्गिकबन्धोस्तत्कालशत्रुत्वे समत्वं, नैसर्गिकसमस्य तत्कालशत्रुत्वे शत्रुत्वं, नैसर्गिकशत्रोस्तत्कालशत्रुत्वेऽधिशत्रुत्वम् इति द्रष्टव्यम् । एवं ग्रहाणां परस्परं पञ्चविधो बन्धः तदीयषड्वर्गाश्रयबलनिरूपणे प्राप्यः । तथोक्तं श्रीपतिना—

"स्वोच्चे रूपं[4] चरणरहितं स्वत्रिकोणे स्वभेऽर्धं
नागांशानां त्रयमधिसुहृद्गेहगे मित्रभेऽङ्घ्रिः ।
अंशोऽष्टानां समगृहगते भूपभागोऽरिगेहे
दन्तांशः स्यादधिरिपुगृहे नीचभे शून्यमेव ॥"

अस्मिञ्छ्लोके किञ्चिदर्थान्तरमपि सूचितम् । लग्नेशाद् धनव्ययादिस्थानेषु यद्भावाधिपतिः स्थितः तद्भावसमृद्धिः । पित्रादिकारकाः सूर्यादयो बलवन्तः शुभदृष्टलग्नेशादुक्तस्थानेषु गताश्चेन्न पित्रादयोऽतिसुहृदो भवन्ति । तद्भावादपि धनव्ययस्थानगताः पित्रादिकारकाश्चेत् पित्रादयोऽतिसुहृदो भवन्ति ॥ १६ ॥

अधुना ग्रहाणां स्थानबलं दिग्बलं च (तोट ? दोधक)केनाह—

**स्वोच्चसुहृत्स्वदृगाणनवांशैः**
**स्थानबलं स्वगृहोपगतैश्च ।**
**दिक्षु बुधाङ्गिरसौ रविभौमौ**
**सूर्यसुतः सितशीतकरौ च[5] ॥ १७ ॥**

इति । स्वोच्चसुहृत्स्वदृगाणनवांशैः स्थानबलं भवति स्वगृहोपगतैश्च स्थानबलम् । स्वगृहोपगतैश्चेत्यनेन स्त्रीराशौ युग्मराशौ स्त्रीग्रहौ चन्द्रशुक्रौ । अन्ये ग्रहाः पुरुषराशावोजराशौ बलवन्त इत्युक्तं भवति । अत्र गतशब्देन राशिगतिवशाद् ग्रहाणां बलभेदोऽस्तीति ज्ञापितम् ।

१. 'कान्', २. 'पून् स', ३. 'न्त्य' ग. पाठः. ४. 'पादं ॥ १६ ॥ स्वोच्च', ५. 'च ॥ बलविशेषमाह—स्वो', ६. 'लम् । अथ ख. ग. पाठः.

आदिद्रेक्काणे स्त्रीग्रहस्य, मध्यद्रेक्काणे नपुंसकग्रहस्य, अन्त्यद्रेक्काणे पुरुषग्रहस्य बलम् । तथाच सारावल्यां —

"स्त्रीपुन्नपुंसकाख्याः क्षेत्रेष्वाद्यान्त्यमध्यसंप्राप्ताः"

इति । अथ दिग्बलमाह — दिक्ष्विति । पूर्वस्यां दिशि उदयकाले बुधाङ्गिरसौ बलवन्तौ, दशमराशौ मध्यन्दिनकाले रविभौमौ बलवन्तौ, पश्चिमस्यां दिश्यस्तमये सूर्यसुतो बलवान्, अर्धरात्रे चतुर्थभावे चन्द्रशुक्रौ बलवन्तौ स्तः । यो ग्रहो यत्र बली तस्मात् सप्तमस्थानस्थो विबलो भवति । मध्ये तदनुपातत ऊह्यम् । तथाच यवनेश्वरः —

"गुर्विन्दवौ पूर्वविलग्नसंस्थौ नभःस्थलस्थौ च दिवाकरारौ ।
सौरोऽस्तगः शुक्रनिशाकरौ तु जले स्थितावभ्यबलौ भवेताम्" ॥१७॥

अधुना ग्रहाणां चेष्टाबलं (नोटकेना ?) ह—

उदगयने रविशीतमयूखौ
वक्रसमागमगाः परिशेषाः ।
विपुलकरा युधि चोत्तरसंस्था-
श्चेष्टितवीर्ययुताः परिकल्प्याः ॥ १८ ॥

इति । उदगयने रविशीतमयूखौ चेष्टितवीर्ययुतौ । परिशेषाः वक्रसमागमगाः चेष्टितवीर्ययुताः परिकल्प्याः । परिशेषाः कुजादयः ताराग्रहाः वक्रं प्राप्ताः, आदित्याद्दूरं गता इति यावत् । समागमं प्राप्ताश्चन्द्रसमीपस्था इति यावत् । युधि उत्तरसंस्थाः विपुलकराश्च चेष्टितवीर्ययुता इति सम्बन्धः । ताराग्रहाणां परस्परं योगो युद्धमित्युच्यते । तत्रोत्तरस्थो जयति दक्षिणस्थः परिभूयते ।

"कदाचिद् दक्षिणस्थोऽ(पि) जयी शुक्रः प्रकीर्त्यते ।
वर्णरश्मिप्रभायोगादूह्यं चैतत् स्वया धिया ॥"

इति द्योतयितुं विपुलकरा इत्युक्तम् । आदित्यस्य विप्रकर्षः चन्द्रस्य सन्निकर्षः परस्परयोगे उत्तरदिक्स्थितिश्च चेष्टितवीर्यमुत्पादयतीति द्रष्टव्यम् ।

---

१. 'स्तकाले सु' क. पाठः. २ 'स्तः ॥ १७ ॥ उ' ख. ग. पाठः. ३. 'प्राप्ता इ', ४. 'प्राप्ता' क. पाठः.

"दिवसकरेणास्तमयः समागमः शीतरश्मिसहितानाम् ।
भौमादीनां युद्धं निगद्यतेऽन्योन्ययुक्तानाम् ॥"

इति संहितायामुक्तम् ॥ १८ ॥

ग्रहाणां कालबलं निसर्गबलं[2] च मालिन्याह—

**निशि शशिकुजसौराः सर्वदा ज्ञोऽह्नि चान्ये**
**बहुलसितगताः स्युः क्रूरसौम्याः क्रमेण ।**
**स्वदिवसमहोरामासगैः कालवीर्यं**
**शकुबुगुशुचसाद्या वृद्धितो वीर्यवन्तः ॥ १९ ॥**

इति । शशिकुजसौराः निशि बलवन्तः स्युः । ज्ञः सर्वदा बलवान् स्यात् । अन्ये अह्नि च बलवन्तः । स्युरिति शेषः । क्रूरसौम्याः बहुलसितगताः क्रमेण बलवन्तः स्युः । क्रमशब्देन प्रतिपदादिपर्वान्तं बलस्य वृद्धिह्रासावुच्येते । क्रूरग्रहाः बहुलपक्षे कृष्णपक्षे सौम्यग्रहाः सितपक्षे[4] । कृष्णपक्षेऽपि चन्द्रमाः क्रूरोऽपि बलवान् भवति । यस्मात् यवनेश्वरः—

"मासे तु शुक्लप्रतिपत्प्रवृत्ते पूर्वं शशी मध्यबलो दशाहे ।
श्रेष्ठो द्वितीयेऽल्पबलस्तृतीये सौम्यैस्तु दृष्टो बलवान् सदैव ॥"

इति । निशि शशिकुजसौरा इत्यत्र क्रमो विवक्षितः । शशी पूर्वभागस्य, तेन तदानीं मृष्टभोजनं सम्भवति । कुजो मध्यभागस्य, तेन तदानीं मारणविद्वेषणादिक्रूरकर्माणि कुर्वन्ति । अन्त्यभागस्य शनैश्चरः । तस्मिन् बलवति सति तदानीमुपासनाशास्त्रार्थचिन्तनादिकं च सम्भवति । हीनबले तदानीमतिनिद्रा । सर्वदा ज्ञः । बुधे बलवति सर्वदा विद्याभ्यासश्चिन्तनीयः । अन्यथा सर्वदा परिहासशीलः द्यूतादिभिर्वा । अन्ये दिवा । तत्र प्रातःकालस्य सूर्यः, तेन तदानीं देववन्दनादिकं सम्भवति, हीनबलेऽध्वगमनं च । मध्यन्दिनस्य जीवः, तेन तदानीं वैश्वदेवातिथिपूजा स्वभोजनं च सम्भवन्ति । अन्त्यभागस्य शुक्रः, तेन तदानीं पुराणकाव्यनाटकादिकं च सम्भवन्ति । अपरपक्षे क्रूरा बलिनः । तेनापरपक्षेऽशुभकर्माणि । सितपक्षे सौम्या बलिनः,

१. 'कुसुतादी', २. 'नैसर्गिकं चाह—' ख. पाठः ३. [illegible] ग. पाठः ४. 'क्षे । स्वदि' ख. ग. पाठः.

तेन तत्र शुभकर्माणि कुर्वन्ति । इति । स्वदिवससमहोरामासगैः काल-वीर्यं भवति । स्वदिवसे स्वसमायां स्वकालहोरायां स्वमासे च । स्वदि-वसः स्ववारः । संवत्सरस्यादौ यस्य प्रथमवारो भवति स तस्य संव-त्सरस्याधिपतिः । मासस्याप्येवमाधिपत्यम् । कालहोरा दिनद्वादशांशात्मिका प्रसिद्धैव । एभिः कालवीर्यं वक्तव्यम् । तथाच श्रीपतिः—

"पादं स्ववर्षेऽथ दलं स्वमासे
दिने स्वकीये चरणोनरूपम् ।
रूपं स्वहोरास्विति कालवीर्य-
मुक्तं हि होरानिपुणैः पुराणैः ॥"

इति । वीर्यशब्देनोत्साहक्रियाशक्तिरुच्यते । अतः स्वदिवससमहोरा-मासेषु ग्रहाणां क्रियाशक्तिः फलप्रदानमिति चात्र व्यज्यते । अत्र 'उदगयने रविशीतमयूखावि'ति प्रथमोक्त्या रविशीतमयूखयोः सविता दशाफलानां पाचयिता चन्द्रमास्तु पोषयिता इत्युक्तन्यायेन कालवि-शेषद्योतकत्वं प्रतिपादितम् । तस्माद् यस्मिन्नृक्षे फलं विवक्षितं लक्षणव-शाद् भवति, तत्र अर्कस्थितिकाले फलपक्तिः । तस्मिन् काले चन्द्रोऽपि तदृक्षं तस्य त्रिकोणं वा यदा प्रविशति, तदा विशेषेण फलव्यक्तिः । तत्र स्ववारश्च सम्भवति चेत् तस्मिन् काले फलपाको दृढो भवति इत्यादि च द्रष्टव्यम् । स्वदिवससमहोरामासगैरित्यत्र स्वशब्देन स्व-कीयाः सर्वेऽपि कालविशेषाः संगृह्यन्ते । तथाहि—आदित्यस्य काल-विशेषांस्तावत् उत्तरायणं सिंहगुरुः सिंहमासः सिंहचन्द्रः कृत्तिकोत्त-रफल्गुन्युत्तराषाढाश्च नक्षत्राणि । तेषु गुरुस्थितिकालः सूर्यस्थितिका-लश्च सूर्यवारः, सिंहराशिः सूर्यकालहोरेत्येवमादयः सूर्यस्य शुभाशुभ-पाकसमयविशेषाः । एवं चन्द्रादीनामपि द्रष्टव्यमिति । एवं फलकाल-ज्ञापनाय कादाचित्कानि स्थानबलदिग्बलचेष्टाबलकालबलानि प्रथम-मुपदिश्यानन्तरं ग्रहाणां निसर्गबलमाह — शरुबुगुशुचसाद्या वृद्धितो वीर्यवन्त इति । शाद्यः शनैश्चर इत्यादिनामाद्यक्षरेण ग्रहा निर्दिश्यन्ते । शनैश्चराद् भौमो बलवान् भौमाद् बुधः बुधाद् गुरुः गुरोः शुक्रः

१. 'स्वस' ख. पाठः. २. 'वासरः' ग. पाठः. ३. 'मं' क. ख. पाठः. ४. 'दशा' क. पाठः. ५. 'णानुरू', ६. 'लदा' ग. पाठः. ७. 'यबलेन' ख. ग. पाठः. ८. 'वासर' ग. पाठः. ९. 'दि द्र' ख. ग. पाठः. १०. 'ष' ख. पाठः. ११. 'व्यम् ।' ग. पाठः.

शुक्राच्चन्द्रः चन्द्रात् सविता इति क्रमेण बलाधिका भवन्ति । एवं ग्रहाणां निसर्गबलं कालबलं चेष्टाबलं दिग्बलं स्थानबलं च सम्यक् प्रदर्शितम् । अनेनैव प्रकारेण योगानां च योगकारकग्रहाणां बलयोगो योगबलाबलज्ञानायावगन्तव्य इति ॥ १९ ॥

इति होराविवरणे[2] ग्रहयोनिभेदो द्वितीयोऽध्यायः ॥

---

## अथ तृतीयोऽध्यायः ।

अथ वियोनिजन्माध्यायो विमृश्यते ।[3] विविधा योनयः वियोनयः । अस्य शास्त्रस्य प्रायेण मानुषजातकविषयत्वात् तद्व्यतिरिक्ताः तिर्यक्स्रोतस ऊर्ध्वस्रोतसश्च वियोनिशब्देन गृह्यन्ते । 'चतुरशीतिसहस्रभवान्त्यजो मनुज' इति योगशास्त्रेषूच्यते । तस्मादेकोनचतुरशीतिसहस्रप्रमाणा वियोनयः सन्ति । तत्र कतिचन तिर्यञ्चः कतिचन स्थावराश्च इति द्वैविध्यं, तिरश्चामपि पशुपक्षिभेदेन द्वैविध्यमिति त्रिविधा वियोनयः । अवान्तरविशेषाणामतिबहुत्वाद् उक्तलक्षणानां त्रिविधानामेव वियोनीनां नष्टमुष्टिचिन्ताद्युपयोगाय स्वरूपकथनलक्षणमत्र संक्षेपेण प्रतिपाद्यते ।

**क्रूरग्रहैः सुबलिभिर्विबलैश्च सौम्यैः**
**क्लीबे चतुष्टयगते तदवेक्षणाद्वा ।**
**चन्द्रोपगद्विरसभागसमानरूपं**
**सत्त्वं वदेद् यदि भवेत् स वियोनिसंज्ञः ॥ १ ॥**

सुबलिभिः क्रूरग्रहैः विबलैः सौम्यैश्च[4] क्लीबे चतुष्टयगते चन्द्रोपगद्विरसभागसमानरूपं सत्त्वं वदेदित्यन्वयः । पापफलसूचकानां बलवत्त्वे शुभग्रहाणामल्पबलत्वे च लग्नकेन्द्रस्य नपुंसकग्रहयोगे च सति चन्द्रस्थितद्वादशांशकसमानरूपं जन्तुविशेषं वदेत् । स वियोनिसंज्ञो भवेद् यदि स चन्द्रद्वादशांशकः वियोनिर्भवति चेत्, तदवेक्षणाद् वा क्लीबग्रहस्यावेक्षणे सति वा । अवेक्षणशब्देन सप्तमस्य चतुष्टयान्तर्भावात् सप्तमव्यतिरिक्तेह दृष्टिर्गृह्यते । सुशब्देन विशब्देन चाक्षरसंख्यया सम्प्रदायसिद्धबलपिण्डानयने प्रसिद्धं षड्भ्योऽधिकस्यातिबलत्वं

---

१. 'न्ति । एतद् ग्रहाणां नैसर्गिकबलम् ॥ १९ ॥' ख. पाठः. २. 'णे द्वि' ख. ग. पाठः. ३. 'वियोनिः विवि' क. ग. पाठः. ४. 'म्यैः क्ली', ५. 'गचन्द्रस्थितद्वादशांशस' ग. पाठः. ६. 'चाप्यक्ष' क., 'द्वय' ग. पाठः.

तन्न्यूनस्य चाल्पबलत्वमत्र द्योत्यते । अत्र पुनः केन्द्रगतानां बलाधिकत्वं पणफरस्थानां मध्यबलत्वमापोक्लिमस्थानामल्पबलत्वं च "कण्टकाद्युपगतेषु निधेया रूपकार्धचरणा निजवीर्ये" इत्याद्याचार्यवचनप्रदर्शितं परिगृह्यत इति सम्प्रदायः । चन्द्रोपगद्विरसभागसमानरूपमित्यनेन सर्वत्र चन्द्रेणैव शरीरलक्षणकथनमिति प्रकाश्यते ॥ १ ॥

अस्मिन् विषये योगान्तरं वैतालिकेनाह—

पापा बलिनः स्वभागगाः
पारक्ये विबलाश्च शोभनाः ।
लग्नं च वियोनिसम्भवं
दृष्ट्वात्रापि वियोनिमादिशेत् ॥ २ ॥

इति । पापाः स्वभागगाः बलिनः, शोभनाः पारक्ये विबलाश्च, लग्नं च वियोनिसम्भवम्, एवं दृष्ट्वा अत्रापि वियोनिमादिशेद् इत्यन्वयः । चन्द्रोपगद्विरसभागसमानरूपं वियोनिमादिशेत् । क्लीबसम्बन्धाभावे विलग्नस्य वियोनित्वे वियोनिजन्म भवतीति भावः ॥ २ ॥

वियोनिजन्तुषु चतुष्पदानामङ्गेषु राशिविभागमुपजातिकयाह—

क्रियः शिरो वक्त्रगले द्वितीयः
पादांसके पृष्ठमुरोऽथ पार्श्वे ।
कुक्षिस्त्वपानोऽङ्घ्र्यथ मेढ्रमुष्कौ
स्फिक् पुच्छमित्याह चतुष्पदाङ्गे ॥ ३ ॥

इति । चतुष्पदाङ्गे इत्याह । शास्त्रमिति शेषः । क्रियः शिरः मेषराशिः चतुष्पदानां शिरो भवति । वक्त्रं गलं च वृषभराशिः । पादावंसौ च मिथुनम् । पृष्ठं कर्कटकः । उरः सिंहः । पार्श्वद्वयं कन्या । कुक्षिस्तुलाराशिः । अपानः वृश्चिकराशिः । अङ्घ्रिद्वयं चापराशिः । मेढ्रमुष्कौ मकरः । स्फिचौ कुम्भः । पुच्छं मीनः । इति शास्त्रमाहेति सम्बन्धः । इतिवाक्याच्चतुष्पदग्रहणमुपलक्षणार्थम् । पक्षिणामप्येवम् ।

१. 'त्वं नत्र' ख. पाठः. २. 'गमि' क. पाठः. ३. 'नं प्र' ग. पाठः. ४. 'र-माह', ५. 'गमाह' ख ग. पाठः. ६. 'इत्या'. ७. 'न्याराशिः । कु', ८. 'रराशिः । स्फिक् कुम्भराशिः । पु' ग. पाठः. ९. 'न्धः ॥ ३ ॥' ख. ग. पाठः.

तेषां पूर्वपादस्थाने पक्षपाली । शेषः सुगमः । प्रयोजनं राश्युपलक्षिताङ्गे वर्णोपघातादिविज्ञानमिति ॥ ३ ॥

लग्नांशकाद् ग्रहयोगेक्षणाद्वा
वर्णान् वदेद् बलयुक्तैर्वियोनौ ।
दृष्ट्या समानां प्रवदेच्च संख्यां
रेखां वदेत् स्मरसंस्थैश्च पृष्ठे ॥ ४ ॥

वियोनौ लग्नांशकाद् ग्रहयोगेक्षणाद्वा वर्णान् वदेदित्यन्वयः । लग्नाधिपस्यांशकनाथस्य च बलाधिक्ये अंशकराशेः वर्णान् वदेत् । तस्याल्पबलत्वे ग्रहयोगेन वा ग्रहावलोकेन वा वर्णा वक्तव्याः । संख्यां दृष्ट्या समानां (प्र)वदेत् वर्णसंख्यां ग्रहाणां दृष्टिभिस्तुल्यां वदेत्। अत्र संख्याशब्देन वियोनिसंख्यां केचिदिच्छन्ति । एको ग्रहः पश्यति चेद् एको वर्णः । द्वौ ग्रहौ पश्यतश्चेद् द्वौ वर्णौ । बहवो ग्रहाः पश्यन्ति चेत् तत्र वियोनौ बहवो वर्णाः सन्तीति वदेत् । बलयुक्तैरिति सर्वत्र योज्यम् । स्मरसंस्थैः पृष्ठे रेखां च वदेत् । स्मरसंस्थैः सप्तमस्थानगतैर्ग्रहैः बलवद्ग्रहवर्णान् वियोनौ पृष्ठे रेखां वदेदित्यर्थः । चकारादुदयस्थैर्ललाटे च ॥ ४ ॥

अथ पक्षिणां लक्षणं वंशस्थेनाह[10] —

खगे दृगाणे बलसंयुतेन वा
ग्रहेण युक्ते चरभांशकोदये ।
बुधांशके वा विहगाः स्थलाम्बुजाः
शनैश्चरेन्द्वीक्षणयोगसम्भवाः ॥ ५ ॥

इति । अत्र पक्षिविषयास्त्रयो योगा उच्यन्ते । बलसंयुतेन ग्रहेण युक्ते इति त्रिष्वपि योजनीयम् । खगद्रेक्काणे मिथुनतुलयोर्मध्यमे सिंहकुम्भयोः प्रथमे । खगे दृगाणे बलसंयुतेन ग्रहेण युक्ते शनैश्चरेन्द्वीक्षणयोगसम्भवाः स्थलाम्बुजाः विहगा भवन्तीत्यन्वयः । चरभांशकोद-

१. 'ष्ठे ॥ इति । वियो', २. 'ग्रजा', ३. 'सा', ४. 'राव' क पाठः. ५. 'नम्र' ग. पाठः. ६. 'स्त्र' क. ग. पाठः. ७. 'त् । ए' ग. पाठः. ८. 'स्थैर्ग्रहैः पृ' ख. पाठः. ९. 'त् ॥ ४ ॥', १०. 'णमाह', ११. 'अथ द्रेक्काणे' ख. ग. पाठः.

येऽपि तथा । बुधार्कावर्केऽपि तथा । शनैश्चरवीक्षणयोगसम्भवाः स्थलपक्षिणः, चन्द्रयोगवीक्षणसम्भवा जलपक्षिण इति विशेषः । तथाच सारावल्यां —

"विहगोदितदृ(गा? का)णे ग्रहेण बलिना युतेऽथ चरभांशे ।
बौधेऽथवा विहगाः स्थलाम्बुजाः शनिशशीक्षणात् क्रमशः ॥"

इति । क्रूरग्रहैरित्यादिवियोनिलक्षणानामनुवर्तमात्र । शनैश्चरयोगेक्षणयोरपि पक्षित्वैकारकत्वमस्ति । 'सूर्यात्मजेन्दुपुत्रौ पक्षिसमानावि'ति वचनात् शनैश्चरवीक्षणयोगाभावे उक्तयोगाभाव इति द्रष्टव्यम् ॥ ५ ॥

स्थावराणां लक्षणं वक्तव्यमिदानीम् —

होरेन्दुसूरिरविभिर्विबलैस्तरूणां
तोयस्थले तरुभवोंऽशकृतः प्रभेदः ।
लग्नाद् ग्रहः स्थलजलर्क्षपतिस्तु यावां-
स्तावन्त एव तरवः स्थलतोयजाताः ॥ ६ ॥

इति । विबलैः होरेन्दुसूरिरविभिः तरूणां जन्म प्रवदेद् इत्यन्वयः । लग्नार्कगुर्विन्दूनां विबलत्वे तरुजन्म स्थावराणां जन्म । तोयस्थले तरुभवः जले स्थले च तरूणामुद्भवो भवति । अंशकृतः प्रभेदः लग्ननवांशको जलनवांशकश्चेज्जलाश्रयवृक्षाः, अन्यथा स्थलाश्रयवृक्षाः । स्थलजलर्क्षपतिः ग्रहः लग्नाद् यावान् स्थलतोयजातास्तावन्त एव तरवो भवन्ति । स्थलराश्यधिपतिर्ग्रहो लग्नराशेर्यावति राशौ वर्तते तावन्तः स्थलवृक्षा भवन्ति । जलराश्यधिपतिश्चेत् तावन्तो जलवृक्षा भवन्ति । अंशकाधिपतिनाप्येवं वक्तव्यम् । लग्नांशकयोर्बलाधिकेन हि सर्वत्र फलनिर्देश इति कृत्वा अंशकृतः प्रभेदः स्थलजलर्क्षपतिरिति च तन्त्रेण निर्दिष्टः । यत्र यत्र ग्रहैः संख्या विवक्ष्यते, तत्र तत्र आयुर्दायोक्ता हरणगुणनादयो यथासम्भवं योजनीयाः । तथाच सारावल्यां — "द्वित्रिगुणत्वं तेषामायुर्दायप्रकारोक्तम्" इति ॥ ६ ॥

१. 'णः शनैश्चरस्य' क. ख. पाठः. २. 'कः । क्रू' ख. ग. पाठः. ३. 'त्वकथनका' क. ग. पाठः. ४. 'मात्मजौ' ग. पाठः. ५. 'भावा' ख. ग. पाठः. ६. 'रूणां ज', ७., ८. 'था', ९. 'म् । शे' ग. पाठः.

वृक्षविशेषनिर्देशप्रकारं मन्दाक्रान्तयाह[1] —

अन्तस्साराञ् जनयति रविर्दुर्भगान् सूर्यसूनुः
क्षीरोपेतांस्तुहिनकिरणः कण्टकाढ्यांश्च[2] भौमः।
वागीशज्ञौ सफलविफलौ पुष्पवृक्षांस्तु शुक्रः
स्निग्धानिन्दुः कटुकविटपान् भूमिपुत्रश्च भूयः ॥ ७ ॥

इति। रविः अन्तस्सारान् जनयतीति सम्बन्धः। अन्तः-सारान् गृहादिकरणयोग्यान्। सूर्यसूनुः दुर्भगान् दृङ्मनसोरनिष्टान शाकोटकादीन्। तुहिनकिरणः क्षीरोपेतान् सप्तच्छदादीन्। भौमः कण्टकाढ्यान् कारस्करकिंशुकादीन्। वागीशज्ञौ सफलविफलौ वा-गीशः सफलान् फलप्रधानान् पनसादीन्, बुधो विफलान् फलशू-न्यान् चन्दनादीन्। शुक्रः पुष्पवृक्षान् पुष्पप्रधानान् चम्पकादीन्। ग्रहाणां बलाबलवशेन वा योगेक्षणवशेन वा यथोक्तवृक्षाणां विकल्पो योजनीय इति द्योतयितुं चन्द्रभौमयोः पुनरपि वृक्षविशेषानाह—भूय इन्दुः स्निग्धान् वृक्षान् जनयति बलाधिकश्चेत् स्नेहयुक्तान् नालि-केरादीन् जनयति। भूमिपुत्रः कटुकविटपान् भल्लातकादीन् जनयति। तथा दृश्यते—

"अर्कस्य मूलं स्थलजं नालिकेरादिकं फलम्।
सारभूरुहनिष्पत्रचन्दनाद्यं प्रचक्षते ॥
अन्तर्जलयुतान्य + + तिक्षीरयुतानि च।
भक्षानि + नवान्याहुः सूचकः शीतरोचिषः(?) ॥
मरिचाद्यं सर्षपाद्यं निर्यासं स्थलभूरुहम्।
तालवेण्वादिकं चूतं पनसाद्यं कुजस्य तु ॥
कन्दसूरणपत्राढ्यं बृहतीतण्डुलीयकम्।
वल्लीफलं बोधनस्य मूलं बहुरसान्वितम् ॥
स्थलाम्बुजानि सस्यानि कुसुम्भं तण्डुलं तथा।
दुकूलमुख्यपट्टानि तूलानि च गिरांपतेः ॥

१. 'रसुपदिशति—अ' ख. ग. पाठः. २., ३. 'स्तु', ४. 'न शा' ग. पाठः. ५. 'लौ वृक्षौ वा' क. पाठः. ६. 'त्रस्तु क' ग. पाठः. ७. 'न जनयति अ' क, 'न् अन' ग. पाठः. ८. 'ति ॥ ७ ॥' ख. ग. पाठः.

कन्दाढ्यं पुष्पवस्तूनि नालिकेरादिकं भृगोः ।
तूलतन्तुयुतं गन्धद्रव्याणि च विनिर्दिशेत् ॥
प्रियङ्गुमुद्गनिष्पावश्यामाकाद्यं कषायकम् ।
हीनमूलं मालुपाद्यं मन्दस्य च विनिर्दिशेत् ॥
विषवृक्षाण्यभोज्यानि दुर्भगानि फलानि च ।
उपेतग्रहतुल्यानि राहोरौद्धिदमीरितम् ॥"

इति ॥ ७ ॥

सर्वत्र राशिवशेन ग्रहवशेन च फलविशेषनिर्देशप्रकारमपि अत्र वृक्षगतविशेषणद्वारेण उपदेष्टुं[1] वंशस्थेनाह —

शुभोऽशुभर्क्षे रुचिरं कुभूतले
करोति वृक्षं विपरीतमन्यथा ।
परांशके यावति विच्युतः स्वकाद्
भवन्ति तुल्यास्तरवस्तथाविधाः ॥ ८ ॥

इति । अशुभर्क्षे शुभः कुभूतले रुचिरं वृक्षं[2] करोतीत्यन्वयः । अशुभराशिस्थितः शुभग्रहः कुत्सितभूतलस्थितं शोभनवृक्षं करोति । अन्यथा विपरीतं करोति । शुभराशिस्थितोऽशुभग्रहः[3] शोभनभूतले कुत्सितवृक्षं करोतीत्यर्थः । यथोक्तेष्वन्तस्साराादिषु तरुषु स्थलजल-जादिषु एकप्रकारतरुसंख्यां निर्दिशति — परांशक इत्यादिना । ग्रहः स्वकाद् यावति परांशके विच्युतः तथाविधास्तरवः तावन्तः सन्तीति सम्बन्धः । 'अंशकृतः प्रभेद' इति पूर्वमुक्ते पुनरप्यंशकेन निर्देशोक्त्या अंशकैरेव[4] विशेषा वक्तव्या इति द्योत्यते ॥ ८ ॥

इति होराविवरणे[5] वियोनिजन्माध्यायस्तृतीयः ॥

---

१. 'दिश्यते — शु' ख. ग. पाठः. २. 'तं रुचिरं शो', ३. 'दित' क. पाठः, ४. 'रपि वि' ग. पाठः. ५. 'णे तृतीयोऽध्यायः ॥' ख. ग. पाठः.

## अथ चतुर्थोऽध्यायः ।

अथ होरेन्दुसूरिरवीणां प्राबल्यविषयं मानुषजन्म विवक्षुः गर्भाधानकालमुपदिशति[1] वंशस्थेन—

> कुजेन्दुहेतु प्रतिमासमार्तवं
> गते तु पीडर्क्षमनुष्णदीधितौ ।
> अतोऽन्यथास्थे शुभपुङ्ग्रहेक्षिते
> नरेण संयोगमुपैति कामिनी ॥ १ ॥

इति । प्रतिमासं कुजेन्दुहेतु आर्तवम् अनुष्णदीधितौ पीडर्क्षं गते तु गर्भक्षमं[2] भवतीति सम्बन्धः । कुजेन्दुहेतु कुजश्च इन्दुश्च कुजेन्दू तौ हेतुर्यस्य तत् कुजेन्दुहेतु । जन्मकालभवयोः कुजेन्द्वोः, अथवा प्रश्नकालभवयोः योगेक्षणषड्वर्गादिपरस्परसम्बन्धे सति आर्तवस्य शुद्धिर्जायते । तच्च प्रतिमासम् ।

> "मासि मासि रजः स्त्रीणां रसजं स्रवति त्र्यहम्[3] ।
> वत्सराद् द्वादशादूर्ध्वमेकपञ्चाशतः क्षयम् ॥"

इत्यार्तवलक्षणम् । तच्च अनुष्णदीधितौ स्त्रीणां जन्मेन्दोः[4]रपचयस्थानगते तत्कालचन्द्रे गर्भक्षमं भवति । ऋतुकालचन्द्रस्य जन्मचन्द्रानुपचयस्थानस्थितस्य कुजसम्बन्धे सति यदार्तवं तद् गर्भाधानक्षमं भवतीत्युक्तं[5] भवति । अन्यत्र बालावृद्धातुरावन्ध्याभ्यः । तथाच बादरायणः —

> "स्त्रीणां गतोऽनुपचयर्क्षमनुष्णरश्मिः
> सन्दृश्यते यदि धरातनयेन तासाम् ।
> गर्भग्रहार्तवमुशन्ति तदा च वन्ध्या-
> वृद्धातुराल्पवयसामपि तन्नहीष्टम् ॥"

कुजेन्दुहेतु प्रतिमासमित्यत्र कुजेन्द्वोरार्तवहेतुभूतयोः प्रत्येकं मासः । नवांशकद्वादशांशकं[6] परस्परसम्बन्धयुक्तं चेद् गर्भार्तवं भवतीत्यर्थोऽप्यनुसन्धेयः । पुनरत्र हेतुशब्देन पुत्रकारको गुरुर्विवक्ष्यते । तस्यापि (?)[7]

---

१. 'ति —', २. 'क्षमार्तवं भ' ख. ग. पाठः. ३. 'हम् । इ' क. ग. पाठः. ४. 'न्द्वो' क. पाठः. ५. 'ति । अत्र कुजे' ख. ग. पाठः. ६. 'सं न' ग. पाठः. ७. 'क' क. पाठः.

कुजशशिगुरूणां नवांशद्वादशांशस्थे च परस्परसम्बन्धे सति गर्भार्तवं भवतीति केचिद् व्यवस्यन्ति। इदमपि निरूपणीयं—नवर्क्षचरणात्मकस्य राशेरेकस्यांशस्य पञ्चदशघटिकात्मकस्य नवभागस्य द्वादशधा विभागे सति पञ्चसप्ततिर्विनाड्यो नवांशद्वादशांशभूताः मासशब्देनाक्षरसंख्यया द्योत्यन्ते। एवं गर्भग्रहार्तवमुक्त्वा उत्तरार्धेन गर्भाधानकालमुपदिशति— अनुष्णदीधितौ अतोऽन्यथास्थे शुभपुङ्ग्रहेक्षिते कामिनी नरेण संयोगम् उपैति इति सम्बन्धः। अतः पीडर्क्षादन्यथास्थे उपचयस्थे इति यावत्। कामिनीत्युक्त्या

"क्षामप्रसन्नवदनां स्फुरच्छ्रोणिपयोधराम्।
स्रस्ताक्षिकुक्षिं पुंस्कामां विद्यादृतुमतीं स्त्रियम्॥"

इत्युक्तलक्षणलक्षिता गर्भाधानयोग्या तात्कालिकग्रहगोचरवशाद् विज्ञातव्येति द्योत्यते। नयतिधातोर्व्युत्पन्नेन नरशब्देनोक्त्या तस्योत्पादकत्वमपि तात्कालिकग्रहवशाद् विज्ञातव्यमित्युक्तं भवति। अनुष्णदीधितौ अतः अन्यथास्थे उक्तात् पीडर्क्षादन्यत्र स्थिते उपचयराशौ स्थिते, अर्थान्नरजन्मर्क्षस्योपचयराशाविति सिध्यति। तथाहि—'रजोनिर्गमनात् स्त्रीणाम् ऋतुः षोडश रात्रयः' इत्युक्तस्य ऋतुकालस्य सकलस्यापि दुष्टशिष्टस्त्रीपुरुषात्मकगर्भाधानविषयत्वात् तत्र नोपचयापचयस्थचन्द्रनिरूपणं घटते। पुरुषस्य तूत्पादनयोग्यः कालो निरूपणीयश्चेति चन्द्रे नरस्योपचयस्थिते शुभपुङ्ग्रहेक्षिते शुभेन पुङ्ग्रहेण गुरुणा ईक्षिते, शुभशब्देन आद्यक्षरग्रहणाद् शुभं शुक्रनक्षत्रं तत्र स्थिते चन्द्रे पुङ्ग्रहेक्षिते संयोगमुपैति। संयोगं सम्यग् योगं गर्भाधानक्षमं योगमुपैतीति यावत्। नन्वत्रातोऽन्यथास्थ इति स्त्रिया उपचयस्थ इति कस्मान्न व्याख्यायते। अयुक्तमेतत्, पुरुषप्राधान्यात्। यस्माद् बादरायणः—

"पुरुषोपचयगृहस्थो गुरुणा यदि दृश्यते हिममयूखः।
स्त्रीपुरुषसम्प्रयोगं तदा वदेत् स च वृथा नैव॥"

१. 'स्य प' ख. पाठः. २. 'र्भार्त' ग. पाठः. ३. 'नरेण नय' ख. पाठः. ४. 'स्थे अ' क. पाठः. ५. 'न्यथास्थे उ', ६. 'स्थनि', ७. 'भेन', ८. 'त्रस्थि' ग. पाठः. ९. 'द्। येव' ख. ग. पाठः.

गते तु पीडर्क्षमनुष्णदीधिताविति न केवलमार्तवे द्रष्टव्यं जातकेऽपि । कथं, स्त्रिया लग्नादनुपचयस्थश्चन्द्रो ग्रहैर्दृश्यते यदि तर्हि तस्याः पुत्राः सम्भवन्ति । अत्र त्रिदशादिदृष्टिरपि शक्यैव । कदा पुत्रसम्भावने-त्यत्र स्वां स्वां दशामुपगताः स्वफलप्रदाः स्युरिति वक्ष्यमाणग्रन्थेन द्र-ष्टव्यम् । गुरोरष्टकवर्गेण वा स्त्रिया उपचयस्थश्चन्द्रो बलवद्ग्रहेण दृश्यते चेद् यत्नात् सिध्यति । चन्द्रस्य शुभयोग(त्व)मपि द्रष्टव्यम् । पुरुषोपच-यस्थश्चन्द्रो यदि ग्रहैर्दृश्यते च तदा पुनर्विवाहः कर्तव्य इति । नरेण संयोगमुपैतीत्यत्र षोडशसु रात्रिषु अष्टावोजरात्रयः स्त्रीजननयोग्याः अष्टौ युग्मरात्रयः पुंजननयोग्याश्चेति । प्रथमातृतीयैकादशीत्रयोदशीषु रात्रिषूत्पादिताः स्त्रियः पापशीलाः कुलविनाशिन्यो भवन्ति । द्विती-यचतुर्थरात्र्युत्पादिताः पुरुषा[1]श्च दुराचारा[2] अल्पायुषश्च भवन्ति । परि-शेषदिवसोत्पादिताः स्त्रीपुरुषाः सदाचारा वंशविवर्धनाश्च भवन्ति[3] । 'भर्तुः शुद्धा चतुर्थेऽह्नि स्नानेन स्त्री रजस्वला' इति वचनाल्लोकाचारतश्च प्रथमद्वितीयतृतीयरात्रिषु गर्भाधानं न कर्तव्यमिति सिद्धम् । चतुर्थरा-त्र्यादिषूत्पादितानां फलविशेषश्चान्यत्रोक्तः—

"पुत्रोऽल्पायुर्दारिका वंशकर्ता वन्ध्या पुत्रः सुन्दरीशोऽतिदुष्टा ।
श्रीमान् पापा पुण्यशीलो गुणाढ्या सर्वज्ञोऽभूत् तुर्यरात्रात् क्रमेण ॥"

इति । शुभशब्दोक्तशुक्रनक्षत्रग्रहणेन उत्पादनकालस्य शुक्रनक्षत्रत्रिको[4]-णादिसम्बन्धोऽप्युपलक्ष्यते । अत्र श्लोके अपरोऽप्यतिरहस्यभूतो योज-नप्रकारः गर्भार्तवनक्षत्रस्य गर्भाधाननक्षत्रस्य च प्रदर्शनार्थमुपदिश्यते । पूर्वं संज्ञाध्याये अहोरात्रविकल्पशब्देनोपदिष्टस्वरूपकालविशेषसमुद्भवो जातकप्रश्नविषयजननमरणादिकालनिर्णयहेतुः गुलिकोऽत्र हेतुशब्देन विवक्ष्यते । तथा शुभपुङ्ग्रहेक्षित इति विशेषणम् अनुष्णदीधितौ योषि-तोऽनुपचयस्थे आर्तवनक्षत्रं प्रति आधाननक्षत्रं प्रति पुरुषस्य उपचयस्थे अनुष्णदीधितौ चेति उभयत्रापि योजनीयम् । आर्तवनक्षत्रं प्रति यो-जने शुभैः पुङ्ग्रहो गुरुरेव विवक्षितः । आधाननक्षत्रं प्रति योजने शुभ-

१. 'षा दु' ग. पाठः. २. 'रा भ', ३. 'न्ति । शुभ' ख. ग. पाठः. ४. 'त्रि-त्रिको' क. पाठः. ५. 'ष्टः' क. ख. पाठः. ६. 'पं' क., 'पः' ख. पाठः. ७. 'त्रः', ८. 'न' ग. पाठः.

मिति शुक्रनक्षत्रं पुङ्ग्रह इति गुरुश्च विवक्ष्यते । 'मासि मासि रजः स्त्रीणामि'त्युक्तस्य मासस्य नाक्षत्रत्वाद् आर्तवस्य नक्षत्रसम्भवत्वेन अत्र नक्षत्रं ज्ञातव्यम् । नक्षत्रज्ञानस्य 'सप्ताहतं त्रिघनभाजितशेषमृक्षमि'त्युक्तन्यायविषयत्वाद् अत्रापि तत् कर्तव्यमिति स्थिते योजनप्रकार उच्यते—कुजेन्दुहेतुप्रतिमासं कुजश्च इन्दुश्च हेतुश्च कुजेन्दुहेतवः भौमचन्द्रगुलिकाः । प्रतिशब्दो वीप्सार्थः । कुजेन्दुहेतूनां स्फुटेभ्यः प्रत्येकं मासैः[1] नवांश[2]द्वादशांशकैः[3] प्राग्वदुत्पादितः अत्र[4] स्फुटीकर्तव्यः[5] । कथमिति चेद्[6], अतीतमासप्रमाणविनाडिकात्मकाः[7] नवांशकद्वादशांशकाः[8] राशित्वेन स्थाप्याः[9] । वर्तमानमासप्रमाणद्वादशांशके गतं विन्यस्य त्रिंशता हत्वा मासेन हृत्वा लब्धा भागाश्च स्थाप्याः । शिष्टं षष्ट्या हत्वा मासेन हृत्वा लब्धाः कलाश्च स्थाप्याः । एवं राशिभागकलात्मकं नवांशद्वादशांशकस्फुटं कुजस्य चन्द्रस्य च कर्तव्यम् । गुलिकस्य तु विलोमगत्वाद् गतद्वादशांशकान्नवांशकराशेरारभ्य विलोमेन गणयित्वा वर्तमानद्वादशांशकस्फुटमानेतव्यमिति । कुजेन्दुहेतूनां नवांश[10]कद्वादशांशकस्फुटमानीय मासमित्येकवचननिर्देश[11]बलात् तानि त्रीण्यपि स्फुटानि संयोज्य जातात्[12] त्रिस्फुटयोगात्[13] न्यायसिद्धेन सप्ताहननेन जाताद् राशिपिण्डात् प्रजा[14]हृतशेषात् सारहृतशिष्टान्यश्विन्यादीनि नक्षत्राणि । तथा गुरोरपि नवांशकद्वादशांशकस्फुटमुत्पाद्य सप्तभिर्हत्वा पूर्ववत् प्रजासारैर्नक्षत्रम् अश्विन्यादिकमानीयते तस्य नक्षत्रस्य पूर्वानीतनक्षत्रेण केन्द्रत्रिकोणसंबन्धे सति पूर्वानीतनक्षत्रं[15] गर्भार्तवनक्षत्रं भवति । शुभपुङ्ग्रहेक्षित इत्युक्त्या तयोर्नक्षत्रयोः समसप्तकदृष्टिरत्र गर्भार्तवनक्षत्रस्य मुख्यं लक्षणं, तद[16]भावे केन्द्रत्रिकोणसम्बन्धोऽपि निरूपणीयः । तस्मादार्तवदर्शननक्षत्राद् ऊर्ध्वकालभवेषु षोडशसु ऋतुदिवसेषु यत्र यत्र शुक्रयु[17]क्तनक्षत्रत्रिकोणसम्भवः तत्र गर्भाधानं भवति । तस्य नक्षत्रस्य गुरुदृष्टियोगे पुरुष-

१. 'त्यत्रोक्त' क. पाठः. २. 'स', ३. 'शकं द्वा', ४. 'कं', ५. 'तः', ६. 'चेत् पूर्णा अ' ग. पाठः. ७. 'काः न' ख. ग. पाठः. ८. 'क' क. पाठः. ९. 'प्याः । शिष्टं त्रिं', १०. 'कस्फु', ११. 'शात्' ग. पाठः. १२. 'ता त्रि' क. पाठः. १३. 'गा न्या' क., 'गं न्या' ग. पाठः. १४. 'जासारैराश्विन्यादितो नक्षत्रमानेतव्यम् । तथा', १५. 'त्रं च ग', १६. 'दा भवेत् के', १७. 'क्तात्रि' ग. पाठः.

स्योपचयस्थानगतत्वे च गर्भाधानसम्भवः । तस्मान्नक्षत्राद् दशमं जन्मनक्षत्रं भवत्येव ॥ १ ॥

एवं निरूपितस्य गर्भाधानस्य दम्पतिविषयत्वाद् दम्पत्योरन्योन्यसम्बन्धं तत्प्रयोगं (च ! चोपे)न्द्रवज्रेणाह —

यथास्तराशिर्मिथुनं समेति
तथैव वाच्यो मिथुनप्रयोगः ।
असद्ग्रहालोकितसंयुतेऽस्ते
सरोष इष्टैः सविलासहासः ॥ २ ॥

इति । यथा अस्तराशिः तथा मिथुनं समेति सङ्गच्छते । पुरुषजातके यः सप्तमराशिः तद्वशेन स्त्रिया जन्मर्क्षादि वक्तव्यं, तथा स्त्रीजातके यः सप्तमराशिः तद्वशेन पुरुषस्य जन्मर्क्षादि वक्तव्यम् । एवं दम्पत्योः परस्परसम्बन्धो विचिन्तनीयः । तद्यथा —

"लग्नाधिपो वा मदनाधिपो वा
यातो यदीये भवनेंऽशके वा ।
तत्क्षेत्रजातं प्रवदेत् कलत्रं
पुंसोऽङ्गनायाश्च पतिं तथैव ॥"

"भार्याधिपस्थितक्षेत्रं भार्याया जन्मभं विदुः ।
तस्योच्चं तस्य नीचं वा तदंशं वाथ निर्दिशेत् ॥"

इत्यादिभिर्वचनैः पुरुषस्य कलत्रजन्म वक्तव्यम् । तथा —

"यद्यत्फलं नरभवे क्षममङ्गनानां
तत्तद् वदेत् पतिषु वा सकलं विधेयम् ।"

इत्यतिदेशेन स्त्रिया भर्तृजन्मर्क्षमपि तद्वदेव निरूपणीयमिति स्थिते यथोक्तलक्षणवशाद् बहुषु जन्मर्क्षेषु वक्तव्यतया प्राप्तेषु नक्षत्रसम्बन्धवशाद् अनिष्टान्यपहाय शिष्टेषु नक्षत्रसम्बन्धवशाद् ग्राह्येषु द्वित्रेषु सत्सु इदं कलत्रजन्मर्क्षम् अथवा भर्तृजन्मर्क्षमिति विशेषनिर्देशो नष्ट-

१. 'त्रं च भ' ख. पाठः. २. 'च दर्शयति—' ख. ग. पाठः. ३. 'तं' ख. पाठः. ४. 'वदेद्' क. ख. पाठः. ५. 'देदित्य' क. ग. पाठः. ६. 'लग्नोक्त' ख. पाठः. ७. 'वेदं भ', ८. 'शास्त्र न' ग. पाठः.

जातकवशात् शुक्राष्टवर्गवशाच्च कर्तव्यः । तत्र नष्टजातकोक्तवशाच्च जन्मकालोदयलग्नं विन्यस्य राशिषट्कं संयोज्य राशिगुणकारं यथासम्भवं ग्रहगुणकारं च कृत्वा सप्तभिर्निहत्य सप्तविंशतिहृतशेषे नवकदानेन वा नवकविशोधनेन वा यथास्थितेन वा कलत्रजन्मर्क्षं भर्तृजन्मर्क्षं वा स्वोदयलग्नेन वक्तव्यमिति नष्टजातकवक्ष्यमाणमार्गः । तथाच वक्ष्यति —

> "सप्ताहतं त्रिघनभाजितशेषमृक्षं
> दत्त्वाथवा नव विशोध्य नवाथवास्मात् ।
> एवं कलत्रसहजात्मजशत्रुभेभ्यः
> प्रष्टुर्वदेदुदयराशिवशेन तेषाम् ॥"

इति । शुक्रस्याष्टकवर्गं वक्ष्यमाणप्रकारेण राशिचक्रे निक्षिप्य प्रतिराशिफलसंख्यां विज्ञाय नक्षत्रमेकान्ते स्थापयेत् । अथ लग्नाधिपस्फुटे शुक्रस्फुटे च संयोजिते यो राशिर्भवति तत्र राशौ तत्सप्तमराशौ वा शुक्रस्य स्वकीयः काणो यत्रास्ति तत्रस्थया काणसंख्ययात्र कर्म कर्तव्यम् । उभयत्राप्यस्ति चेत् यो राशिः तयोर्लग्नस्योपचयस्थानं तत्रस्थया काणसंख्यया कर्म । उभावप्यनुपचयौ चेत् लग्नाधिपं सप्तमाधिपं च संयोज्य तत्र जाते राशौ तत्सप्तमराशौ वा लग्नस्य उपचयस्थानभूते यत्र शुक्रस्य स्वकीयः काणोऽस्ति तत्रस्थया काणसंख्यया कर्म कर्तव्यम् । एवं लग्नपशुक्रयोगराशौ तत्सप्तमराशौ वा, तथा लग्नाधिपसप्तमाधिपयोगराशौ तत्सप्तमराशौ वा । यत्र लग्नादुपचयेत्वं शुक्राष्टकवर्गे शुक्रकाणयोगश्च सम्भवति तत्रस्था काणसंख्या कर्मयोग्येति यावत् । कर्मप्रकारस्तु—यत्र यावती काणसंख्या यस्य यस्य ग्रहस्य काणयोगेन जाता तस्य तस्य ग्रहस्य स्फुटं विन्यस्य तया काणसंख्यया पृथक् पृथक् संगुण्य संयोजने कृते यो राशिर्लभ्यते तस्य गोसिंहादिगुणकारः कर्तव्यः । तथा तत्र राशौ ग्रहाश्च सन्ति चेद् यथासम्भवं ग्रहगुणकारोऽपि कर्तव्यः । एवं कर्मणि कृते यन्नक्षत्रं लभ्यते तन्नक्षत्रं भार्याया जन्मर्क्षं भर्तृजन्मर्क्षं

---

१. 'च तत्र जन्मर्क्षका' ख. पाठः. २. 'रकं य', ३. 'कारकं च', ४. 'भिर्हत्वा स' ग. पाठः. ५. 'शिष्टे न' ख. पाठः. ६. 'तथासंस्थि' ग. पाठः. ७. 'यानष्टमे' क. ख. पाठः. ८. 'कस्व', ९. 'यस्थानत्वं' ग. पाठः. १० 'त' ख. ग. पाठः. ११. 'र्यजन्मर्क्षम् ।' ग. पाठः.

वा वदेत् । पुरुषस्य पुनर्विवाहलक्षणे स्त्रियाः पुनर्भूत्वलक्षणे च सम्भवति कर्मयोग्यसंख्याया द्विगुणत्वेन त्रिगुणत्वेन वा यथोक्तकर्मणि कृते द्वितीयभार्याजन्मर्क्षे द्वितीयभर्तृजन्मर्क्षे वा तृतीयभार्याजन्मर्क्षे तृतीयभर्तृजन्मर्क्षे वा लभ्यते । एवमादिप्रकारानीतजन्मर्क्षसम्बन्धवशात् पूर्वमदर्शितद्वित्रादिसम्भवसन्देहनिवृत्त्यास्य पुरुषस्य एतन्नक्षत्रजातया सङ्गतिः अस्याः स्त्रिया एतन्नक्षत्रजातेन पुरुषेण सङ्गतिः गर्भाधानक्षमा भवेद् इत्यर्थः । एवं दम्पत्योर्निजनिजास्तराशिवशाद् गर्भाधानक्षमां परस्परसङ्गतिमुपदिश्य तत्र साम्प्रयोगिकमवस्थान्तरं दर्शयति— तथैव मिथुनप्रयोगः वाच्य इत्यन्वयः । आदेशप्रधानत्वादस्य शास्त्रस्य रहस्यमनन्यसाक्षिकं मैथुनगतमवस्थान्तरमपि निर्देष्टव्यमित्यर्थः । तत्स्वरूपं दिङ्मात्रेणाह — अस्ते असद्ग्रहालोकितसंयुते मिथुनप्रयोगः सरोष इति सम्बन्धः । मिथुनप्रयोग इति वात्स्यायनशास्त्रे साम्प्रयौगिकाधिकरणे विस्तरेण प्रतिपादितम् आलिङ्गनचुम्बनादिविविधोपचारपरिपोषितं मिथुनकर्मोच्यते । स च अस्ते अस्तराशौ असद्ग्रहालोकितसंयुते पापग्रहैरवलोकिते युक्ते वा सति सरोषः कलहबहुल इत्यर्थः । इष्टैरालोकितसंयुते सविलासहासः अन्योन्यानुरागयुक्त इत्यर्थः । अस्य विस्तरश्चान्यत्र—

"क्रूरेषु पतिं त्यजति प्रमदा नन्दयति पतिमपापेषु
चन्द्रे पापसमेते पुरुषो भुङ्क्ते बलाद् रवौ नारीम् ।"

इत्यादिभिः प्रदर्शितः । तथात्रैव वक्ष्यमाणं

"मन्दर्क्षांशे शशिनि हिबुके मन्ददृष्टेऽब्जगे वा
तद्युक्ते वा तमसि शयनं नीचसंस्थैश्च भूमौ ।"

इत्यादिविशेषलक्षणं च निर्देशावसरेऽनुसन्धेयम् ॥ २ ॥

अथ "सन्तो ह्याहुरपत्यार्थं दम्पत्योः सङ्गतिं रहः" इत्यादिभिः सङ्गतिफलत्वेन प्रदर्शितमपत्यसद्भावं वंशस्थेन लक्षयति--

**रवीन्दुशुक्रावनिजैः स्वभागगै-**
**र्गुरौ त्रिकोणोदयधर्मगेऽपि वा ।**

१. 'स्यया द्वि' ग. पाठः. २. 'न्य' क. पाठः. ३. 'योगाधि' ग. पाठः. ४. 'ह्यालो' ख. ग. पाठः. ५. 'न्यरा' ख. पाठः. ६. 'प्या' ग. पाठः. ७. 'वं ल' ख. ग. पाठः.

भवत्यपत्यं हि विबीजिनामिमे
करा हिमांशोर्विदृशामिवाफलाः ॥ ३ ॥

इति । निषेकतात्कालिकैः प्रश्नतात्कालिकैर्वा रवीन्दुशुक्राव- निजैः स्वभागगैः गुरौ त्रिकोणोदयधर्मगेऽपि वा सति अपत्यं भवति हि इति सम्बन्धः । रविश्च इन्दुश्च शुक्रश्च अवनिजश्च रवीन्दुशुक्राव- निजाः एतैः स्वभागगैः रविशुक्राभ्यां पुरुषशुक्ररूपाभ्यां पुम्भाग- गाभ्याम् इन्द्ववनिजाभ्यां स्त्रीशोणितरूपाभ्यां स्त्रीभागगाभ्यामित्यर्थः। अत्र सूर्याधिष्ठितराशिवशेन पुरुषस्य, शुक्राधिष्ठितराशिवशेन शुक्रस्य, चन्द्राधिष्ठितराशिवशेन स्त्रियाः, कुजाधिष्ठितराशिवशेन शोणितस्य च गर्भोत्पादनसामर्थ्यं तदसामर्थ्यजनकदोषराहित्यं च निश्चेतव्यमिति भावः। तथा गुरौ त्रिकोणोदयधर्मगेऽपि वा इति । त्रिकोणगते उदय- गते धर्मगतेऽपि वा सति अपत्यं भवतीत्यर्थः। अत्र सन्तानकारकस्य गुरोः त्रिकोणादिगतत्वेन तत्र कुम्भीपाकोन्मुखस्य यस्यकस्यचिज्जी- वात्मनः सन्निधिर्द्योत्यते । केवलं शुद्धाभ्यां शुक्रशोणिताभ्यामेव न गर्भोत्पत्तिः, किन्तु तत्र जीवात्मसान्निध्ये च सत्येव गर्भो भवति । तथाचोक्तं—

"शुद्धे शुक्रार्तवे सत्त्वः स्वकर्मक्लेशचोदितः ।
गर्भः सम्पद्यते युक्तिवशादग्निरिवारणौ ॥"

इति । अत्र शुद्धं शुक्रं शुद्धमार्तवं च स्वकर्मक्लेशचोदितो जीवात्मा च एतत्त्रितयं गर्भः सम्पद्यत इत्युक्तं भवति । शुक्रशोणितयोः शुद्धिश्च

"शुक्रं शुद्धं गुरु स्निग्धं मधुरं बहुलं बहु ।
घृतमाक्षिकतैलाभं सद्गर्भायार्तवं पुनः ॥
लाक्षारसशशास्राभं धौतं यच्च विरज्यते ।"

इत्येवंलक्षणलक्षिता शुक्रावनिजाभ्यां स्वभागगताभ्याम् अवगम्यते। पुंस्त्रियोः शुद्धिश्च —

"पूर्णषोडशवर्षा स्त्री पूर्णविंशेन सङ्गता ।

१. 'र्थ्यं' ग. पाठः. २. 'वसा' ख. पाठः. ३. 'क्तं' क. ग. पाठः. ४. 'सृं' क. पाठः. ५. 'गाभ्याम्' ख. पाठः.

वीर्यवन्तं सुतं सूते तयोर्न्यूनाब्दयोः पुनः ॥
रोग्यल्पायुरधन्यो वा गर्भो भवति नैव वा ।"

इत्यादि[1]लक्षणलक्षिता रवीन्दुभ्यां स्वभागगताभ्याम् अवगन्तव्या । एषां स्वभागगतत्वेऽपि गर्भानुत्पत्तिस्थानं दर्शयति— इमे रवीन्दुशुक्रावनिजाः स्वभागगा अपि विबीजिनाम् अफलाः[2]। तच्चोपमया द्रढयति — हिमांशोः कराः विद्दशामिवेति । यथा चन्द्ररश्मयः सुव्यक्ता अपि नेत्ररहितानां विफला भवन्ति, तथा स्वभागगता अपि रवीन्दुशुक्रावनिजा विबीजिनाम् अफला भवन्तीत्यर्थः । विबीजिनामिति । बीजासमर्थं रेतोऽस्य विबीजं, विहतं बीजं विबीजमिति तत्पुरुषः । विहतं विघ्नितम् आत्मफलसम्पादनासमर्थमित्यर्थः । तद्वन्तो विबीजिनः[3]। बीजविहतिश्च द्विधा निजागन्तुक[4]हेतुभेदेन । तत्र निजहेतवो वातपित्तादयः । आगन्तुकहेतवश्च महदपध्यानदेवतापीडादयः । तेऽपि द्विविधाः प्रायश्चित्तसाध्या असाध्याश्चेति । एतद्व्यक्तिश्च यथोपदिष्टबीजबलाबलनिरूपणे जायते । तद्यथा बीजबलाबलनिरूपणप्रकारोऽन्यशास्त्रप्रसिद्धोऽप्यत्र श्लोके सूचितः । स्वभागगैरित्यत्र स्वभ[5]शब्देन स्वाधिष्ठितनक्षत्रमुच्यते, तद[6]ंगच्छन्तीति स्वभागा इति निर्वचनेन स्वभागशब्देन

"क्रमाच्चन्द्रक्रियाः पञ्च पञ्च मेषादिराशिषु ।
प्रकल्प्य तत्समं ब्रूयात् सर्वकार्येषु तत्फलम् ॥"

इति प्रदर्शिताः षष्टिघटिकात्मकनक्षत्रद्वादशांशरूपा मेषादिराशय उच्यन्ते । तत्र गताः स्वभागगाः । अत्रेयं गणितप्रक्रिया—ग्रहाधिष्ठितनक्षत्रगतनाडिकाः सावयवा विन्यस्य पञ्चभिर्विभज्य राशयो लभ्यन्ते । शेषात्[7] त्रिंशद्गुणिताद् भागाः, षष्ट्या गुणिताल्लिप्ताश्च लभ्यन्ते । तद्राशिभागकलात्मकं स्वभागग[8]ग्रहस्फुटं भवति । एवमानीतेषु रवीन्दुशुक्रावनिजेषु गुरुमपि स्वभवशादेवमानीय उभयत्र स्थापयित्वा[9] दक्षिणस्थिते गुरौ रविशुक्रौ योजयेत् वामस्थे चन्द्रावनि[10]जौ योजयेत् ।

१. 'दितल्लक्ष' ख. पाठः. २. 'ला भवन्तीत्य', ३. 'नः । तच्चोपमया द्र... ...र्थः । बीज' क. पाठः. ४. 'कभे' ख. ग. पाठः. ५. 'भागगश', ६. 'था', ७. 'तेषां त्रि', ८. 'भागव', ९. 'येत् तत्र द' ख. पाठः. १०. 'निजौ च यो' ग. पाठः.

तत्र दक्षिणस्थितं बीजस्फुटं तदोजराशावोजांशकस्थं चेद् बीजबलं पू-[1]र्णमिति द्रष्टव्यं, तथा वामस्थं क्षेत्रस्फुटं तद्युग्मराशौ युग्मांशकस्थं चेत् क्षेत्रबलमपि पूर्णं वेदितव्यम् । एवं बीजबले क्षेत्रबले च सम्पूर्णे सति कस्मिन् काले अपत्यलब्धिरिति ज्ञातुमुपायोऽप्यत्र सूत्रितः । रवीन्दुशु-क्रावनिजैः स्वभागगैः सहिते गुरौ लग्नस्य त्रिकोणोदयधर्मगे इति तत्र योजना । यथोक्तवदानीतानां रवीन्दुशुक्रावनिजानां गुरोश्च पञ्चानां स्फुटयोगराशौ लग्नत्रिकोणगते, अपिशब्दादस्य केन्द्रगते वा सति प्रथ-मवयस्यपत्यलाभः; वाशब्देनास्य पणपरास्थिते मध्यवयसि, आपोक्लि-मस्थिते अन्त्यवयसि पुत्रलाभ इति द्रष्टव्यम् । एष प्रकारः केवलरवी-न्दुशुक्रावनिजगुरुस्फुटैरपि संवादार्थं विचिन्तनीयः । अन्ये सम्प्रदाय-विदोऽत्र स्वभागगैरित्यत्र अक्षरसंख्यया क्रमेण रवीन्द्वोश्चतुर्भिर्गुणनं, शुक्रावनिजयोस्त्रिभिर्गुणनं च कृत्वा तथा गुरौ त्रीति वचनैवशात् त्रिगुणत्वं गुरोश्च कृत्वा यथादर्शितं बीजबलं क्षेत्रबलं कालविशेषं च निर्देष्टव्यं मन्वते । स प्रकारोऽपि संवादार्थं निरूपणीयः । तथा पुनर-स्मिन्निमे करा इत्युक्त्या इमेअक्षरसंख्यया पञ्चाशद्विनाडिकाचारव-शोपलभ्यसूक्ष्मग्रहस्थितिगतै रवीन्द्वादिभिः कर्तृत्वेन करशब्दवाच्यैर-प्यत्र कर्म कर्तव्यम् । अत्र विशेषोऽप्यस्ति —

> "मार्ताण्डोदयतोऽशुमानन्नुगृहं मेषान्ततो वामतः
> पञ्चाशद्विघटीभिरत्र विचरन् चापार्धतोऽनुक्रमात् ।
> चन्द्रस्तत्त्वविनाडिकात्मकमुखो भागादिकं चानयेद्
> भूयः पञ्चभिरभ्यसेत् पुनरिमौ षष्ट्यादिनारोपयेत् ॥
> एवं सन्ततिभानुशीतकिरणावानीय हित्वा रविं
> शीतांशोः पुनरत्र शुक्लतिथिजाः पुत्रान्विताः कीर्तिताः ।
> पुत्रो नास्ति तथा सितेतरभुवां दत्तादिपुत्रोद्भवं
> तत्रादौ तु समादिशेज्जननतः प्रश्नेन वा पृच्छताम् ॥"

इत्युक्तमार्गेण च सूक्ष्मग्रहाणामष्टकवर्गेण च सन्ततिसद्भावासद्भावौ निर्देष्टव्यौ । अत्र सन्तत्यभावलक्षणे सति तस्य लक्षणस्य दौर्बल्ये

---

१. 'मेवेति' ग. पाठः. २. 'लं संपू', ३. 'नात्' क. पाठः. ४. 'रत्र', ५. 'ण सू' ख. पाठः.

प्रायश्चित्तकर्मणा सन्ततिः स्यात् । दौर्बल्यं च लक्षणस्यासम्पूर्णतया शुभदृष्टियोगेन वा[1] संभवति । तत्र निजानां वातपित्ता[2]दिजनितानां दोषाणां प्रायश्चित्तकर्म—

> "जन्मान्तरकृतं पापं व्याधिरूपेण जायते ।
> तच्छान्तिरौषधैर्दानैर्जपहोमार्चनादिभिः ॥"

इत्यादिवचनवशात् कर्तव्यम् । आगन्तुकानां तु महदपध्यानज[3]नितानां तत्तदुचितशुभकर्माणि प्रायश्चित्तत्वेन विधेयानि । देवतापीडानां तु "राक्षसभुजङ्गभै[4]रवभूतानां भूमिनन्दनः स्वामी"त्यादिभिर्वचनैः बाधकमवधार्य तदुचितानि बलिकर्माणि[5] नृत्तादीनि च यथाबलं विधेयानि । एवं दोषाणां प्रायश्चित्ते कृते सन्ततिलब्धिर्भवति । सन्तत्यभावलक्षणस्य सम्पूर्णत्वे शुभग्रहदृष्टियोगा[6]भावे च विबीजित्वं सम्यग् भवति । तेषां विबीजिनाम् इमे पुत्रकारकत्वेनोक्ता रवीन्दुशुक्रावनिजगुरवः स्वभागगा अपि दृष्टिहीनानां चन्द्ररश्मय इव निष्फला भवन्तीत्यर्थः । यथोक्तलक्षणेन विबीजि[7]त्वाभावे बीजबलसद्भावे च अपत्यं भवति । अन्यथापि बीजबलनिरूपणं — पुङ्ग्रहाणाम् अर्ककुजगुरू[8]णां स्फुटानि पृथग् विन्यस्य लिप्तीकृत्य दिनगतनाडिकाभिः सावयवाभिर्गुणयेत् । अवयवांश्च सार्धाधिकान् षष्ट्यारोप्य त्यजेत् । ततः षट्च्छतेन हृत्वा लब्धा विनाडिकाः स्युः । पुनः षड्भिर्हृत्वा लब्धाः श्वासाश्च भवन्ति । एतद् बीजबलसाधनं भवति । एवं त्रयाणामपि बीजबलसाधनमानीय स्थापयेत् । तथा स्त्रीग्रहयोश्चन्द्रशुक्रयोश्च स्फुटाभ्यां पृथक् क्षेत्रबलसाधने च यथोक्तवदानेतव्ये । पुनः स्वं स्वं बीजं[9]बलसाधनं विन्यस्य विनाडीकृतेन दिनगतेन गुणयि[10]त्वा षष्ट्या हृत्वा लिप्तिका लभ्यन्ते, शिष्टा विलिप्ताश्च भवन्ति । एवं कृता[11][12]नि बीजबलसाधनानि स्वे स्वे स्फुटे यथास्थानं योजयेत् । तथा कृतानि तानि[13] पुङ्ग्रहस्फुटानि एकत्र योजयेत्, तद् बीजस्फुटं

१. 'वा भ', २. 'त्तज', ३. 'पीडितानां', ४. 'शैव', ५. 'ते सति स' ग. पाठः. ६., ७. 'ज' ख. ग. पाठः. ८. 'णां पृ', ९. 'स्वयं स्वयं बी' ग. पाठः. १०. 'जसा' क. पाठः. ११. 'वं वी' ग. पाठः. १२. 'त्वा निजनिजबी' क. पाठः. १३. 'नि स्फु' ग. पाठः.

भवति । तथैवानीतक्षेत्रबलसाधनसंस्कृते स्त्रीग्रहयोश्चन्द्रशुक्रयोः स्फुटे च योजयेत्, तत् क्षेत्रस्फुटं च भवति । एवमानीतयोः बीजक्षेत्रस्फुटयोः ओजयुग्मराशिगतत्वेन शुभग्रहदृष्टियोगाभ्यां च तयोर्बलाबलं निरूपणीयम् । उभयोरपि बलवत्त्वे सुखेन सन्ततिलाभः । अन्ये पुनरेवं बीजबलं क्षेत्रबलं च निरूपयन्ति —पुरुषस्य रविसितगुरुस्फुटानेकीकृत्य मण्डलं परिशोध्यावशिष्टमोज ओजांशकश्चेद् बीजबलमस्ति । अंशकेनाप्यलम् । तथा स्त्रियाः चन्द्रकुजगुरुस्फुटानेकीकृत्यावशिष्टं युग्मे युग्मनवांशकश्चेत् क्षेत्रगु(णम ? णो)स्ति इति । बीजबले सम्पूर्णे सति क्षेत्रस्य बलाभावे पुनर्विवाहं कृत्वा सन्ततिलाभः । बीजबले त्वसम्पूर्णे अष्टकापार्वणतिलहोमादिभिः कृच्छ्रेण सन्ततिलाभः । उभयोरपि बलशून्यत्वे तयोः बीजक्षेत्रस्फुटयोः योगराशेः पञ्चमे सप्तमे वा षण्डग्रहयोगे सन्तत्यभावः । पापग्रहदृष्टियोगाभ्यां च तथैव वक्तव्यम् । अत्रैवं बीजक्षेत्रयोर्बलवत्त्वे सति तद्योगस्फुटस्य पञ्चमसप्तमयोः षण्डग्रह[1]पापयोगाभावे च सति सन्ततिर्भवतीति वक्तव्यम् । तत्संख्या च,

> "गुरुस्थितसुतस्थाने यावतां विद्यते (फ ? ब)लम् ।
> शत्रुनीचगृहं त्यक्त्वा तावन्तस्तनयाः स्मृताः ॥"

इति । जीवाष्टकवर्गवशात्

> "लग्नस्येन्दोर्गुरोश्चैव[2] द्वादशांशस्य पुत्रभे ।
> बलाधिकस्य शुक्लाक्षैः पुत्रसङ्ख्यावगम्यते ॥
> पुत्राधिपभुक्तांशा यावन्तः पुत्रकास्तु तावन्तः ।
> अंश[3]वशेन विदध्यात् पुंस्त्रीवृद्धिक्षयादींश्च ॥"

इत्यादिवचनाच्च[4] निर्देष्टव्या[5] । इति दिङ्मात्रेण सन्तानचिन्ता[6]प्यत्र विबीजिनामित्युक्त्या सूचितेति द्रष्टव्यम् ॥ ३ ॥

गर्भाधानसम्भवलक्षणमुक्त्वेदानीम् आधाराधेयकयोः स्त्रीपुरुषयोराहितस्य गर्भस्य च आधानलग्नवशात् प्रश्नलग्नवशाद्वा ज्ञातव्यमरिष्टं[7] षड्भिः श्लोकैः संक्षेपेणोपदिशति—

**दिवाकरेन्द्वोः स्मरगौ कुजार्कजौ**
**गदप्रदौ पुङ्गलयोषितोस्तदा ।**

---

१. 'ण्डपापग्रहयो' ग. पाठः. २. 'श्चैतद् द्वा' क. ख. पाठः. ३. 'ई' क. पाठः. ४. 'वशाच्च', ५. 'व्यम् ।' ग. पाठः. ६. 'न्ततिचि' ख. पाठः. ७. 'ष्टं चेदास्थेनाद्द—' क. पाठः.

व्ययस्वगौ मृत्युकरौ तथा युतौ
तदेकदृष्ट्या मरणाय कल्पितौ ॥ ४ ॥

इति । दिवाकरेण पुंसः शुभाशुभनिरूपणम्, इन्दुना स्त्रियः शुभाशुभनिरूपणं च पूर्वप्रदर्शितमिह प्रकाशीक्रियते । दिवाकरस्य यत्र-तत्र स्थितस्य स्मरगौ सप्तमगतौ कुजार्कजौ पुङ्गलस्य गर्भाधातुः पुरुषस्य गदप्रदौ रोगसूचकौ । तथा यत्रकुत्र व्यवस्थितस्य चन्द्रस्य स्मरगौ कुजार्कजौ सप्तमगतः कुजः अर्कजो वा योषितः रोगसूचकौ । तदा निषेककाल इत्यर्थः । तथा व्ययस्वगौ मृत्युकरौ दिवाकरेन्द्वोः द्वादशधनस्थानगतौ कुजार्कजौ तदा मृत्युकरौ भवतः । दिवाकरस्य उभयतः स्थितौ[2] कुजार्कजौ पुरुषस्य मृत्युकरौ भवतः, तथा चन्द्रस्य उभयतः स्थितौ कुजार्कजौ योषितो मृत्युकरौ[1] भवत इत्यर्थः । कुजार्कजौ युतौ तदेकदृष्ट्या मरणाय कल्पितौ[3] कुजार्कजयोरेकः दिवाकरेण युतः, इतरः तं पश्यति चेत् पुरुषस्य मरणाय भवति । तथा कुजार्कजयोरेकश्चन्द्रेण युक्त इतरः चन्द्रं पश्यति चेत् योषितो मरणाय भवतीत्यर्थः । तदा दिवाकरेन्द्वोः स्मरगौ कुजार्कजौ पुङ्गलयोषितोः गदप्रदौ भवतः इत्यन्वयः । दिवाकरेन्द्वोः व्ययस्वगौ कुजार्कजौ पुङ्गलयोषितोः मृत्युकरौ भवतः । तथा दिवाकरेन्दुभ्यां युतौ कुजार्कजौ तदेकदृष्ट्या पुङ्गलयोषितोः मरणाय कल्पितावित्यन्वयः । अयं कुजार्कजन्यायः सर्वत्र भावभावाधिपशुभाशुभकथनेऽपि योजनीयः । कुजसमानः केतुः । अर्कजसमानो राहुः । इति राहुकेतुभ्याम् एवं निरूपणीयं प्रायेण ॥ ४ ॥

स्त्रीपुरुषयोरन्योन्यमरिष्टमाह[4] —

दिवार्कशुक्रौ पितृमातृसंज्ञितौ
शनैश्चरेन्दू निशि तद्विपर्ययात् ।
पितृव्यमातृष्वसृसंज्ञितौ तु ता-
वथौजयुग्मर्क्षगतौ तयोः शुभौ ॥ ५ ॥

इति । दिवा अर्कशुक्रौ पितृमातृसंज्ञितौ भवतः, निशि शनैश्चरेन्दू

---

१. 'कौ । तदा' ग. पाठः. २. 'तौ यो' ख. पाठः. ३. 'तावित्य' ग. पाठः.
४. 'इं वंशस्थेनाह—' क. पाठः.

पितृमातृसंज्ञितौ भवतः, तद्विपर्ययात् पितृव्यमातृष्वसृसंज्ञितौ च भवतः इति सम्बन्धः । दिवा निषेकश्चेद् अर्कः पिता शुक्रो माता शनैश्चरः पितृव्यः पितृसोदरः चन्द्रो मातृष्वसा । रात्रौ निषेकश्चेत् शनैश्चरः पिता अर्कः पितृव्यः चन्द्रो माता शुक्रो मातृष्वसा इत्युक्तं भवति । तौ ओजयुग्मर्क्षगतौ तयोः शुभौ । तौ पितृमातृग्रहौ पितृव्यमातृष्वसृग्रहौ च ओजयुग्मर्क्षगतौ तयोः पितृमात्रोः पितृव्यमातृष्वस्रोश्च शुभौ यथाक्रमं शुभकरौ भवतः । अत्र अर्थात् प्रतीयमानं पितृपितृव्यग्रहयोः युग्मराशिगतत्वे सति अशुभत्वं, मातृमातृष्वसृग्रहयोः ओजराशिगतत्वे च सत्यशुभत्वं विवक्षितमिति प्रकरणात् सिध्यति । अत्र दिवाशब्देन दिवाराशयः निशाशब्देन निशाराशयः ओजयुग्मयोर्लग्नादित्वं च संवादाय गृह्यन्ते । "स्फुटमिह भवति द्वित्रिसंवादभावाद्" इति प्रश्नजातकयोः संवादोऽवश्यमपेक्षणीय एव । अनेनापि पुङ्गलयोषितोरेवारिष्टमुक्तं, प्रासङ्गिकयोः पितृव्यमातृष्वस्रोररिष्टमपि मनोरोगहेतुत्वेन पुङ्गलयोषितोररिष्टमेव भवति ।

"मनःशरीरयोस्तापः परस्परमनुव्रजेत् ।
आधाराधेयभावत्वात् तप्ताज्यघटयोरिव ॥"

इति प्रसिद्धेः । पुङ्गलयोषितोरेव गर्भाधानकाले पितृत्वं मातृत्वमपि सिद्धमित्यभेदोक्तिः । एतज्जातस्यापि चिन्त्यम् । तद् यथा— दिवाजातस्यार्कशनैश्चरौ विपरीतराशौ विपरीतनवांशकस्थौ चेत् पितृपितृव्याभ्यां विरुद्धो भवति । एवं स्त्रियाश्चेत् तथैव । तत्र भेदः— यदि लग्ने पापसहिते कलत्राधिपे बलिष्ठे च तर्हि ताभ्यां मैथुनादिकं च सम्भवति । एवं दिवाजातायाः स्त्रियाः चन्द्रशुक्रावोजराशावोजराशिनवांशकस्थौ भवतः, तदा सा मातृमातृष्वसृभ्यां विरोधी । तत्र पुंसश्चेत् तथैव । तत्रायं विशेषः— यदि लग्ने पापसहिते कलत्राधिपे बलिष्ठे च तर्हि ताभ्यां मैथुनादिकं च सम्भवति । एवं रात्रौ चेत् तत्रोक्तन्यायेन द्रष्टव्यम् । तत्र भ्रातृस्थानाधिपश्चन्द्रशुक्राभ्यां युतश्चेत् पुमान् भगिन्या सह मैथुनं

१. 'तुः', २. 'थोक्तक्रमं शुभाशुभ' ग. पाठः. ३. 'त्वे स' ख. ग. पाठः, ४. 'त्वमिति' ५. 'णवशात् सि'. ६. 'ते', ७. 'वमरि' ग. पाठः. ८. 'द्धं' ख., 'द्धं' ग. पाठः. ९. 'क्तिः ॥ ५ ॥ ख. ग. पाठः.

गच्छति । अर्कशनैश्चराभ्यां युतश्चेत् स्त्री भ्रात्रा सह मैथुनं गच्छति पुत्रस्थानाधिपश्चेत् पुत्र्या सह पुत्रेण वा नवमस्थानाधिपश्चेत् मातुलान्या मातुलेन वा सर्वत्र युक्त्या विचिन्त्य वक्तव्यम् ॥ ५ ॥

अतःपरमाहितस्य गर्भस्याधारभूताया मातुररिष्टं[1] दर्शयति —

अभिलषद्भिरुदयर्क्षमसद्भि-
मरणमेति शुभदृष्टिमयाते ।
उदयराशिसहिते च यमे स्त्री
विगलितोडुपतिभूसुतदृष्टे ॥ ६ ॥

इति । उदयर्क्षे इति सप्तम्यन्तमप्य[2]ध्याहार्यम् । उदयर्क्षे शुभदृष्टिमयाते उदयर्क्षमभिलषद्भिः असद्भिः स्त्री मरणमेति । लग्ने शुभदृष्टिमप्राप्ते लग्नमभिलषद्भिः प्रवेष्टुकामैः द्वादशर्क्षान्त्यद्रेक्काणस्थितैः पापग्रहैः[3] आहितगर्भा[4] स्त्री मरणमेति । तथाच गार्गिः —

"अशुभैर्द्वादशर्क्षस्थैः शुभदृष्टिविवर्जिते ।
आधानलग्ने मरणं योषितः प्रवदेद् बुधः ॥"

इति । अत्रै[5]व लक्षणान्तरमाह — यमे उदयराशिसहिते विगलितोडुपतिभूसुतदृष्टे च स्त्री मरणमेतीति सम्बन्धः । उदयलग्नस्थितं शनैश्चरं क्षीणचन्द्रः क्षितिजश्च पश्यतश्चेद् आहितगर्भा स्त्री म्रियत इत्यर्थः । अत्र दृष्टिः सप्तमव्यतिरिक्तैव गृह्यते । सप्तमस्थयोः कुजचन्द्रयोर्लग्नस्थशनैश्चरदृष्टौ सत्यां युतौ तदेकदृष्ट्या मरणाय कल्पितौ इत्युक्तेन योगेनैव स्त्रीमरणस्य सिद्धत्वात् ॥ ६ ॥

अथ[6] गर्भस्य गर्भिण्याश्च निषेकलग्नवशात् प्रश्नलग्नवशाद् वा वक्तव्यमरिष्टं सार्धेन श्लोकद्वयेन दर्शयति —

अशुभ[7]द्वयमध्यसंस्थितौ
लग्नेन्दू न च सौम्यवीक्षितौ ।

---

१. 'ष्टं तोटकेनाह — (?) क. पाठः. २. 'पि । उ' क. ख. पाठः. ३. 'हैः स्त्री आ' क. ख. पाठः. ४. 'गर्भा म' ख. पाठः. ५. 'ति । अत्रै' ख. ग. पाठः. ६. 'थ योगान्तरं वैतालीयेनाह—' क. पाठः. ७. 'पापद्व' क. ग. पाठः.

युगपत् पृथगेव वा वदे-
न्नारी गर्भयुता विपद्यते ॥ ७ ॥

इति। अत्र यदीत्यध्याहार्यम्। लग्नेन्दू अशुभद्वयमध्यसंस्थितौ[1] सौम्यग्रीक्षितौ न यदि गर्भयुता नारी युगपत् पृथगेव वा विपद्यते इति वदेदिति सम्बन्धः। लग्नं च इन्दुश्च लग्नेन्दू पापयोर्द्वयोर्मध्यस्थितौ शुभग्रहैरदृष्टौ चेद् अत्रोक्तयोगसम्भवः। लग्नेन्द्वोः पापद्वयमध्यसंस्थितिस्त्रिधा सम्भवति। तत्र लग्नेन्दू एकराशिमध्यगतौ तस्य राशेराद्यन्तयोः पापग्रहौ तिष्ठतश्चेद् एकः प्रकारः। व्ययधनयोः पापग्रहौ तिष्ठतश्चेद् द्वितीयः। लग्नात् तृतीये लाभे वा चन्द्रः, द्वादशधनचतुर्थेषु[3] वा दशमव्ययधनेषु वा यथासम्भवम् अर्कभौमशनैश्चरास्तिष्ठन्ति चेत् तृतीयः। एषु त्रिष्वेकेन[4] प्रकारेण पापद्वयमध्यस्थयोः[5] लग्नस्येन्दोश्च शुभदृष्ट्यभावे गर्भयुता नारी विपद्यत इति वदेत्। लग्नेन्द्वोः पृथक्स्थितयोः पापद्वयमध्यस्थितौ चन्द्रस्य शुभग्रहदृष्टत्वे लग्नस्य च शुभग्रहदृष्ट्यभावे पृथग् गर्भ एव विपद्यत इति वदेत्। लग्नस्य शुभदृष्टत्वे सति चन्द्रस्य च शुभदृष्ट्यभावे पृथङ् नारी विपद्यत इति वदेत्। लग्नेन्द्वोरुभयोः पापद्वयमध्यसंस्थयोरपि शुभग्रहदृष्टौ सत्यां गर्भो गर्भिणी च क्लिश्यते न विपद्यत इति वदेत्। निषेकाध्यायनिर्दिष्टानाम् अरिष्टानां[6] प्रसवात् पूर्वमेव पाककालो निर्देश्य इति "निगदितमिह चिन्त्यं सूतिकालेऽपि युक्त्या" इति वक्ष्यमाणवशात् सिध्यति। अतो निषेकलग्नवशाद् निर्दिष्टा गर्भिण्या विपत्तिर्गर्भस्थस्य शिशोरविपत्तिश्च कथं घटत इति चेत् प्रसूतिकाले मातुर्विपत्तिसम्भवात्। तथाचोक्तं वाहटेन—

"वस्तिद्वारे विपन्नायाः कुक्षिः प्रस्पन्दते यदि।
जन्मकाले ततः शीघ्रं पाटयित्वोद्धरेच्छिशुम्॥"

इति[7]। अत्र च दूतलक्षणं दर्शयति—दूत(स्य? स्या)शुचित्वे प्रजानाशः। दैवज्ञस्य चेन्मातुः। एतज्जातकेऽपि योज्यम्॥ ७॥

---

१. 'पापद्व', २. 'चेद् ग' क. ग. पाठः. ३ 'वा व्य', ४. 'तृतीयष्वे', ५. 'ध्यसंस्थ' ख. पाठः. ६. 'ष्टयोगानां' ग. पाठः. ७. 'ति ॥ ७ ॥' ख. ग. पाठः.

अस्मिन् विषये योगान्तरं[1] वैतालीयेनाह —

**क्रूरे शशिनश्चतुर्थगे**
**लग्नाद् वा निधनाश्रिते कुजे ।**
**बन्ध्वन्त्यगयोः कुजार्कयोः**
**क्षीणेन्दौ निधनाय पूर्ववत् ॥ ८ ॥**

इति । शशिनश्चतुर्थगे क्रूरे कुजे निधनाश्रिते पूर्ववन्निधनाय भवति । लग्नाद् वा लग्नात् क्रूरे चतुर्थगते कुजे निधनस्थानगते च पूर्ववन्निधनाय भवति । पूर्ववदित्यनेन शुभग्रहदृष्टयभावे गर्भिण्या गर्भस्य च निधनं भवतीत्युक्तं भवति । अर्थाल्लग्नेन्द्वोरेकत्वेऽपि सूर्ये सूर्यपुत्रे वा चतुर्थगे कुजे चाष्टमस्थे शुभग्रहदृष्टयभावे गर्भगर्भिण्योर्विनाश इत्युक्तं भवति । अन्यल्लक्षणमाह[2] — कुजार्कयोर्बन्ध्वन्त्यगयोः लग्नस्य चतुर्थद्वादशस्थयोः क्षीणेन्दौ सति यत्रकुत्रस्थिते चन्द्रे शुभग्रहदृष्टयभावे पूर्ववन्निधनाय भवति ॥ ८ ॥

अधुना[3] मातुः शस्त्रनिमित्तं मरणयोगं गर्भस्रुतिज्ञानं च वैतालीयेनाह —

**उदयास्तगयोः कुजार्कयो-**
**र्निधनं शस्त्रकृतं वदेत् तदा ।**
**मासाधिपतौ निपीडिते**
**तत्काले स्रवणं समादिशेत् ॥ ९ ॥**

इति । तदा कुजार्कयोः उदयास्तगयोः शस्त्रकृतं निधनं वदेत् । तदा निषेककाले प्रश्नकाले वा कुजे उदयगते सूर्ये अस्तंगते च शस्त्रकृतं निधनं वदेत् । देहजरोगजं विना आगन्तुकशस्त्रकृतं निधनं वदेत् । शस्त्रमिति घातकवस्तूपलक्षणम् । इति गर्भगर्भिण्योररिष्टान्युक्त्वा गर्भस्यारिष्टमाहोत्तरार्धेन — मासाधिपतौ निपीडिते तत्काले स्रवणं समादिशेत् । मासाधिपतीन् वक्ष्यति । यस्य मासस्याधिपतिर्निपीडितः युद्धे पराजितः अथवा रविलुप्तकरः नीचगतो वा शत्रुक्षेत्रगतो वा तस्यां मासे गर्भस्य स्रवणं निर्दिशेत् ॥ ९ ॥

---

१. 'रमाह—'; २. 'अन्यदरिष्टमाह—' ख. ग. पाठः. ३. 'यं', ४. 'स्तं', ५. 'हरो', ६. 'स्मिन् मा' ख. पाठः.

गर्भसौख्यलक्षणं[1] वंशस्थेनाह —

**शशाङ्कलग्नोपगतैः शुभग्रहै-**
**स्त्रिकोणजायार्थसुखास्पदस्थितैः ।**
**तृतीयलाभर्क्षगतैरशोभनैः**
**सुखी च गर्भो रविणाभिवीक्षितः ॥ १० ॥**

इति । गर्भिणीगर्भयोराधाराधेयत्वाद् अत्र अभेदेन सुखलक्षणमुच्यते । (शुभग्रहैः ?) शशाङ्कलग्नोपगतैः त्रिकोणजायार्थसुखास्पदस्थितैः शुभग्रहैः तृतीयलाभर्क्षगतैः अशोभनैश्च गर्भः सुखी भवतीत्यन्वयः । शशाङ्कलग्नोपगतैः शशाङ्कोपगतैर्लग्नोपगतैर्वा[2] शशाङ्कलग्नोप[3]गतैर्वा । अथवा चन्द्राल्लग्नाद् वा त्रिकोणयोः कलत्रस्थाने वा धनस्थाने वा सुखस्थाने वा दशमस्थाने वा यथासम्भवं स्थितैः शुभग्रहैः बुधगुरुशुक्रैः । तथा तृतीयस्थाने वा लाभस्थाने वा स्थितैरशोभनैः । बहुवचननिर्देशाद् भौमशनिराहुकेतुभिश्च गर्भः सुखी भवति सम्यक् पुष्टिमश्नुते । रविणा अभिवीक्षितः सूर्येण निरीक्षितः । शशाङ्कस्य वा लग्नस्य वा योगकर्तुर्विशेषणमेतत् । शशाङ्कस्योक्तस्थानेषु स्थितेष्वशुभेषु शुभेषु च रविदृष्टिरस्ति चेद् अथवा लग्नस्योक्तस्थानेषु स्थितेषु शुभेष्वशुभेषु च रविदृष्टिरस्ति चेत् सुखयुक्तया गर्भिण्या सुखयुक्तो गर्भो धार्यत इत्युक्तं भवति[4]। शशाङ्कस्य वा लग्नस्य वा शशाङ्कलग्नयोर्वा यथोक्तस्थाने स्थितेषु शुभेष्वशुभेषु च रविदृष्टिरस्ति चेत् सुखयुक्तया गर्भिण्या सुखयुक्तो गर्भो धार्यत इत्युक्तं भवति ॥ १० ॥

अथ[5] निषिक्तस्य निषेककालाज्जातस्य जन्मकालादुभयोरपि प्रश्नकालाद् वा पुंस्त्रीविभागज्ञानं शार्दूलविक्रीडितेनाह—

**ओजर्क्षे पुरुषांशकेषु बलिभिर्लग्नार्कगुर्विन्दुभिः**
**पुंजन्म प्रवदेत् समांशसहितैर्युग्मेषु तैर्योषिताम् ।**
**गुर्वर्कौ विषमे नरं शशिसितौ वक्रश्च युग्मे स्त्रियं**
**द्व्यंशस्था बुधवीक्षणाच्च यमलं कुर्वन्ति पक्षे स्वके ॥ ११ ॥**

१. 'णमाह —' ख. ग. पाठः. २. 'तैर्वा लग्नो' ख. पाठः. ३. 'ग्नाद्वप' क. पाठः. ४. 'ति ॥ १० ॥' क. ग. पाठः. ५. 'द्वाभ्यां श्लोकाभ्याम् आहितस्य गर्भस्य स्त्रीत्वपुंस्त्वाविशेषनिरूपणप्रकारमाह —' ख. ग. पाठः.

इति । निषेकसमये प्रश्नसमये वा ओजर्क्षे पुरुषांशकेषु बलिभिः लग्नार्कगुर्विन्दुभिः पुंजन्म प्रवदेद् इत्यन्वयः । ओजराशौ ओजांशकेषु बलयुक्तैः लग्नार्कगुर्विन्दुभिः । लग्नं च अर्कश्च गुरुश्च इन्दुश्चेति द्वन्द्वः । एभिः पुञ्जन्म पुरुषस्य जन्म । गर्भस्थः पुरुष इति वदेत् । युग्मेषु समांशसहितैः तैः योषितां जन्म प्रवदेत् । समराशिषु वृषकर्कटादिषु षट्सु समांशगतैः बलिभिः लग्नार्कगुर्विन्दुभिः योषितां जन्म प्रवदेत् । गर्भगता स्त्री इति वक्तव्यमित्यर्थः । लग्नार्कगुर्विन्दूनाम् ओजयुग्मराश्यंशाङ्करे विशेषकथनार्थमाह — गुर्वर्कौ विषमे नरं कुरुतः । लग्नादिगणने विषमराशिस्थितौ गुर्वर्कौ गर्भस्थं पुरुषं कुरुतः । मेषादिगणने समराशिस्थित्या प्राप्तस्य[1] स्त्रीत्वस्यायमपवादः । तथा युग्मे स्थितौ[2] शशिसितौ वक्रश्च[3] स्त्रियं कुर्वन्ति । अत्र स्वतः स्त्रीग्रहस्यै[4] शुक्रस्य समराशिस्थित्या स्त्रीकर्तृत्वं[5] युक्तम् । अतश्चन्द्रेण तुल्य इति शशिसिताविति द्वन्द्वसमासः । वक्रश्चेति पृथङ्निर्देशेन कुजस्य लग्नादिसमराशिस्थित्या शोणिताधिक्यद्योतकत्वात् स्त्रीकर्तृत्वं[6], लग्नादिविषमराशिस्थितश्चेत् स्वतः पुरुषग्रहत्वात् पुरुषकर्तापि[7] भवतीति द्योत्यते । चतुर्थपादेन यमललक्षणमाह — उक्ताः ग्रहाः द्व्यंशस्थाः बुधवीक्षणात् स्वके पक्षे यमलं कुर्वन्ति च इत्यन्वयः । द्व्यंशस्थाः उभयराश्यंशकस्थाः बुधस्य[8] दृष्ट्या[9] स्वके पक्षे यमलं पुरुषपक्षे पुरुषद्वयं स्त्रीपक्षे स्त्रीद्वयं[10] कुर्वन्ति । कथम् । मिथुनधन्व्यंशकगतावादित्यजीवौ यदि बुधेन सन्दृ(श्य ? श्ये)ते तदा यमलौ द्वौ पुरुषौ वक्तव्यौ । यथासम्भवं कन्यामीननवांशकगताश्चन्द्रशुक्राङ्गारका यदा बुधेन दृश्यन्ते तदा यमले द्वे कन्ये कुर्वन्ति । अथ द्वावेव वर्गौ यथादर्शितस्थौ बुधः पश्यति तदैकः पुरुषश्चैका कन्या वक्तव्य इति ॥ ११ ॥

अथ पुञ्जन्मयोगान्तरमुपेन्द्रवज्रयाह—

**विहाय लग्नं विषमर्क्षसंस्थः**
**सौरोऽपि पुञ्जन्मकरो विलग्नात् ।**

---

१. 'प्तम' ग. पाठः. २. 'ता' ख. पाठः. ३. 'श्च एते स्त्रि' क. पाठः. ४. 'स्य स', ५., ६. 'र्तृकत्वं', ७. 'र्ता भ' ख. पाठः. ८., ९. 'ग' क. पाठः. १०. 'न्ति ॥ ११ ॥ वि' ख. पाठः.

प्रोक्तग्रहाणामवलोक्य वीर्यं
वाच्यः प्रसूतौ पुरुषोऽङ्गना वा ॥ १२ ॥

इति । लग्नं विहाय विलग्नाद् विषमर्क्षसंस्थः सौरोऽपि पुञ्जन्मकरो भवति । लग्नादिगणने लग्नादन्यत्र विषमराशिस्थितः तृतीयपञ्चमसप्तमनवमैकादशस्थितः सौरो गर्भस्थितं पुरुषं करोति । अपिशब्देन समराशिस्थितो बुधः स्त्रियं करोतीति द्योत्यते । उक्तानां योगानां स्फुटत्वाभावे विशेषमाह — प्रोक्तग्रहाणामिति । प्रोक्तग्रहाणां वीर्यमवलोक्य प्रसूतौ पुरुषोऽङ्गना वा वाच्यः । प्रोक्तानां ग्रहाणामुक्तेषु योगेषु पुरुषकारकत्वेनोक्तानां ग्रहाणां वीर्यमवलोक्य प्रसूतौ पुरुषो वाच्यः, स्त्रीकारकाणां ग्रहाणां वीर्यमवलोक्य प्रसूतौ स्त्री जायत इति वक्तव्यमित्यर्थः । पुरुषपक्षग्रहाणां यथोक्तम् उच्चत्रिकोणक्षेत्रातिमित्रमित्रोदासीनशत्र्वतिशत्रुनीचक्षांदिषड्वर्गसम्भवानि स्थानबलानि वक्रयुद्धसमागमभवानि चेष्टाबलानि दिग्बलकालबलनिसर्गबलानि च सम्यगानीय केन्द्रपणपरापोक्लिमस्थितिनिमित्तं च उत्तममध्यमाधमबलत्वं चावलोक्य लग्नस्य लग्नांशकस्य च यथोक्तबलमवलोक्य पुरुषपक्षग्रहराश्यंशकानां बलपिण्डाधिक्ये पुरुषः प्रसूयते, स्त्रीपक्षग्रहराश्यंशकानां बलपिण्डाधिक्ये स्त्री प्रसूयत इति च वक्तव्यमित्युक्तं भवति । यथोक्तयोगानां स्पष्टत्वे योगेनैव फलं वक्तव्यमिति सर्वत्र द्रष्टव्यम् । प्रोक्तग्रहाणामित्यत्र प्रशब्देन आदिग्रहणवशात् 'प्रागाद्या रविशुक्र' इत्यादिनोक्तानां स्थिरचक्रचराणां सूक्ष्मग्रहाणां स्थितिबलेनापि निरूपणीयम् इति चात्र द्योत्यते । पुरुषपक्षस्त्रीपक्षनिरूपणमप्यत्र श्लोकद्वये दर्शितम् । तद्यथा — ओजर्क्षे पुरुषांशकेषु इत्यत्र लग्नार्कगुर्विन्दूनाम् ओजयुग्मराश्यंशकसङ्करे सति ओजगतराश्यंशकप्रमाणा वराटिका दक्षिणतः स्थाप्याः । युग्मराश्यंशकसंख्या वराटिका उत्तरतः स्थाप्याः । ततो गुर्वर्कौ लग्नादिविषमराशिस्थौ चेद् दक्षिणतः संयोज्यौ । शशिसितवक्रा लग्नादिसमराशिस्थिताश्चेद् वामतः संयोज्याः । एतेषु ग्रहेषु उभयराशिस्थितेषु यस्य बुधदृष्टिः तस्य स्वपक्षे

---

१. 'नां ग्रहाणां वि' ग. पाठः. २. 'धि' क. पाठः. ३. 'लं चा' ख., 'लत्वमव' क. पाठः. ४. 'षं' क. पाठः. ५. 'ति व' ख. पाठः. ६. 'के सति' ग. पाठः.

द्विगुणं योजनीयम् । ततः पुनरपि शनैश्चरो लग्नादन्यत्र विलग्नादिविषम-राशिस्थितश्चेद् दक्षिणभागे एकं योजनीयम् । सौरोऽपीत्यत्रापिशब्देन बुधो विलग्नादिसमराशिस्थश्चेद् वामभागेऽपि एकं योजनीयम् । वक्रश्चेति पृथङ्निर्देशेन कुजस्य वक्रबलेवत्त्वे लग्नाद् ओजराशिस्थित्यां दक्षिणभा-गेऽपि एकं योजनीयम् । एवं संयोजितेषु दक्षिणस्थानामाधिक्यं चेत् पुरुषः वामस्थानामाधिक्यं चेत् स्त्री प्रसूयत इति वक्तव्यम् । लग्नशब्देन 'लगे सङ्गे' इत्यस्माद् धातोर्निष्पन्नेन पूर्वक्षितिजे उदीयमाना क्षितिज-सङ्गिनी राशिकला च तथा प्रश्नकाले पृच्छकप्राभृताधिष्ठितस्थिरचक्र-कला च तन्त्रेणोच्यते । अतो लग्नारूढयोर्बलाधिकेन वक्तव्यमिति सिद्धं भवति । इमौ श्लोकौ 'निगदितमिदं चिन्त्यं सूतिकालेऽपि युक्त्ये'ति वक्ष्यमाणत्वात् प्रसूतस्य पुंसः स्त्रियो वा सन्तानचिन्तायामपि योज-नीयौ । अत्र पुञ्जन्मेति पुत्रजनकत्वमुच्यते योषितामित्यत्र योषिज्ज-नकत्वं विवक्ष्यते । श्रीपतिश्रीधरगोविन्दादिप्रणीतपद्धतिप्रदर्शिते ग्र-हलग्नानां बलानयने पृथग् ग्रहबलपिण्डानां षड्भ्योऽधिकत्वे अति-बलत्वं षट्प्रमाणत्वे बलवत्त्वं षड्भ्यो हीनत्वे हीनबलत्वं चात्र अक्षर-संख्यया षट्संख्यस्य षु इत्येतस्योपरि बलिभिरित्युक्त्या सूचितम् । इदं च सर्वत्र बलाबलोक्तौ द्रष्टव्यम् ॥ १२ ॥

अथ क्लीबयोगान् शार्दूलविक्रीडितेनाह—

**अन्योन्यं यदि पश्यतः शशिरवी यद्यार्किसौम्यौ तथा**
**वक्रो वा समगं दिनेशमसमे चन्द्रोदयौ चेत् स्थितौ ।**
**युग्मौजर्क्षगतावपीन्दुशशिजौ भूम्यात्मजेनेक्षितौ**
**पुम्भागे सितलग्नशीतकिरणाः स्युः क्लीबयोगाः स्मृताः ॥**

इति । अत्रोत्तरार्धगतं युग्मौजर्क्षगतावपीति पदं द्विवचनोक्तिब-लात् पूर्वत्र योगद्वयेऽप्यनुकृष्यते । असम इति पदं तृतीयचतुर्थयोगयो-र्मध्यस्थितं भित्तिप्रदीपन्यायेन तयोर्द्वयोरपि योजनीयम् । युग्मौजर्क्ष-

१. 'शिषु स्थि', २. 'ल्त्वे' ख. पाठः. ३. 'सूचक' क. पाठः. ४. 'ति', ५. 'ति पुं पु' क. ग. पाठः. ६. 'ह्ये षु' ग. पाठः. ७. 'थ नपुंसकलक्षणमाह —' ख. ग. पाठः. ८. 'चिति' क. ग. पाठः. ९. 'त्तिदी' क. पाठः.

गतौ शशिरवी अन्योन्यं पश्यतः यदि एकः क्लीबयोग इति सम्बन्धः । युग्मराशिगतश्चन्द्र ओजराशिगतः सूर्यश्च अन्योन्यं पश्यतो यदि तदा एकः क्लीबयोगः । तथा युग्मौजर्क्षगतौ आर्किसौम्यौ परस्परं पश्यतो यदि तदा द्वितीयः क्लीबयोगः । असमे वक्रः समगं दिनेशं पश्यति यदि तदा तृतीयः क्लीबयोगः । इति योगत्रितयम् । असमे स्थितौ चन्द्रोदयौ भूम्यात्मजेनेक्षितौ चेद् एकः क्लीबयोगः । ओजराशिस्थितं चन्द्रम् ओजराशिस्थितं लग्नं च यत्रकुत्रस्थितो भौमः पश्यति चेदित्यर्थः । युग्मौजर्क्षगतौ इन्दुशशिजौ भूम्यात्मजेनेक्षितौ चेद् द्वितीयः क्लीबयोगः । युग्मगतं चन्द्रम् ओजगतं बुधं च यत्रकुत्रस्थितो भौमः पश्यति चेदिति भावः । पुम्भागे सितलग्नशीतकिरणा ओजभागे शुक्रलग्नचन्द्राः यदि तिष्ठन्ति तदा तृतीयः क्लीबयोगः । इति च योगत्रितयम् । एते षड् योगाः क्लीबयोगाः स्मृताः । मुनिभिरिति शेषः । अत्र बादरायणः—

"अन्योन्यं रविचन्द्रौ विषमर्क्षसमर्क्षगौ निरीक्ष्येते ।
इन्दुजरविपुत्रौ वा तथैव गर्भे नपुंसकं कुरुतः ॥
समराशिग(तः? तं) सूर्यं वक्रो विषमर्क्षगोऽवलोकयति ।
विषमर्क्षे लग्नेन्दू कुजेक्षितौ षण्डसम्भवं कुरुतः ॥
बुधचन्द्रौ कुजदृष्टौ विषमर्क्षगतौ तथैवोक्तौ ।
ओजनवांशकसंस्था लग्नेन्दुसितास्तथैवोक्ताः ॥"

इति । द्विविधाः क्लीबाः स्त्रीपुरुषव्यञ्जनहीनाः स्त्रीपुरुषधर्महीनाश्च । तेऽपि स्त्रीरूपिणः पुरुषरूपिणश्चेति (त्रि? द्वि)विधाः । तत्र व्यञ्जनहीनाः प्रथमयोगत्रयेण लक्ष्यन्ते । धर्महीना द्वितीययोगत्रयेणेति द्रष्टव्यम् । शुक्लशोणितयोगसम्भवः खलु गर्भः । तत्र शुक्लाधिक्ये पुरुषो जायते । शोणिताधिक्ये स्त्री । शुक्लशोणितयोः साम्ये नपुंसकम् इति व्यवस्थिते पुंबीजकारकस्य सूर्यस्य स्त्रीशोणितकारकस्य चन्द्रस्य च परस्परंदृष्टिसाम्ये

---

१. 'श्च परस्परं प' क. ग. पाठः. २. 'यः । इ' क. पाठः. ३. 'मे च' क. ग. पाठः. ४. 'तः कुजः प' क. पाठः. ५. 'ति यो' ख. पाठः. ६. 'षः । द्वि' ख. ग. पाठः. ७. 'रं' ग. पाठः.

शुक्रशोणितयोः साम्यं लक्ष्यते। तच्च दृष्टिसाम्यं सप्तमदृष्टौ न सम्भवति। तदा तयोर्युग्मौजर्क्षगतत्वासम्भवात्। ततस्त्रिदशत्रिकोणचतुरश्रगतास्वपि दृष्टिषु परस्परसाम्यं पद्धतिप्रदर्शितदृष्टिषष्ट्यंशानयने षष्ठाष्टमस्थयोरेव भवति। तत्र परस्परदृष्टिसाम्यसम्भवे योगत्रये शुक्रशोणितसाम्यसम्भवाद् व्यञ्जनहीनं नपुंसकं विवक्ष्यते। उत्तरत्र योगत्रितये प्रथमद्वितीययोः सत्त्वकारकभौमदृष्टिजन्यत्वात् तृतीये पुरुषस्वभावराश्यंशकैः स्त्रीस्वभावशुक्रचन्द्राभ्यां च लक्षितत्वात् स्त्रीपुरुषधर्मसङ्करसम्भवेन केवलं स्त्रीपुरुषधर्महीनं नपुंसकं विवक्ष्यते। अत्र योगेषु स्त्रीपुरुषलक्षकांशकबलाबलवशात् स्त्रीरूपत्वं पुरुषरूपत्वं वा वक्तव्यम्। एते पूर्वोक्तयोगाभावे वक्तव्याः। तेषां योगानामेतेषां च सम्भवे तेषामेव बलवत्त्वम्। एतज्जातकेऽपि विचिन्तनीयम्। तत् कथम्। क्लीबयोगस्यैकत्वे सति स्पष्टतरं न दृश्यते। द्वित्वे सति पूर्णमेव। योगकर्ता बलहीनश्चेत् तस्य दशायामन्तर्दशायां वा अर्जुनादिवत् क्लीबत्वम्। अथवा जायासन्निधौ तां गन्तुमशक्ततया प्र(ल?स)वादिकं वा विचिन्त्य वक्तव्यम्॥ १३॥

इति स्त्रीपुन्नपुंसकलक्षणमुक्त्वा गर्भस्य यमलत्वविशेषं शार्दूलविक्रीडितेनाह —

**युग्मे चन्द्रसितावथौजभवने स्युर्ज्ञारजीवोदया**
**लग्नेन्दू नृनिरीक्षितौ च समगौ युग्मेषु वा प्राणिनः।**
**कुर्युस्ते मिथुनं ग्रहोदयगतान् द्व्यङ्गांशकान् पश्यति**
**स्वांशे ज्ञे त्रितयं ज्ञगांशकवशाद् युग्मं त्वमिश्रैः समम्॥**

इति। अथ युग्मे चन्द्रसितौ ओजभवने ज्ञारजीवोदयाः स्युः ते मिथुनं कुर्युः। युग्मराशिस्थितौ चन्द्रशुक्रौ ओजराशिस्थिता बुधकुजगुरवः उदयलग्नं च गर्भगतं मिथुनं कुर्युः। यमलत्वे एकं पुरुषम् एकां स्त्रियं कुर्युः। तथा लग्नेन्दू समगौ नृनिरीक्षितौ च मिथुनं कुर्याताम्। समराशिगतौ उदयलग्नचन्द्रौ नृनिरीक्षितौ सूर्यकुजगुरुभिः पुरुषग्रहैस्त्रिभि-

१. 'त्र त्रिद' ग. पाठः. २. 'रं प' ख. पाठः. ३. 'भ्ययो' क. पाठः. ४. 'वयोगद्धु' ग. पाठः. ५. 'ल' ख. पाठः. ६. 'म् ॥ १३ ॥' ख. ग. पाठः. ७. 'षमाह—' ख., 'षणमाह—' ग. पाठः.

रपि निरीक्षितौ मिथुनं कुर्याताम् । युग्मेषु प्राणिनः ते वा । युग्मराशिषु प्राणिनः प्राणवन्तः बलाधिका इति यावत्, ते ज्ञारजीवोदयाः मिथुनं कुर्युः । ग्रहोदयगतान् भ्रङ्गांशकान् स्वांशे ज्ञे पश्यति त्रितयं भवति । ग्रहोदयगतान् ग्रहैरुदयलग्नेन च प्राप्तान् अधिष्ठितान् भ्रङ्गांशकान् स्वांशगते बुधे पश्यति त्रितयं भवति गर्भस्थं प्रजात्रयं भवति । तत्र भ्रगांशकवशाद् युग्मं बुधाधिष्ठितांशकवशाद् युग्मं, बुधो मिथुनांशगतश्चेद् द्वौ पुरुषौ एका स्त्री, बुधः कन्यांशगतश्चेद् द्वे स्त्रियौ एकः पुरुष इति । अमिश्रैः समम् । अमिश्रैः अन्येऽपि पुरुषराशिभ्रङ्गांशकस्थाः बुधश्च मिथुनांशगतैः पश्यति चेत् त्रयः पुरुषाः । अन्ये कन्यामीनांशगताः बुधः कन्यांशगतैः पश्यति चेत् तिस्रः स्त्रियो भवन्ति । तथाच सारावल्यां —

"समराशौ शशिसितयोर्विषमे गुरुवक्रलग्नसौम्येषु ।
योगेऽस्मिन् गर्भगतं मिथुनं गर्भस्थितं(?) वाच्यम् ॥
लग्ने(न्दू)वा समगौ पुंग्रहदृष्टौ च मिथुनजन्मकरौ ।
उदयज्ञवक्रगुरवो बलिनः समराशिगास्तथैवोक्ताः ॥
द्विशरीरांशकयुक्तान् ग्रहान् विलग्नं च पश्यतीन्दुसुतः ।
कन्यांशे द्वे कन्ये पुरुषश्चैको निषिच्यते गर्भे ॥
मिथुनांशे कन्यैका द्वौ पुरुषौ त्रितयमेवं स्यात् ।
मिथुनधनुरंशकगतान् ग्रहान् विलग्नं च पश्यतीन्दुसुतः ॥
मिथुनांशस्थश्च यदा पुरुषत्रितयं तदा गर्भे ।
कन्यामीनांशस्थान् विहगानुदयं च युवतिभागगतः ॥
पश्य[illegible]िरगुतनयः कन्यात्रितयं तदा गर्भे ।"

एतज्जातके चे[illegible] दृश्यते (चेद् ?) मिथुनांशकस्थस्य बुधस्य बहुकलत्रता ताः पुरुष[illegible]कृतयश्च, कन्यांशकस्थश्चेदपि बहुकलत्रता ताः कन्याप्रसूतयोऽपि भ[illegible]न्ति इति ॥ १४ ॥

---

१. 'नः यु' ग. पाठः. २. 'बलव' ख. पाठः. ३. 'ति । त' क. पाठः. ४., ५. 'तं' ग. पाठः. ६. 'न्ति ॥ १४ ॥' ख. ग. पाठः.

गर्भस्य बहुप्राणिस्वरूपत्वलक्षणमुपजातिकयाह[1][2] —

**धनुर्धरस्यान्त्यगते विलग्ने**
**ग्रहैस्तदंशोपगतैर्बलिष्ठैः[3] ।**
**बुधार्किणा वीर्ययुतेन दृष्टे**
**सन्ति प्रभूता अपि कोशसंस्थाः ॥ १५ ॥**

इति[4] । विलग्ने धनुर्धरस्य अन्त्यगते वीर्ययुतेन बुधार्किणा दृष्टे तदंशोपगतैः बलिष्ठैर्ग्रहैः[5] कोशसंस्थाः प्रभूता अपि सन्ति । लग्ने धनुषि धनुरंशके सति वीर्ययुतेन बुधेनार्किणा च दृष्टे तदंशोपगतैः धनुरंशोपगतैः धनुरंशस्थितैः ग्रहैः सर्वैर्यत्रकुत्रापि स्थितैश्चापांशगतैः सर्वग्रहैरित्यर्थः । कोशसंस्थाः जरायुस्थिताः प्रभूता अपि बहवोऽपि भवन्ति[6] । एतज्जातके चेद् बहुजनपरिवारो भवति ॥ १५ ॥

गर्भगतप्रजालक्षणमुक्त्वा शुभाशुभनिरूपणाय क्रमेण मासाधिपतीन्[7] नर्कुटकेनाह —

**कललघनाङ्कुरास्थिचर्माङ्गजचेतनदाः**
**सितकुजजीवसूर्यचन्द्रार्किबुधाः परतः ।**
**उदयपचन्द्रसूर्यनाथाः क्रमशो गदिता**
**भवति शुभाशुभं च मासाधिपतेः सदृशम् ॥ १६ ॥**

इति । मासाश्चतुर्विधाः । तथाचोक्तं —

"सौरं विदुर्भास्करराशिभोगाद् दर्शावधिं मासमुशन्ति चान्द्रम् ।
त्रिंशद्दिनं सावनसंज्ञमाहुर्नाक्षत्रमिन्दोर्भगणभ्रमेण ॥"

इति । उक्तेषु चतुर्विधेषु मासेषु अत्र सौरं नाक्षत्रं चाङ्गीकृत्य योजनीयम् । तत्र सौरमासयोजने तावत् सितकुजजीवसूर्यचन्द्रार्किबुधाः कललघनाङ्कुरास्थिचर्माङ्गजचेतनदा भवन्ति इत्यन्वयः । तत्र प्रथममासाधिपः शुक्रः निषिक्तं बीजं[8] कललं शोणितेन मेलयित्वा सान्द्रं करोति । द्वितीयमासाधिपः कुजः सान्द्रीभूतं गर्भं घनं करोति । तृतीय-

---

१. 'त्वमाह' ग. पाठः. २. 'णमाह' ख. पाठः. ३. 'लस्थैः ।' क. पाठः. ४. 'ति । ल' ख. पाठः. ५. 'लस्थैर्ग्र' क. पाठः. ६. 'न्ति ॥ १५ ॥', ७. 'तीना' ख. ग. पाठः. ८. 'जं शो' ख. पाठः.

मासाधिपो जीवो घनीभूतस्य गर्भस्य अङ्कुरं करचरणाद्यवयवानाम् अङ्कुरं करोति । ततो जीवस्तृतीयमासि पुंस्त्रीक्लीबव्यक्तिं करोतीत्युक्तं भवति । चतुर्थमासाधिपः सूर्यो गर्भस्य अस्थीनि जनयति । पञ्चममासाधिपश्चन्द्रः चर्म त्वचं जनयति । षष्ठमासाधिपो मन्दः अङ्गजानि नखरोमाणि करोति । ततः सप्तममासाधिपो बुधः चेतनं चैतन्यं करोति । इति सप्तभिर्मासैर्गर्भस्य सम्पूर्णतां सुखदुःखज्ञानं च उक्तक्रमेण ग्रहाः कुर्वन्तीत्यर्थः । परत उदयपचन्द्रसूर्यनाथा अष्टमनवमदशमा मासाः क्रमेण लग्नाधिपचन्द्रसूर्यनाथा भवन्ति । अष्टमस्य मासस्य निषेककाललग्नाधिपः प्रश्नकाललग्नाधिपो वा नाथो भवति, नवमस्य चन्द्रः दशमस्य सूर्य इति क्रमेण दशमासात्मकस्य गर्भधारणसौरकालस्याधिपतयः । अस्मिन् काले द्वादश नाक्षत्रमासाः प्रायेण सम्भवन्ति । नाक्षत्रमासस्य सप्तविंशतिदिनात्मकत्वात् । एषु नाक्षत्रमासेषु परतः अवसाने त्रयः दशमैकादशद्वादशाः उदयपचन्द्रसूर्यनाथाः, आदितः सप्त सितकुजजीवसूर्यचन्द्रार्किबुधनाथाश्च कथिताः । मध्ये द्वौ अष्टमनवममासौ शिष्टौ । तयोः परतःशब्देन संज्ञाध्याये 'राहुस्तमोऽगुरसुरश्च शिखीति केतुरि'ति ग्रहेभ्यः परत उक्तौ राहुकेतू नाथाविति वेदितव्यौ । अत्र पक्षे गर्भाधानदिवसात् प्रभृति सप्तविंशतिर्दिनानि प्रथमो मासः, तस्य शुक्रोऽधिपतिः । ततः सप्तविंशतिर्द्वितीयो मासः, तस्य कुजोऽधिपतिः । इत्यादि द्रष्टव्यम् । एवमष्टभिः सौरमासैर्नव नाक्षत्रमासा भवन्ति । अत्र सौरपक्षे अष्टमस्य मासस्य लग्नाधिपो नाथः । नाक्षत्रपक्षे केतुः । अष्टममासस्य ओजःसङ्क्रमणात्मकत्वाद् ओजःकारकेण सत्त्वात्मकेन कुजेन तुल्यफलस्य केतोराधिपत्यं युक्तम् । तथाचोक्तम्—

"ओजोऽष्टमे सञ्चरति मातापुत्रौ मुहुः क्रमात् ।
तेन तौ म्लानमुदितौ तत्र जातो न जीवति ॥
शिशुरोजोनवस्थानान्नारी संशयिता भवेत् ।
तस्मिन्नेकाहयाते तु कालः सूतेरतःपरम् ॥"

---

१. 'नि करोति । अङ्गजानि नखरोमाणि । त' क. ग. पाठः. २. 'स्य पूर्ण', ३. 'म', ४. 'त्रस्य मा' ख. पाठः. ५. 'मौ' ख. ग. पाठः. ६. 'ति द्र', ७. 'साः सम्भवे', ८. 'ब' ख. पाठः.

इति । मासाधिपतीनुक्त्वा तत्फलमाह—शुभाशुभं च मासाधिपतेः सदृशं भवति । मासाधिपतिरुच्चक्षेत्रमित्रादिगतश्चेत् तस्य मासे तदुक्तानि शुभफलानि वक्तव्यानि । शत्रुनीचादिगतश्चेत् तदुक्तान्यशुभानि वक्तव्यानि । कुत्रोक्तानीति चेद् दशाफलादिषूक्तानीत्यनुसन्धेयम् ।

"संज्ञाध्याये यस्य यद् द्रव्यमुक्तं कर्माजीवे यस्य यच्चोपदिष्टम् ।
भावस्थानालोकयोगोद्भवं च तत् तत्सर्वं तस्य योज्यं दशायाम् ॥"

इत्युक्तन्यायेन स्वस्वमासे स्वकीयानि शुभाशुभानि प्रयच्छन्ति अत्र इति यावत् । मासाधिपतिग्रहस्वभावेन कटुकलवणादिरसेषु देवाग्निविहारकोशशयनादिस्थानेषु शब्दस्पर्शादिगुणेषु वा गर्भिण्या रुचिर्जायते । राश्यंशकदृष्टियोगादिवशेन तद्विशेषो विनिर्दे[३]श्यः । तथा शत्रु[४]नीचादिगतत्वे मासाधिपतेरशुभानि शोफज्वरादीनि च वाच्यानि । ग्रहाणां मौढ्यपराजयादिभिरतिकष्टफलप्रदत्वे स्वकीयमासे गर्भस्रवणमपि भवतीति पूर्वमेवोक्तं—'मासाधिपतौ निपीडिते तत्काले स्रवणं समादिशेद्' इति । अत्र तु गर्भिणीगर्भयो रोगमात्रमशुभशब्देनोक्तम् । रोगस्य चिकित्सया शान्तिर्भवति । यथोक्तं—

"गर्भिण्याः परिहार्याणां सेवया रोगतोऽपि वा ।
[८]पुष्पे दृष्टेऽथवा शूले प्रत्याख्याय प्रसाधयेत् ॥"

इति । गर्भस्यापि रोग उक्तः । तथाहि—

"सञ्जातसारे महति गर्भे योनिपरिस्रवात् ।
वृद्धिमप्राप्नुवन् गर्भः कोष्ठे तिष्ठति सस्फुरः ॥
उपविष्टकमाहुस्तं वर्धते तेन नोदरम् ।
शोकोपवासरूक्षाद्यैरथवा योन्यतिस्रवात् ॥
वाते क्रुद्धे कृशः शुष्येद् गर्भो नागोदरं तु तत् ।
उदरं वृद्धमप्यत्र हीयते स्फुरणं चिरात् ॥"

१. 'स्मिन् मा' ख. पाठः. २. 'म्ब्वग्नीत्यादि' क., 'म्ब्वग्न्यादि' ग. पाठः. ३. 'पि' क. ग. पाठः. ४. 'दिग्गृहग' ग. पाठः. ५. 'नि वा', ६. 'क्तम् । अ' ख. पाठः. ७. 'वतीति' ख. पाठः. ८. 'भिण्या अपि' क. पाठः.

इत्यादिवैद्यशास्त्रोक्तानाम् उपविष्टकनागोदरादीनां चिकित्सासाध्यानां गर्भरोगाणां लक्षणं मासाधिपतेरशुभप्रदत्वे सति राश्यंशकदृष्टियोगवशाद् बोद्धव्यमिति अत्राशुभशब्देन द्योत्यते । पूर्वत्र 'मासाधिपतौ निपीडिते' इत्यत्र असाध्यस्य गर्भस्रावस्य लक्षणमुक्तमिति अत्र न पौनरुक्त्यावकाशः । तत्र पूर्वत्र 'तत्काले स्रवणं समादिशे'दित्युक्त्या अस्मिन् मासे अस्मिन् नक्षत्रेऽस्मिन् वारेऽस्मिन् राशौ अस्यां कालहोरायां स्रवणस्य सम्भव इति कालविशेषस्यापि समादेश्यत्वं विहितम्। तच्चासाध्यस्य गर्भस्रावस्यैव कालविशेषलक्षणं घटत इति च सर्वमनवद्यम् । अत्र च दूतलक्षणं दर्शयति — स्थिरचक्रे यस्मिन् राशौ गर्भिणी दृश्यते तद्राश्यधिपोक्तरसाभिला(षी ? षिणी) च भवति । बलहीने तद्रसहेतुको रोगो वाच्यः ॥ १६ ॥

अथ[3] च गर्भस्थस्य जन्तोः पूर्वकर्म[4]विपाकसम्भवामङ्गानामूनातिरिक्ततां वंशस्थेनाह—

त्रिकोणगे ज्ञे विबलैस्ततोऽपरै-
मुखाङ्घ्रिहस्तैर्द्विगुणैस्तदा भवेत् ।
अवाग् गवीन्दावशुभैर्भसन्धिगैः
शुभेक्षिते चेत् कुरुते गिरं चिरात् ॥ १७ ॥

इति । तदा ज्ञे त्रिकोणगे ततः अपरैः विबलैः द्विगुणैः मुखाङ्घ्रिहस्तैः उपलक्षितः भवेदित्यन्वयः । अपरैः अन्यैः ततः बुधादन्यैः गुरुशुक्रमन्दैः । परे न भवन्तीति नञ्समासेन बुधात् पूर्वे व्युत्क्रमात् कुजचन्द्रसूर्या उच्यन्ते । तथा अपरशब्देन अन्यार्थेन क्रमाद् गुरुशुक्रशनैश्चराश्चोच्यन्ते । ततस्तयोरपरशब्दयोर्भिन्नार्थयोरपि समानरूपत्वात् 'सरूपाणामेकशेष एकविभक्तौ'(१. २. ६४) इत्येकशेषत्वात् ततोऽपरैरिति पूर्वे त्रयः परे त्रयश्च ग्रहा गृह्यन्ते । ततः बुधात् पूर्वपराभ्यां कुजगुरुभ्यां विबलाभ्या हीनबलाभ्यां मुखद्वैगुण्यं भवति । ततः पूर्वपराभ्यां चन्द्रशुक्राभ्याम् अङ्घ्रिद्वैगुण्यं भवति । ततः (पूर्व) पराभ्यां सूर्यशनैश्चराभ्यां हस्तद्वैगुण्यं भवति । द्वैगुण्यं चात्र विबलग्रहजन्यत्वेन

---

१. 'ते स्रवणं इ' ख. पाठः. २. 'म् ॥ १६ ॥', ३. 'थ चतुर्भिः श्लोकैर्गर्भस्थ' ख. ग. पाठः. ४. 'जन्मवि' ख. पाठः. ५. 'तः प' क. पाठः. ६. 'ति । सू' क. ख. पाठः.

विकृतत्वे परिणमति । 'वियोनिविकृताकारा जायन्ते विकृतैर्मलैरि'ति वैद्यशास्त्रोक्तं गर्भस्थजन्तोर्विकृताकारत्वम् अत्रोक्तेन लक्षणेन वक्तव्यमित्युक्तं भवति । अत्र केचित्—ज्ञे त्रिकोणगे उदयपञ्चमनवमेष्वन्यतमस्थे ततोऽपरैर्विबलैर्मुखाङ्घ्रिहस्तैर्द्विगुणैर्युतस्तदा भवेत् । बुधोदये द्विशिराः, पञ्चमस्थे सति चतुर्भुजत्वं नवमस्थे चतुष्पात्त्वम् । एवं विबलैरशुभैश्च । बलयुतैरपरैरन्यथा । त्रिकोणग इत्यत्रानुवर्तते । बुधे बलयुते सति वाग्बाहुल्यं बलहीने मुखरोगः । पञ्चमस्थो बलिष्ठश्चेद् बाह्वोर्बलाधिक्यं बलहीनश्चेद् हस्तच्छेदः । नवमस्थो बलिष्ठश्चेद् वे(गे ? ग)यायित्वं तत्रापि विहगद्रेक्काणे चेद् रज्जुगमनादिक्रीडनं, बलहीनश्चेद् अङ्घ्रिच्छेदः इति । उत्तरार्धेन वागिन्द्रियविकृतिमाह — गवि इन्दौ भसन्धिगैरशुभैः अवाग् भवतीत्यन्वयः । अत्रापि गोशब्दस्योभयार्थत्वं विवक्ष्यते । गवि वृषभराशौ इत्येकोऽर्थः । गोशब्दस्य वागर्थत्वाद् गवि वाचि द्वितीयभावे इत्यन्योऽर्थः । वृषभोऽपि कालपुरुषस्य वाग्रूप इति वाग्विशेषलक्षणो गृह्यते । भसन्धिशब्देन कर्कटवृश्चिकमीनान्त्यद्रेक्काणा गृह्यन्ते । अवागिति वक्तुमशक्त इत्यर्थः । शुभेक्षिते चेत् चिराद् गिरं कुरुते । चन्द्रः शुभेन दृष्टश्चेत् चिरात् स्खलित्वा गिरं कुरुते । अर्थादेव भसन्धिगैः शुभैः प्रियवाग् भवति, शास्त्रव्याख्यानपरत्वं च । अत्र गार्गिः—

"कुलीरालिझषान्त्यस्थैः पापैश्चन्द्रे वृषोपगे ।
मूकः पापेक्षिते सौम्यैश्चिरेण लभते गिरम् ॥
मिश्रदृष्टे ग्रहबलान्मूको वा लग्नवाक् चिरम् ।"

इति ॥ १७ ॥

कुब्जादियोगान् मन्दाक्रान्तयाह —

**सौम्यर्क्षांशे रविजरुधिरौ चेत् सदन्तोऽत्र जातः**
**कुब्जः स्वर्क्षे शशिनि तनुगे मन्दमाहेयदृष्टे ।**
**पङ्गुर्मीने यमशशिकुजैर्वीक्षिते लग्नसंस्थे**
**सन्धौ पापे शशिनि च जडः स्यान्न चेत् सौम्यदृष्टिः ॥ १८ ॥**

---

१. 'ति । विकृतारिछन्नभिन्नता ग्रन्थ्यादिसम्भवः अङ्गुल्याधिक्यं वा । ग्रहराश्यंशकबलेन तद्विशेषो वाच्यः । उक्त' ख. ग. पाठः. २. 'गिति' ग. पाठः. ३. 'गे' क. ख. पाठः, ४. 'ते ॥ १७ ॥ सौ' ख. ग. पाठः.

इति । अत्र सौम्यर्क्षांशे रविजरुधिरौ चेत् सदन्तः जात इत्यन्वयः । अत्रेति प्रश्नकाले निषेककाले वा । रविजरुधिरौ बुधस्य राशावंशके वा तिष्ठतश्चेद् गर्भस्थजन्तुः सदन्तो भवतीत्यर्थः । पुनरपि (कु? ग)जदन्तादिना शिल्पव्यापारकुशलश्च भवति । शशिनि स्वर्क्षे तनुगे मन्दमाहेयदृष्टे कुब्जो भवति । चन्द्रे कर्कटकस्थिते लग्नगते रविजरुधिराभ्यां दृष्टे कुब्जो भवति, आवासनिर्माणतत्परश्च । पुनरपि लिख्यते । यत्रतत्र राशाववस्थिते शशिनि लग्ने बलयुते मन्दमाहेयदृष्टे सति आभनवगृहनिर्माणतत्परो भवति । उभौ बलहीनौ चेद् वातेन कुब्जत्वमिति । लग्नर्क्षस्थे मीने यमशशिकुजैर्दृष्टे पङ्गुर्भवतीत्यन्वयः । सन्धौ पापे शशिनि च सौम्यदृष्टिर्न चेद् जडः स्यात् । सन्धौ कर्कटवृश्चिकमीनेष्वन्यतमे पापग्रहे चन्द्रे च स्थिते सति शुभदृष्टिर्नास्ति चेद् जडो भवति श्रोतुं वक्तुमशक्तो भवति । न चेत् सौम्यदृष्टिरिति योगचतुष्टयेऽपि संबध्यते बलवच्छुभदृष्टौ सत्यामुक्तयोगाभावः इति ॥ १८ ॥

वामनकहीनाङ्गयोगौ दोधकेनाह —

> सौरशशाङ्कदिवाकरदृष्टे
> वामनको मकरान्त्यविलग्ने ।
> धीनवमोदयगैश्च दृगाणैः
> पापयुतैरभुजाङ्घ्रिशिराः स्यात् ॥ १९ ॥

इति । मकरान्त्यविलग्ने सौरशशाङ्कदिवाकरदृष्टे वामनको भवति । मकरस्यान्त्यं मकरान्त्यं तत्रे विलग्ने सौरशशाङ्कदिवाकरैस्त्रिभिरपि दृष्टे गर्भस्थजन्तुर्वामनकः । 'खर्वो ह्रस्वश्च वामन' इत्यमरः । अल्पार्थे कप्रत्ययः । ह्रस्वतरशरीरो भवतीत्यर्थः । अन्त्यविलग्न इत्युक्तिसामर्थ्याद् अन्त्यस्य मीनराशेरपि विलग्नत्वे सौरशशाङ्कदिवाकरदृष्टौ सत्याम् एतत् फलं योज्यम् । एते सौरादयो बलवन्तश्चेद् वामनकत्वं विष्णवात्मकत्वं, मध्यबलाश्चेद् ह्रस्वत्वं, हीनबलाश्चेद् वाममार्गो-

१. 'र्थः । श' ख. ग. पाठः. २. 'ति । लग्न' ख. पाठः. ३. 'ति । लग्न' ग. पाठः. ४. 'ति ॥ १८ ॥ सौ' ख. ग. पाठः. ५. 'स्य' ग. पाठः. ६. 'म् । पा' ख. ग. पाठः.

न्वेषी आत्मज्ञानरहितः। पापयुतैः धीनवमोदयगैः दृगाणैः अभुजाङ्घ्रिशिराः स्याच्च। चशब्देन सौरशशाङ्कदिवाकरदृष्टत्वमत्राप्यनुकृष्यते। पापयुतैः भौमराहुकेतुयुतैः सौरशशाङ्कदिवाकरदृष्टैः दृगाणैः पञ्चमनवम[illegible]स्थितैः क्रमेण अभुजाङ्घ्रिशिरा भवति। पापयुते पञ्चमस्थद्रेकाणे सौरादिभिर्दृष्टे अभुजो भवति। नवमभावद्रेकाणस्य तथात्वे अनङ्घ्रिः। उदीयमानद्रेकाणस्य तथात्वे अशिराः। तथाचोक्तं गार्गिणा —

> "लग्नद्रेकाणगो भौमः सौरसूर्येन्दुवीक्षितः।
> कुर्याद् विशिरसं तद्वत् पञ्चमे भुजवर्जितम्॥
> विपादं नवमस्थाने यदि सौम्यैर्न वीक्षितः।"

इति। गर्भस्थस्य यल्लक्षणमुच्यते तत् प्रसूतिसमये साक्षात्करणीयम्। अतो विशिरस्त्वादिलक्षणं सम्पूर्णबलं चेद् असत्प्रजाविषयं द्रष्टव्यम्। असम्पूर्णबलं चेद् 'भवति हि फलपक्तिः स्वप्नचिन्तास्ववीर्यैः' इति वक्ष्यमाणन्यायेन विकृतशिरस्कत्वादि वक्तव्यम्। भुजाङ्घ्र्योः साक्षादभावः कार्याभावो वा बलाबलवशेन वक्तव्यः, यतो भुजकार्यहीनोऽपि भुजहीन इत्युच्यते[3]॥ १९॥

अथ नयनविनाशयोगज्ञानार्थं हरिणीमाह—

> **रविशशियुते सिंहे लग्ने कुजार्किनिरीक्षिते**
> **नयनरहितः सौम्यासौम्यैः सबुद्बुदलोचनः।**
> **व्ययगृहगतश्चन्द्रो वामं हिनस्त्यपरं रवि-**
> **स्त्वशुभगदिता योगा याप्या भवन्ति शुभेक्षिताः॥**

इति। सिंहे लग्ने रविशशियुते कुजार्किनिरीक्षिते गर्भो नयनरहितः भवति। सिंहराशौ लग्ने रविशशिभ्यां युक्ते कुजार्किभ्यां निरीक्षिते सति गर्भस्थो जात्यन्धो भवति। अस्मिन् योगे सप्तमस्थयोः कुजार्क्योर्निरीक्षणे सति पूर्वोक्तः पितृमातृरोगोऽपि सम्भवेदिति द्रष्टव्यम्। सौम्यासौम्यैः सबुद्बुदलोचनः। सिंहलग्ने रविशशियुते सौम्येन गुरुणा असौम्याभ्यां कुजशनिभ्यां च दृष्टे सति सबुद्बुदलो-

---

१. 'ममन्दरा', २. 'णैः द्रेकाणैः प' ख. पाठः. ३. 'ते ॥ १९ ॥ र', ४. 'ताः । सिं' ख. ग. पाठः.

चनः शुक्राज(गा? का)दिरोगयुक्तलोचनः । अर्थाद् रवियुते दक्षिणलोचनहानिः शशियुते वामलोचनहानिरिति च सिध्यति । व्ययगृहगतश्चन्द्रो वामं हिनस्ति लग्नाद् व्ययस्थानगतश्चन्द्रो वामं लोचनं नाशयति । व्ययगृहगतो रविः अपरं हिनस्ति दक्षिणलोचनं नाशयति । 'त्रिकोणगे ज्ञे' इत्यादिभिरुक्तानामरिष्टयोगानामपवादमाह —
अशुभगदिता योगाः शुभेक्षिता याप्या भवन्ति । अशुभैर्ग्रहैरुक्ता योगाः शुभग्रहैर्निरीक्षिताश्चेद् याप्या भवन्ति अत्यन्तदोषरहिता भवन्ति । 'शेषत्वादायुषो याप्याः पथ्याभ्यासादि'ति वाहटेन चिकित्साविषये व्याधौ याप्यत्वमुक्तम् ॥ २० ॥

अथ प्रश्नलग्नेन निषेकलग्नेन वा गर्भस्य प्रसवकालं वसन्ततिलकेनाह —

तत्काल इन्दुसहितो द्विरसांशको य-
स्तत्तुल्यराशिसहिते पुरतः शशाङ्के ।
यावानुदेति दिनरात्रिसमानभाग-
स्तावद्गते दिननिशोः प्रवदन्ति जन्म ॥ २१ ॥

इति । तत्काले इन्दुसहितः द्विरसांशकः यः शशाङ्के पुरतः तत्तुल्यराशिसहिते सति दिनरात्रिसमानभागः यावानुदेति दिननिशोः तावद्गते जन्म प्रवदन्तीत्यन्वयः । इन्दुसहितः तत्कालचन्द्रेण युक्तः द्विरसांशकः द्वादशांशकः यः पुरतः तत्तुल्यराशिसहिते मेषात् प्रभृति तत्तुल्येन राशिना युक्ते सतीत्यर्थः । तत्कालचन्द्रः स्वाधिष्ठितराशौ यावति मेषादिद्वादशांशके तिष्ठति मेषादितत्तुल्यराशौ चन्द्रे स्थिते । पुरतः भविष्यति समये । यावान् दिनरात्रिसमानभाग उदेतीति । तत्काललग्नस्य दिनराशेः रात्रिराशेर्वा यावान् यतिमः भागस्त्रिंशांश उदेति पूर्वक्षितिजे लगति दिननिशोस्तावद्गते त्रिंशद्घटिकात्मकस्य दिवसस्य रात्रेर्वा तावत्प्रमाणे गते जन्म प्रसूतिं प्रवदन्तीत्यर्थः । अत्र प्रश्ने तत्कालचन्द्राधिष्ठितद्वादशांशकसंख्यया मेषादितो भविष्यति

१. 'त्यापि सि', २. 'म् ॥ २० ॥ त', ३. 'न्म ॥ प्रश्नलग्नेन निषेकलग्नेन वा गर्भस्य प्रसवकालं दर्शयति — तत्काल इति । त' ख. ग. पाठः. ४. 'क्ते इत्य' क. पाठः. ५. 'यतिमे द्वा', ६. 'तस्तातिमे रा', ७. 'ते भविष्यति । या' ग. पाठः.

काले जन्मचन्द्र उक्तः । उदयलग्नगतभागवशाद् दिनरात्र्योः प्रसव-कालगतागतनाडिकाप्रमाणं च वेदितव्यम्[1] । तथाचोक्तं —

"यावत्संख्ये द्वादशांशे शीतरश्मिर्व्यवस्थितः ।
तत्संख्यो यस्ततो राशिर्जन्मेन्दौ तद्गते वदेत् ॥
तत्कालदिवसनिशासंज्ञं समुदेति राशिगतोऽयम् (?) ।
यावानुदयस्तावद् वाच्यो दिवसस्य रात्रेर्वा ॥"

इति । तथा तत्कालेन्दुद्वादशांशकस्य नवधा खण्डितस्य गतागतवशेन प्रसवनक्षत्रमपि वक्तव्यमित्युक्तं भवति । तत्काल इन्दुसहितो द्विरसांशको य इत्यत्र साम्प्रदायिका योजनविशेषाः सन्ति । ते च यथाश्रुतमत्र लिख्यन्ते । तत्तुल्यराशिसहित इत्यत्र गणनारम्भे[2]राशिविशेषानुक्त्या[3] मेषाश्विप्रथमत्वन्यायेनागतं मेषादितो गणनं विना तत्कालचन्द्राधिष्ठितद्वादशांशकराशिमारभ्यापि गणनं कर्तव्यमिति द्योत्यते । मेषादिगणनेन द्वादशांश[4]कादिगणनेन च प्राप्तयोः प्रसवचन्द्रयोरैक्ये[5] त्रिकोणसम्बन्धे वा सति निस्संशयेन वक्तव्य[6]त्वं भवति । अयं न्यायोऽत्र सर्वेष्वपि योजनप्रकारेषु द्रष्टव्यः । 'स्फुटमिह भवति द्वित्रिसंवादभावाद्' इत्याप्तवचनमत्र प्रमाणम् । 'बलयोगात् फलमंशकर्क्षयो-रि'त्युक्तमार्गेण राशिद्वादशांशको[7]क्तः प्रसवचन्द्रानयनप्रकारः चन्द्राधिष्ठितनवांशद्वादशांशकेनापि विचिन्तनीय इत्यत्र प्रदर्शितेन 'शकोय' इति शब्देन द्योत्यते । कथमिति चेत्, पञ्चदश घटिका हि नवांशकप्रमाणं, तत्र[8] नवांशे द्वादशधा खण्डिते एको भागः एका नाडिका पञ्चदश विनाडिकाश्च भवन्ति । तस्य केन्द्ररूपेणाक्षरसंख्यया निर्देशे[9] शकोय इति निर्देश्यत्वं स्यात् । ततः शकोयशब्देनात्रान्यार्थमपि प्रसक्तेन नवांशं[10]कद्वादशांशोऽत्र ग्राह्य इत्युक्तं भवति । तत्रापि मेषादिगणनेन चन्द्राधिष्ठितनवांशं[11]कद्वादशांशकादिगणनेन च पूर्ववत्तुल्यराशिसहितप्रसवचन्द्रद्वयं सम्भवति । अत्र द्विरसांशको य इत्युक्त्या च अन्योऽर्थो द्योत्यते । तद्यथा — द्विरसशब्देन द्विरसनो राहुः तस्य नवांशं[12]कद्वादशां-

१. 'मू । तथा तत्कालेन्दु' ख. ग. पाठः. २. 'म्भे', ३. 'क्त्वा', ४. 'शादि' ग. पाठः. ५. 'क्ये वा त्रि' क. ख. पाठः. ६. 'व्यं भ', ७. 'को युक्तः', ८. 'अ' ग. पाठः. ९. 'श' ख. पाठः. १०., ११., १२. 'शद्वा' ग. पाठः.

शक इति श्रृङ्गग्राहिकया द्विरसांशकोयशब्देन राहुंस्थितनवांशद्वादशांश उच्यते । स यद्राशिसंज्ञः स राशिरत्र तत्तुल्यराशिः । चन्द्रे तत्र भविष्यति च प्रसवश्चिन्तनीयः । द्विरसांशको य इत्यत्र द्विरसंस्थांशकः[१] द्विरसांशक इति राहुणाधिष्ठितं नवांशराशिं गमिष्यति चन्द्रे प्रसूतिरिति द्विरसांशकवशाच्च द्विधा[२] प्रसवचन्द्रानयनम् । अथ तत्काले द्विरसांशको य इति योजने तत्कालराहुः क्षणिकराहुरपि गृह्यते । दिनगतनाडिकाः षष्ट्या गुणिता विनाडिकाः ताश्च षष्टिगुणिता गुर्वक्षराणि भवन्ति । तानि दिनगतगुर्वक्षराणि सहस्रेण हृत्वा राशयो लभ्यन्ते । शिष्टात् त्रिंशद्गुणिताद् भागाः तत्र शिष्टात् षष्टिगुणितात् कलाश्च लभ्यन्ते । एवमानीतं राशिभागकलात्मकं मण्डलाच्छोधितं क्षणिकराहुस्फुटं भवति । तस्य राहोरपि नवांशं वा नवांशद्वादशांशं[३] वा गच्छति चन्द्रे प्रसूतिरिति च प्रकारद्वयम् । तत्काल इन्दुसहितो द्विरसांशको य इत्यत्र[४] तत्कालइन्दुशब्देन क्षणिकेन्दुरुच्यते । तत्सहितो द्विरसांशकः द्वादशांशकः क्षणिकेचन्द्रसंस्थितद्वादशांशक इत्यर्थः । स यद्राशिसंज्ञः तत्तुल्यं तमेव राशिं गते चन्द्रे प्रसूतिरित्यर्थः । इत्येकः प्रकारः । अन्योऽपि प्रकारः । तत्कालइन्दुसहितो द्विरसांशको य इत्यत्र तत्कालशब्देन काललग्नमुच्यते । षड्गुणितो दिनगतकालः[६] भागस्वरूपः सूर्यस्फुटेन संयुक्तः काललग्नं भवति । मीनमेषसन्धेरारभ्य पूर्वक्षितिजावधिर्घटिकामण्डलैकदेशः काललग्नमित्युच्यते । तत्रैकाया घटिकायाः षड् भागाः सम्भवन्ति, इति तत्कालशब्देन काललग्नमुक्तं भवति । तत्र काललग्ने इन्दुसहिते[९] तात्कालिकचन्द्रेण युक्ते यो द्विरसांशकः द्वादशांशकः तत्तुल्यराशिं गते चन्द्रे प्रसवः स्यात् । तात्कालिकलग्नचन्द्रस्फुटयोगे यो द्विरसांशकः[१०] द्वादशांशकः नवांशद्वादशांशो वा ताभ्यामपि प्रसवचन्द्रनिर्देश इति प्रकारद्वयं सम्भवति । तत्कालइन्दुसहित इत्यत्र तत्कालेन्दुरन्यथाप्यानीयते । तद्यथा—दिनगतनाडिकां विन्यस्य विनाडीकृत्य त्रिंशता हृत्वा राश्यादिफलं लभ्यते

१. 'सनस्थां' क. ख. पाठः. २. 'द्विविधा' ग. पाठः. ३. 'शकं वा' क. ग. पाठः. ४. 'त्र तत्कालशब्देन का' क. पाठः. ५. 'केन्दुसं', ६. 'लः सूर्यभा' ग. पाठः. ७. 'कः त' ख. पाठः. ८. 'ग्ने' क. पाठः. ९. 'शिसहिते' ग. पाठः. १०. 'कः न' ख. पाठः.

तत् कुलीरादि तत्कालेन्दुः । तद्राशिं गते चन्द्रे वा प्रसवः । अन्योऽपि प्रकारः दिनगतविनाडिकासु पञ्चचत्वारिंशद्भिर्हृतासु राश्यादिफलं लभ्यते। तस्मिन् सिंहादितो गणिते यो राशिर्भवति तं राशिं गते चन्द्रे प्रसवः स्यात् । अन्योऽपि प्रकारः विनाडीकृतं दिनगतं पञ्चदशभिर्हृत्वा पूर्ववल्लब्धं राशिभागकलात्मकं फलं भवति । तत्र च लग्नराशिमारभ्य गण्यमाने यो राशिर्भवति तद्राशिं गते चन्द्रे वा प्रसवः स्यात् । विनाडीकृतं दिनगतं षष्टिभिर्हृत्वा लब्धे राश्यादिफले गुलिकस्थितराशेरारभ्य विलोमेन गण्यमाने यो राशिर्भवति तं राशिं गते चन्द्रे वा प्रसवः स्यात् । अत्र तत्कालेन्दुद्वादशांशेन तत्कालेन्दुनवांशद्वादशांशेन च द्विधा प्रसवचन्द्रो दर्शितः । द्वयोरपि मेषादिगणनेन द्वादशांशकादिगणनेन च स च पुनश्चतुर्धा भवति । पुनः राहुस्थितनवांशेन तन्नवांशद्वादशांशेन च तथा क्षणिकराहुस्थितनवांशेन तन्नवांशद्वादशांशकेन च इति राहुवशादपि चतुर्धा प्रसवचन्द्रानयनमुक्तम् इत्यष्टधा भवति । क्षणिकेन्दुस्थितद्वादशांशकराशिना च एकः प्रकार इति नवधा । तत्काललग्नस्य तत्कालचन्द्रस्य च संयोजने जातेन द्वादशांशेन (वा ?) तन्नवांशद्वादशांशेन चेति द्वौ प्रकारौ इत्येकादशधा । पुनर्दिनगतवशाच्च पञ्च प्रकाराः । तत्र काललग्नतत्कालचन्द्रयोगद्वादशांशेन एकः । कर्कटकाद्यर्धनाडिकाचारेण द्वितीयः । सिंहादिपादोननाडिकाचारेण तृतीयः । लग्नादिपादनाडिकाचारेण चतुर्थः । गुलिकर्क्षाद्येकैकनाडिकाविलोमचारेण पञ्चमः । इति दिनगतवशात् पञ्च प्रकाराः । इति प्रसवचन्द्रानयनविषये महामुनिभिरुदाहृताः षोडश प्रकारा दर्शिताः । अत्र साम्प्रदायिकः सप्तदशोऽप्यतिरहस्यभूतो योजनप्रकारोऽस्ति । तत्काल इन्दुसहितो द्विरसांशक इत्यत्र तत्कालेन्दुः प्रश्नकालचन्द्रः । द्विरसशब्देन गुलिको गृह्यते तत्कालद्विरसनः तत्कालगुलिक इत्यर्थः । तत्कालेन्दोस्तत्कालगुलिकस्य च अंशको य इत्युक्त्या नवांशद्वादशांश इत्युक्तं भवति । गुलिकस्य शकोयांशकाः गुलिकनवांशराशेर्विलोमेन गण्याः । चन्द्रस्य शकोयांशकाः अनुलोमेन गण्याः ।

१. 'वः स्यात् । अ' ग. पाठः. २. 'ञ्चाशद्भिर्हृत्वा', ३. 'त् । ना' क. पाठः. ४. 'त' ग. पाठः. ५. 'च पु' ख. पाठः. ६. 'या' ख. ग. पाठः. ७. 'लन्दुः । द्वि', ८. 'तात्कालिकगु' क. पाठः.

तत्र गणनप्रकारे तयोर्योगो वा त्रिकोणबन्धो वा यत्र राशौ भवति तद्राशिसहिते शशाङ्के प्रसवं वदन्ति इति सम्बन्धः । अस्मिन् प्रकारे पूर्वप्रदर्शितैः कैश्चित् संवादे साते निस्संशयेन वक्तव्य इति । यावानुदेति दिनरात्रिसमानभाग इति लग्नराशिना दिनरात्रिज्ञाननिर्देशेन दिनकराधिष्ठितराशिज्ञानमपि लग्नेन भवतीति द्योत्यते । तद्यथा— उदयलग्नं विन्यस्य राशीनपास्य भागान् षष्ट्या हत्वा लिप्ताभिः संयोज्य त्रिभिर्हत्वा पञ्चाशता हृत्वा राश्यादिफलं लभ्यते । राशिभागकलात्मकं तत्फलं लग्नराश्यादि तत्प्रसवकालार्कस्फुटं भवति । अथवा लग्नराशौ गतनवांशकनाडिकाः संकलय्य वर्तमाननवांशके गतां नाडीविनाडीश्च संयोज्य नाडिकाः षष्ट्या हत्वा विनाडीकृत्य पञ्चसप्ततिभिः नवांशद्वादशांशराशयो लभ्यन्ते । शिष्टाद् भागाः कलाश्च लभ्यन्ते । तत् पूर्वानीतमेव प्रसवार्कस्फुटं भवति । अत्र केचित् प्रश्नकालचन्द्रस्फुटे उदयलग्नस्य भागाः कलाश्च संयोज्य तत्र यो नवांशद्वादशांशकः पञ्चसप्ततिविनाडिकाप्रमाणः प्राप्यते तद्राशिगतमर्कं प्रसवार्कं ब्रुवते । अन्ये तु उदयलग्नं लिप्तीकृत्य तत्कालचन्द्रस्य सार्धोदिता नवांशद्वादशांशका यावन्तः तावत्या सङ्ख्यया हृत्वा लब्धं राशिभागकलात्मकं फलं यत् तत् प्रसवार्कमाचक्षते । परे तु उदयलग्नस्य नवांशद्वादशांशकराशौ प्रसवार्कस्थितिं निर्दिशन्ति । प्रसवलग्नस्य निर्देशः यावानुदेति दिनरात्रिसमानभागस्तावद्गते दिननिशोरित्युक्तेन दिनगतप्रमाणेन रात्रिगतप्रमाणेन वा यथोद्दिष्टेन प्रसवार्केण वा रात्रौ चेद् षड्राशियुक्तप्रसवार्केण वा स्वदेशोदयसंक्षुण्णमित्याद्युक्तप्रकारेणोदयलग्नमानीय कर्तव्यः । अत्र उदयलग्नस्थितो द्वादशांशको वा द्वादशांशकस्यास्य नवांशकराशिर्वा प्रसवलग्नं भवेत् । बलवशेन वक्तव्यम् । अत्रापि तत्कालगुलिकत्रिकोणवर्गसम्बन्धवशान्निर्णेयः । वर्गेषु च

> "नवांशकं तु प्रथमं पश्चान्नवनवांशकम् ।
> नवांशद्वादशांशश्च द्वादशांशमतः परम् ॥

१. 'प्रभवरा', २. 'दिकं प्र', ३. 'तनाडिकाविना', ४. 'ष्टात् सभागक' ग. पाठ. ५. 'तवदेव' ख. पाठः. ६. 'शनवांशक' क. ग. पाठः. ७. 'ष्टप्र' क. पाठः. ८. 'णस' ख. पाठः.

चत्वार्येतानि कर्माणि कृत्वा लब्धं विचिन्तयेत्[1] ।
नवांशको नवांशस्य नवांशद्वादशांशकौ ॥
द्वादशांशश्च लग्नेन्दुमान्दीनां बन्धसूचकाः ।"

इति वचनादेते यथोक्ताश्चत्वार एव ग्राह्याः । अत्र तत्कालेन्दुशब्देन आरूढं पृच्छकारूढं गृह्यते । तस्मात् पूर्वानीतेषु प्रसवचन्द्रराशिषु यो राशिरारूढराशित्रिकोणसंवादी[2] भवति तत्र राशौ प्रसवचन्द्र इति द्रष्टव्यम् ॥ २१ ॥

निषेककालविशेषेण प्रसवकालं[3] मालिन्याह—

उदयति मृदुभांशे सप्तमस्थे च मन्दे
यदि भवति निषेकः सूतिरब्दत्रयेण ।
शशिनि तु विधिरेवं द्वादशाब्दे प्रकुर्या-
न्निगदितमिह चिन्त्यं सूतिकालेऽपि युक्त्या ॥ २२ ॥

इति । मृदुभांशे उदयति मन्दे सप्तमस्थे निषेको भवति यदि अब्दत्रयेण सूतिरित्यन्वयः । मृदुभं मन्दक्षेत्रं तस्यांशो मृदुभांशः[4] । मकरनवांशः कुम्भे नवांशो वा । शशिनि तु एवं विधिः द्वादशाब्दे प्रसूतिं कुर्यात् । चन्द्रांशे उदयति चन्द्रे सप्तमस्थे सति निषेको यदि द्वादशाब्दे प्रसूतिरित्यर्थः । द्वादशाब्द इति द्वादशभिर्नाक्षत्रमासैः स्त्रीणामृतुकालाधिकरणैः यः संवत्सरो भवति स द्वादशाब्दः । तस्मिन्नब्दे चतुर्विंशत्यधिकत्रिशतादिनप्रमाणे पूर्णे सति प्रसूतिः स्यादित्यर्थः । अत्र केचित् द्वादशाब्द इति द्वादशभिर्वर्षैः प्रसवो वक्तव्य इति । अध्यायमुपसंहरन् चिन्तास्वरूपं दर्शयति चतुर्थपादेन— निगदितमिह चिन्त्यं सूतिकालेऽपि युक्त्या इति । इह अस्मिन् चतुर्थे निगदितं 'दिवाकरेन्द्वोः स्मरगौ' इत्यादिभिः प्रदर्शितं गदादिलक्षणं सूतिकाले सूतिकाललग्नवशाद् अपिशब्देन प्रश्नलग्नवशाच्च युक्त्या चिन्त्यम् इति सम्बन्धः । युक्त्या साध्येयाप्यासाध्यत्वप्रदर्शिन्या[5] सरण्या[6] चिन्तनीयमित्यर्थः । सा च सरणिः,

१. 'बन्धं वि' क. पाठः. २. 'ढत्रि', ३. 'लं दर्शयति—', ४. 'शः । शशि' ख. ग. पाठः. ५. 'ध्या', ६. 'ण्या विचि' क. ग. पाठः.

"चरे चरस्थिरद्वन्द्वाः स्थिरे द्वन्द्वचरास्थिराः ।
द्वन्द्वे स्थिरोभयचरा जीवो रोगो मृतिः क्रमात् ॥"

इत्यादिवचनविशेषैः प्रदर्शिता। तत्र साध्यलक्षणं पूर्वस्मिन्नेव श्लोके प्रदर्शितम् । तद्यथा — पूर्वश्लोके जन्मशब्देन आदिग्रहणन्यायेन जन्[1] इति जननं म इति मरणं च गृह्यते । तत्र जननकालः प्रदर्शितः । मरणविषये योजना प्रदर्श्यते । 'तत्काल इन्दुसहितो द्विरसांशको[2] य' इत्यत्र लग्नचन्द्रगुलिकानां योगः तत्कालशब्देन्दुशब्दद्विरसशब्दवाच्यानां[3] योगः त्रिस्फुटयोगाख्यः । तत्र योंऽशकः नवांशकः तत्तुल्यराशिना सहिते पुरतः शशाङ्के जन्मचन्द्रे सति चिन्ताविषयस्य मरणं प्रवदन्तीति सम्बन्धः । शेषं साधारणम् । अत्र त्रिस्फुटयोगराशिना[4] वा तदंशकेन वा बलाधिकेन जन्मचन्द्रयोगश्चिन्तायां[6] निर्याणसूचक[5] इत्यर्थः । तथा 'तत्काल इन्दुसहितो द्विरसांशको य' इत्यत्र अंशकशब्देन शशिभवनालिझषान्तमृक्षसन्धिः इति प्रदर्शितं खण्डत्रयं च विवक्ष्यते । तत्र प्रथमं मेषादिचतुष्टयं सृष्टिखण्डः । सिंहादिचतुष्टयं स्थितिखण्डः । चापादिचतुष्टयं संहारखण्डः । एवं नवांशकराशीनामपि खण्डत्रयकल्पनायां खण्डेऽ[7]पि पृथक् पृथक् सृष्टिस्थितिसंहाराः सम्भवन्ति । तत्क्रमेण कर्कटवृश्चिकमीनान्तेषु आश्लेषाज्येष्ठारेवतीनक्षत्रेषु चरमस्य[8] मीनांशकस्य संवत्सरान्मासाद् दिवसाच्च निर्याणसूचकत्वं भवति । अतः कर्कटवृश्चिकमीनांशकानाम् ऋक्षसन्ध्याश्रयत्वात् संहारसूचकत्वं मेषसिंहधनुरंशकानां खण्डादिगतत्वाद् आयुर्दैर्घ्यसूचकत्वम् । मध्यगतानां चांशकानां तत्क्रमवशेन मध्यफलसूचकत्वं भवतीति त्रिस्फुटयोगनक्षत्रांशकवशेन फलविशेषमवगम्य[12] तस्य फलस्य पाकश्च पुरतो भविष्यति काले तत्तुल्यराशिसहिते त्रिस्फुटयोगर्क्षांशतुल्यैरांशिगते सति भविष्यतीत्युक्तं भवति । अत्र चिन्ताकाले गदप्रदत्वयोगे सति असाध्यत्वाभावे च निर्णीते प्रतिक्रियानिर्देशार्थं गदविशेषाश्च विचिन्तनीयाः । गदाश्च द्विविधाः निजागन्तुकभेदेन । तत्र निजाश्च द्विविधाः शारीरा

1. 'ज इ', 2. 'क इ', 3. 'ब्दानां यो' ग. पाठः. 4. 'शिना' ख., 'शिना च ग' ग. पाठः. 5. 'ना च', 6. 'योश्चि', 7. 'ण्डेऽपि', 8. 'मांशस्य', 9. 'ण्डत्रयादि', 10. 'द्वादशांश', 11. 'नक्षत्र' ग. पाठः. 12. 'म्यते। तस्य पा' ख. पाठः. 13. 'ल्यं राशिं ग', 14. 'वे गति न' ग. पाठः

मानसाश्च । आगन्तवोऽपि द्विविधाः दृष्टनिमित्तजा अदृष्टनिमित्त
श्चेति । इति चतुर्विधा गदाः । तत्र शारीरा वातपित्तश्लेष्मसंसर्गसं
पातजनिता रोगाः अष्टमराशिना तत्स्थेन तन्निरीक्षकेण तदधिपेन
बलाबलवशान्निर्देश्याः । मानसास्तु पुनः भयशोकक्रोधादिविरागजनि
पञ्चमाधिपाष्टमाधिपयोर्योगेक्षणादिसम्बन्धवशान्निर्देश्याः । आगन्तु
दृष्टिनिमित्तजा अभिघाताभिचारशापादिजनिताः षष्ठाधिपेन तत्स्थे
तद्वीक्षकेण तद्राशिना वा निर्देश्याः । तत्राप्यष्टमाधिपस्य योगनिरी
णादौ सति ते प्रबला भवन्ति । अदृष्टनिमित्तजास्त्वागन्तवः । ते च

"चरस्थिरोभयेष्वायधर्मद्यूनगतैः क्रमात् ।
बाधकाख्यैर्ग्रहैर्वाच्या देवादिग्रहजा गदाः ॥"

एषां विशेषाश्च यथाशास्त्रं निर्देष्टव्याः । अत्र द्विविधानामपि निज
गाणां प्रतिक्रिया वैद्यशास्त्रोक्तैश्चिकित्साविशेषैर्धर्मस्थानग्रहयोगेक्षा
वशाद् वक्तव्याः । आगन्तुकेष्वप्यभिघातादिजनितसद्योव्रणादिगते
चिकित्सैव वक्तव्या । शापाभिचारादिजनितेषु देवब्राह्मणपूजादिमन्
र्माणि तथा शूलबलिप्रभृतिखड्गरावणान्तादीनि बलिकर्माणि दशमर
शिग्रहयोगेक्षणवशेन यथादोषबलं निर्देश्यानि । एवं गदमदन्वयोगे सा
गदानां हेतवः स्वरूपाणि तत्प्रतीकारविशेषश्च साध्येषु गदेषु वक्तव्यः
तथा पुनरसाध्येष्वपि आयुःशेषसम्भवलक्षणे सति याप्यत्वाय नित्यं
पयिकी प्रतिक्रिया वक्तव्या । असाध्यत्वलक्षणे सति पूर्वप्रदर्शितानि
स्फुटयोगविषयोपदेशवशेन निर्याणकालो विचिन्तनीयः । इति संक्षेप
अध्यायान्ते युक्त्या चिन्त्यम् इत्युक्त्या द्योतितस्य चिन्ताप्रकारस
स्वरूपं दिङ्मात्रेण प्रदर्शितम् ।

"यः शास्त्रं विपुलं चकार विततैः स्कन्धैस्त्रिभिर्ज्योतिषां
तस्योच्छित्तिभयात् स्वयं कलियुगे संश्रित्य यो भूतलम् ।
भूयः स्पष्टतरं वराहमिहिरव्याजेन संक्षिप्तवान्
लोकानुग्रहमूर्तये भगवते तस्मै नमो भास्वते" ॥ २२ ॥

इति होराविवरणे चतुर्थोऽध्यायः ॥

---

१. 'वा निर्दे' ग., 'वा बलब' क. पाठः. २. 'रादि', ३. 'षि' ४. 'इ बृहज्जातकतात्पर्यटीकायां निषेकाध्यायश्चतुर्थः ।' क. पाठः. 'ति बृहज्जातकतात्पर्य-टीकायां च' ग. पाठः.

## अथ पञ्चमोऽध्यायः ।

अथ प्रसवकालोदयलग्नग्रहस्थितिवशान्मातापितृदशाविशेषसूतिकागृहशयनदीपादिलक्षणानि श्रोतृविस्मापनानि शास्त्रप्रामाण्यव्यञ्जकानि शिष्यप्ररोचनार्थमस्मिन् पञ्चमाध्याये निर्दिशति । तत्र प्रथमं प्रसूतिकाले पितुरसत्तां श्लोकद्वयेनाह—

पितुर्जातः परोक्षस्य लग्नमिन्दावपश्यति ।
विदेशस्थस्य चरभे मध्याद् भ्रष्टे दिवाकरे ॥ १ ॥

इति । इन्दौ लग्नमपश्यति दिवाकरे मध्याद् भ्रष्टे चरभे विदेशस्थस्य[1] परोक्षस्य पितुः पुत्रो जात इत्यन्वयः । मध्याद् भ्रष्टे मध्यशब्देन गगनमध्यस्थितो दशमराशिर्गृह्यते । तस्माद् भ्रष्टे मध्याह्नमतीत्य नवमादिराशिस्थिते । तत्रापि चरभे चरराशौ दिवाकरे स्थिते विदेशस्थितिवशात् परोक्षस्य पितुः पुत्रो जात इति वक्तव्यम् । चरभ इति विशेषनिर्देशात् स्थिरभे स्वदेशस्थितौ परोक्षस्य, उभयराशौ विदेशस्वदेशान्तराले परोक्षस्य पितुरिति सिद्धं भवति । लग्नस्य चन्द्रानीक्षितत्वम् अर्कस्य मध्याद् भ्रष्टता च पितृपरोक्षज्ञापकम् । चरस्थिरोभयवशात् पितुर्विदेशस्वदेशतदन्तरालस्थितिज्ञानम् इत्युक्तं[2] भवति । तथाच सारावल्याम्—

"होरामनीक्षमाणे शशिनि परोक्षस्थिते पितरि जातः ।
मेषूरणाच्च्युते वा चरभे भानौ विदेशगते ॥"

अत्र जातो विदेशनिरतो भवति ॥ १ ॥

उदयस्थेऽपि वा मन्दे कुजे वास्तं समागते ।
स्थिते वान्तः क्षपानाथे शशाङ्कसुतशुक्रयोः[3] ॥ २ ॥

मन्दे उदयस्थेऽपि वा मध्याद् भ्रष्टे दिवाकरे परोक्षस्य पितुः पुत्रो जात इति सम्बन्धः । तथा कुजे अस्तं समागते च वा, तथैव क्षपानाथे शशाङ्कसुतशुक्रयोरन्तः मध्ये स्थिते वा परोक्षस्य पितुर्जात इति । अत्र पितृपारोक्ष्यविषये चत्वारो योगा उक्ताः । भ्रष्टशब्देन गगनमध्यादवरोहणं विवक्षितम् । तच्च दिनार्धात् प्रभृति निशा-

१. 'स्य पि' ग. पाठः. २. 'ज्ञानम् इत्युक्तं भवति ॥ १ ॥', ३. 'योः ॥ २ ॥ इति । म' ख. ग. पाठः.

धेपर्यन्तम् । मध्यलग्नाद् व्युत्क्रमेण पाताललग्नपर्यन्तमिति यावत् । पाताललग्नं भवनस्थानं चतुर्थं, तस्मात् व्युत्क्रमेण षट्सु राशिषु[1] आरोहणस्थानेषु भ्रष्टता न सम्भवतीत्यवसेयम् । अत्र परोक्षस्य पितुर्जात इत्युक्तिसामर्थ्याद् उक्तेष्वेषु योगेषु जातानां दत्तकपुत्रोत्पत्तिविषयभूतः कश्चिदन्यः परोक्षः पिताप्यस्तीति द्योत्यते । तस्मादेषां प्रत्यक्षः परोक्षश्चेति द्वौ पितरौ भवत इत्युक्तं भवति ॥ २ ॥

परोक्षस्य पितुर्जात इत्यत्र प्रस्तुतायां जननक्रियायां सम्भाव्यान् विस्मापनयोगविशेषानाह शशाङ्क इत्यादिश्लोकत्रयेण —

**शशाङ्के पापलग्ने वा वृश्चिकेशत्रिभागगे ।**
**शुभैः स्वायस्थितैर्जातः सर्पस्तद्वेष्टितोऽपि वा ॥ ३ ॥**

इति । पापलग्ने वृश्चिकेशत्रिभागगे शशाङ्के शुभैः स्वायस्थितैः सर्पो[2] वा तद्वेष्टितो वा जात इति सम्बन्धः । वृश्चिकेशत्रिभागगे वृश्चिकेशो भौमः, तस्य द्रेकाणं गते । मेषे प्रथमं, क्षीणचन्द्रे कर्कटके[3] द्वितीयं सिंहे तृतीयं वृश्चिके प्रथमं[4] मीने तृतीयं चापे द्वितीयं च द्रेकाणं गते इति यावत् । शुभैः धनलाभस्थितैः । अत्र योगे जातः सर्पो वा[5] सर्पवेष्टितो[6] वा भवतीत्यर्थः । अत्र च भगवान् गार्गिः —

"भौमद्रेकाणगे चन्द्रे शुभैरायधनस्थितैः ।
सर्पस्तद्वेष्टितस्तद्वत् पापलग्ने विनिर्दिशेत् ॥"

इति । अत्र यथा जननलग्ने भौमद्रेकाणगचन्द्रोदयः, धनलाभस्थितसौम्यत्वं च सुलभतया सम्भाव्यते, तथा मानुषीषु सर्पजननं सर्पवेष्टितापत्यजननं च न दृश्यते इतीदं लक्षणमसम्भाव्यमिति न शङ्कनीयम् । असम्भाव्यं चेदाचार्यः स्वयमेव तथा वदेत् । आचार्येणोत्तरत्र वज्रादियोगानुक्त्वा,

"पूर्वशास्त्रानुसारेण मया वज्रादयः कृताः ।
चतुर्थभवने सूर्याज्ज्ञसितौ भवतः कथम् ॥"

इति तेषामसम्भवं च स्वयमेव[7] वक्ष्यति युक्तिवशात्[8], तद्वदिहापीदं

१. 'षु भ्र' क. पाठः. २. 'त्यन्वयः । वृ' ख. ग. पाठः. ३. 'क', ४. 'मं च' क. ख. पाठः. ५. 'वा तद्वेष्टि' क. पाठः. ६. 'तः पुरुषो वा', ७. 'वत्वं स्व' ग. पाठः. ८. 'वोक्तवान् यु' ख. पाठः.

लक्षणमसम्भाव्यं चेत् स्वयमेवाभिदधीत । न च तथाभिहितम् । तस्मादिदं लक्षणं सम्भाव्यमेव । तथाचाप्तवचनं—

"विस्तीर्णा पृथिवी जनाश्च बहवः किं किं न सम्भाव्यते ।"

यदा भौमद्रेक्काणस्थस्य चन्द्रस्य जननकालोदयलग्नेन समकलत्वं तत्कालानीतस्य धनभावस्य लाभभावस्य च शुभग्रहैः समकलत्वं च युगपत् सम्भवति तदैवायं योगः परिपूर्णः स्यात् । ततो दुर्लभ एवायं योगः। तत् किमर्थमयं योगोऽभिहित इति चेद् अस्य योगस्य समकलत्वाभावेन सम्भवे जातः सर्पः सर्पवत् क्रूरस्वभावो भवति । सर्पवेष्टितः विषविद्यानैपुणेन सर्पवेष्टितशरीरत्वादिप्रदर्शनकुशलो भवति । इदं प्रदर्शयितुमिदं लक्षणमुक्तम् इति सर्वमनवद्यम् ॥ ३ ॥

**चतुष्पदगते भानौ शेषैर्वीर्यसमन्वितैः ।**
**द्वितनुस्थैश्च यमलौ भवतः कोशवेष्टितौ[1] ॥ ४ ॥**

भानौ चतुष्पदगते शेषैः द्वितनुस्थैः वीर्यसमन्वितैः च कोशवेष्टितौ यमलौ भवत इत्यन्वयः । यत्रतत्र जन्मलग्ने भानौ चतुष्पदगते चतुष्पाद्राशिगते सति मेषवृषसिंहधनुरपरार्धमृगपूर्वार्धान्य-[2]तमस्थिते सति शेषैर्ग्रहैरुभयराशिस्थितैर्वीर्यसमन्वितैरर्थात् केन्द्रस्थितैरिति यावत् । यमलौ कोशेन जरायुणा वेष्टितौ प्रसूयेते । अत्राप्यस्य योगस्य प्रायिकत्वे जातो जीवति चेत् तादृशलग्नजातेनान्येन कोशवेष्टितः सम्भूयोत्साहजनितेन कोशशब्दवाच्येन धनेन परस्पर[3]सम्बन्धवान् सदा सहचारी भवतीत्यर्थोऽपि द्योत्यते ॥ ४ ॥

**छागसिंहवृषे लग्ने तत्स्थे[4] सौरेऽथवा कुजे ।**
**राश्यंशसदृशे गात्रे जायते नालवेष्टितः[5] ॥ ५ ॥**

लग्ने छागसिंहवृषे सौरे अथवा कुजे तत्स्थे राश्यंशसदृशे गात्रे नालवेष्टितः जायते इत्यन्वयः । छागे सिंहे वृषे वा लग्ने सौरे अथवा कुजे तत्स्थे लग्नस्थिते सति लग्ननवांशराशिसदृशे गात्रे शरीरप्रदेशे[6] नालेन नाभिनालेन अथवा तत्सदृशेनान्येन वस्तुना वेष्टितो जायते ।

---

१. 'तौ ॥ ४ ॥ इति । भा' ख. ग. पाठः. २. 'षभासिं' ख. पाठः. ३. 'रं', ४. 'त्स्थ' क. पाठः. ५. 'तः ॥ ५ ॥ इति । ल' क. ख. पाठः. ६. 'ते ॥ ५ ॥ नि' ख. ग. पाठः.

अत्र जातः सौरेण बलयुतेन यदि तन्त्रानुष्ठानादिव्यापारसहितः, बलहीनश्चेत् परिकर्मादिकं वाच्यम् । एतच्छूद्रादिषु चेत् तन्तुना मत्स्यग्रहणार्थं जालादिकं करोति । कुजेन यदि स्वर्णमेखलाबन्धनादिकं वाच्यम् ॥ ५ ॥

निषेक्तुर्जनकस्य स्वरूपमपि जन्मलग्नेन चिन्तनीयं, तत्र परिणेतुरन्यस्य जारस्य निषेक्तृत्वे सति तन्निर्देशाय लक्षणं[1] वंशस्थेनाह —

**न लग्नमिन्दुं च गुरुर्निरीक्षते**
**न वा शशाङ्को रविणा समागतः ।**
**सपापकोऽर्केण युतोऽथवा शशी**
**परेण जातं प्रवदन्ति निश्चयात् ॥ ६ ॥**

इति । गुरुः लग्नं इन्दुं च न निरीक्षते निश्चयात् परेण जातं प्रवदन्ति इत्यन्वयः । लग्नं जननलग्नं इन्दुं च लग्नस्थितं पृथक्स्थितं वा चन्द्रं गुरुर्न पश्यति चेत् निश्चयात्[2] निश्चयमाश्रित्य । निष्कर्षेण चयः चयनं विचयनमन्वेषणम् इति यावत्, निश्चयः । तमाश्रित्येति ल्यब्लोपे पञ्चमी । नितरामन्वेषणं विमर्शनं कृत्वा वक्तव्यमित्यर्थः । ततो गुरोर्निरीक्षणस्य गुरुक्षेत्रस्य द्रेक्काणस्य नवांशस्य द्वादशांशस्य त्रिंशांशस्य योगस्य वा लग्नेन्दुसम्बन्धाभाव एव परेण जातत्वं वक्तव्यम् । तथाच भगवान् गार्गिः,

"गुरुक्षेत्रगते चन्द्रे तद्युक्ते वाऽन्यराशिगे ।
तद्द्रेक्काणे तदंशे वा न परजात इष्यते ॥"

इति । योगान्तरमुक्तयोगस्यापवादार्थमाह — शशाङ्को रविणा न समागतः वा तदापि परेण जातं प्रवदन्ति । रविचन्द्रावेकस्थौ चेत् परेण जातत्वं न वक्तव्यमिति तात्पर्यम् । तत्र[3] रविचन्द्रयोगेऽपि विशेषमाह — अथवा सपापकश्चन्द्रः अर्केण युतः तदापि परेण जातं प्रवदेत् । सपापकः शशी पापग्रहेण सहैकांशगश्चन्द्रः अर्केण सहैकराशिस्थितश्चेत् परजातत्वं वक्तव्यमित्यर्थः[4] । अत्र गुरुणा दृश्यते चेद् भर्तुरनुज्ञया परपुरुषगमनम् । पुनरपि भेदं दर्शयति — लग्नेऽर्कसहिते

१. 'णमाह —' ख. ग. पाठः. २. 'त् निष्क' ग. पाठः. ३. 'त्रापि वि' ख. पाठः. ४. 'र्थः । अत्रो' ख. ग. पाठः.

चन्द्रे पापयुते गुरुणा न दृष्टे सति तन्मातुरेव दोषः । तत्र पापोऽतिबलयुतश्चेदपवाद एव । अत्रोक्तेषु योगेषु प्रसूतिलग्न[1]ग्रहवशाज्जनन्याः परिणेतुरन्यो गर्भोत्पादक इति लक्ष्यते । तस्य[2] जातिराकृतिः स्वभावभेदाश्च निर्देश्याः । नवमस्थितग्रहेण वा नवमाधिपेन वा बीजकारकेण रविणा वा बलाधिकेन ग्रहाणां संज्ञाध्यायोक्तान् विशेषानालोच्य जारस्य जात्यादि सर्वं वक्तव्यम्[3] । अत्र जातः परस्य व्यापारेणोपजीवति ॥ ६ ॥

अन्यच्च पितृविषयं लक्षणविशेषं[4] वैतालीयेनाह—

क्रूरर्क्षगतावशोभनौ
सूर्याद् द्यूननवात्मजस्थितौ ।
बद्धस्तु पिता विदेशगः
स्वे वा राशिवशात्त(था ? दा)पथि ॥ ७ ॥

इति । अशोभनौ क्रूरर्क्षगतौ सूर्याद् द्यूननवात्मजस्थितौ तदा तु पिता बद्ध इत्यन्वयः । अशोभनौ कुजमन्दौ क्रूरराशिस्थौ सूर्यस्य नवमे पञ्चमे सप्तमे वा स्थितौ चेत् पिता बद्ध इति वक्तव्यम् । राशिवशाद् विदेशगः स्वे स्थितो वा पथि स्थितो वा भवति । चरराशौ विदेशगः स्थिरराशौ स्वदेशगः उभयराशौ पथि स्थित इति वक्तव्यम् । सूर्यस्य भुजगनिगलपाशभृद्दृगाणसम्बन्धे साक्षाद् बद्धः तदभावे कार्यवशाद् बद्ध इति विशेषो[5]ऽत्र द्रष्टव्यः[6] । अस्मिन् योगे जातस्य पित्रा कृतेन दोषेण दण्डानुभवः ॥ ७ ॥

अथ षड्भिः श्लोकैः प्रसूतिदेशविशेषमाह । त[7]त्र देशो द्विविधः । जलमयः स्थलमयश्चेति । तत्र प्रथमं जल[8]मयदेशप्रसव[9]लक्षणं वैतालीयेनाह—

पूर्णे शशिनि स्वराशिगे
सौम्ये लग्नगते शुभे सुखे ।
लग्ने जलजेऽस्तगेऽपि वा
चन्द्रे पोतगता प्रसूयते ॥ ८ ॥

---

१. 'ग्नव' क. पाठः. २. 'स्याकृ' ग. पाठः. ३. 'म् ॥ ६ ॥' ख. ग. पाठः. ४. 'णमाह—' ख. पाठः. ५. 'षो द्र' ग. पाठः. ६. 'व्यः ॥ ७ ॥' ख. ग. पाठः. ७. 'अ' क. ग. पाठः. ८. 'लदे' क. ख. पाठः. ९. 'णमुच्यते—पू' ख. ग. पाठः.

इति । शशिनि पूर्णे स्वराशिगे सौम्ये लग्नगते शुभे सुखे सति पोतगता प्रसूयते इत्यन्वयः । पूर्णचन्द्रस्य कर्कटकस्थितिर्मकरस्थ एवार्के सम्भवति । तदा धनुर्मकरकुम्भेष्वेकत्रैव बुधस्य लग्नगतत्वं च सम्भवति । तस्माद् धनुषि बुधोदये मीनस्थे गुरौ शुक्रे वा मकर-बुधोदये मेषगुरौ च कुम्भबुधोदये वृषगुरौ च कर्कटकचन्द्रे मकरमास्येव उक्तलक्षणसम्भवः । पोतगता पोतो जलयानविशेषः, तत्र स्थिता प्रसूयते । औचित्याज्जलमध्यप्रदेशे इत्युक्तं भवति । लक्षणान्तरमत्राह—लग्ने जलजे चन्द्रे अस्तगेऽपि वा पोतगता प्रसूयते । जलजे जलजाः कर्कटकमीनमकरान्त्यार्धानि । एष्वेकतमे लग्ने चन्द्रे अस्तगते सप्तमस्थेऽपि जलमध्यप्रदेशे प्रसूतिर्भवति । अत्रास्मिकादित्योदयसम्भवान्न निर्जलत्वप्रसङ्गदोषः "जलवत्यजलेन गतेऽथवास्याज्जलम्" इति कृष्णीयशास्त्रवचनात् । अस्मिन् योगे जातस्य समुद्रगमनादिकं च सम्भवति ॥ ८ ॥

योगान्तरं वैतालीयेनाह —

> आप्योदयमाप्यगः शशी
> सम्पूर्णः समवेक्षतेऽथवा ।
> मेषूरणबन्धुलग्नगः
> स्यात् सूतिः सलिले न संशयः ॥ ९ ॥

इति । सम्पूर्णः शशी आप्यगः आप्योदयं समवेक्षते, तदा सलिले सूतिः स्यात्, न संशयः । आप्यमम्मयं गतः, जलराशिग इत्यर्थः । अत्र अप्शब्देन अप्स्वरूपस्य शुक्रस्य क्षेत्रयोरपि ग्रहणम् । आप्योदयं जलराशिं समवेक्षते, सप्तमस्थस्य दृष्टिरत्र गृह्यते, अथवा मेषूरणबन्धुलग्नग इति केन्द्रेषु सप्तमव्यतिरिक्तनिर्देशात् । एवमुक्त्या अन्यत्रापि योगेषु दृष्टिप्रसङ्गे सप्तमदृष्टिरेव प्राप्नोति च ज्ञाप्यते । "अमावास्याचतुर्दश्योः क्षीणश्चन्द्रो न सर्वदा" इति पूर्वाचार्यवचने चन्द्रस्य क्षीणत्वं प्रति दृष्टेन्दोः सिनीवाल्याः नष्टेन्दोः कुहाश्च ग्रहणेन सम्पूर्णत्वविषयेऽपि अनुमत्यां कलाहीनस्येन्दोः राकायां च पूर्णक-

---

१. 'लराशौ जातः क' ग. पाठः. २. 'ध्यदे' क., 'ध्यदेशप्र' ग. पाठः. ३. 'ये' क. पाठः. ४. 'त् ॥ ८ ॥ आ' ख. ग. पाठः. ५. 'शिं गत इ', ६. 'प्रम' ग. पाठः. ७. 'क्तान नि' क. ग. पाठः. ८. 'सा', ९. 'स्यापीन्दोः' ग. पाठः.

लस्य च ग्रहणं कार्यम् इत्युक्तं भवति इति केचिद् व्यवस्यन्ति[1] । अत्र पोतप्रसूतेः सलिलप्रसूतेश्च सम्भवे प्रसूताः सद्योमरणलक्षणाभावेन जीवन्ति चेत् सलिलयाने सलिलद्रव्यस्य[2] सम्पादने च कुशला भवन्तीति द्रष्टव्यम्[3] । एतद्योगत्रयमपि कूपप्रश्ने योज्यम् । अत्र जातस्य वापीकूपतटाकादिनिर्माणं सम्भवति । स्थलराशौ चेत् स्थितावेव तैलघृतादिक्रयविक्रयं,* स्थिरे जलराशौ कृ(पी ? षी)प्रवृत्तिः, चन्द्रे जलराशौ यदि समुद्रयानम् ॥ ९ ॥

अथ स्थलप्रदेशविशेषं वैतालीयेनाह[4] —

उदयोडुपयोर्व्ययस्थिते
गुप्त्यां पापनिरीक्षिते यमे[5] ।
अलिकर्कियुते विलग्नगे
सौरे शीतकरेक्षितेऽवटे ॥ १० ॥

इति । यमे उदयोडुपयोः व्ययस्थिते पापनिरीक्षिते सति गुप्त्यां प्रसूतिरिति सम्बन्धः । उदयोडुपयोः उदयस्य वा उडुपस्य वा एकस्थयोरुदयोडुपयोर्वा[6] व्ययस्थिते मन्दे पापनिरीक्षिते सति गुप्त्यां बन्धनागारे, तत्र कार्यवशाद् रुद्धायाः प्रसूतिरित्यर्थः । सौरे अलिकर्कियुते विलग्नगे शीतकरेक्षिते अवटे प्रसूतिरिति सम्बन्धः । मन्दे कर्कटके वृश्चिके वा लग्नस्थे अवटे गर्ते । "गर्तावटौ भुवः श्वभ्रे[7]" इत्यमरः । अत्र जातः कूपतटाकारामादिव्यापारैर्जीवति[8] ॥ १० ॥

पुनरपि प्रदेशविशेषं वैतालीयेनाह —

मन्देऽब्जगते विलग्नगे
बुधसूर्येन्दुनिरीक्षिते क्रमात् ।
क्रीडाभवने सुरालये
प्रसवं सोषरभूमिषूद्दिशेत् ॥ ११ ॥

इति । अब्जगते विलग्नगे मन्दे क्रमात् बुधसूर्येन्दुनिरीक्षिते क्रीडाभवने सुरालये सोषरभूमिषु प्रसवमुद्दिशेदित्यन्वयः । अब्जगते

१. 'न्ति । ग' क. पाठः. २. 'लभन्तद्रव्यस' ग. पाठः. ३. 'म् ॥ ९ ॥ स्थलप्र', ४. 'पानाह' ख. ग. पाठः. ५. 'ते पापदृष्टे म' क. पाठः ६. 'वि' ख. पाठः. ७. 'भ्रम् इ' क. पाठः. ८. 'रः ॥ १० ॥ म' ख. ग. पाठः.

* अत्र समाहारद्वन्द्वः ।

जलराशिगते लग्नस्थिते मन्दे बुधेन दृष्टे सति क्रीडाभवने प्रसूतिं वदेत् । सूर्येण दृष्टे सुरालये देवालये । चन्द्रेण दृष्टे सोषरभूमिषु लवणसहितेषु प्रदेशेषु प्रसवं निर्दिशेत् । अत्र योगत्रये जाता यथाक्रमं नृत्तगीतवाद्यादिभिर्देवालयव्यापारादिभिर्लवणनिर्माणादिभिर्जीवन्ति । बलहीने सति एतेषां विरोधः ॥ ११ ॥

पुनरपि प्रदेशविशेषमुपजात्याह —

नृलग्नगं प्रेक्ष्य कुजः श्मशाने
रम्ये सितेन्दू गुरुरग्निहोत्रे ।
रविर्नरेन्द्रामरगोकुलेषु
शिल्प्यालये ज्ञः प्रसवं करोति ॥ १२ ॥

इति । नृलग्नगमिति विशेषणेन मन्दमिति विशेष्यं प्रकरणसिद्धमाक्षिप्यते बलादानीयते । कुजः नृलग्नगं मन्दं प्रेक्ष्य श्मशाने प्रसवं करोति । नृलग्नगं नरराशयो मिथुनकन्यातुलाधन्विपूर्वार्धकुम्भाः, तत्रैकत्र लग्ने स्थितं, मन्दं सितेन्दू प्रेक्ष्य रम्ये प्रदेशे प्रसवं कुरुतः । गुरुर्नृलग्नगं मन्दं प्रेक्ष्य अग्निहोत्रे प्रसवं करोति ब्राह्मणगृहे करोति । तथा रविः नरेन्द्रामरगोकुलेषु राजभवने देवालये गोशालायां बलवशात् प्रसवं करोति । ज्ञः बुधः शिल्प्यालये शिल्पिशालायां प्रसवं करोति । नृलग्नगं मन्दं प्रेक्ष्येति सर्वत्र योजनीयम् । एतद्योगपञ्चकेषु जातस्य यथाक्रमं बहुशवदाहः, रम्यप्रदेशस्थितिश्च, अग्निहोत्रव्यापारश्च, नरेन्द्रगृहे वा देवालये वा गोशालायां वा स्थितिश्च, शिल्पमन्दिरस्थितिश्च सम्भवति ॥ १२ ॥

इति योगवशेन कादाचित्कान्[4] प्रसूतिदेशविशेषानुक्त्वा सामान्येन देशज्ञानलक्षणं[5] वैतालीयेनाह —

राश्यंशसमानगोचरे
मार्गे जन्म चरे स्थिरे गृहे ।
स्वर्क्षांशगते स्वमन्दिरे
बलयोगात् फलमंशकर्क्षयोः ॥ १३ ॥

---

१. 'त् ॥ ११ ॥ नृलग्न' ख. ग. पाठः. २. 'न्दू र' क. पाठः. ३. 'म् ॥ १२ ॥ इ' क. ग. पाठः. ४. 'कदाचित् कालदेशविशेषान् प्र' ग. पाठः. ५. 'णमाह' क. ग. पाठः.

इति । राश्यंशसमानगोचरे जन्म,[२] वक्तव्यमिति शेषः । राशेरंशकस्य वा समानगोचरे संज्ञाध्यायोक्ते । तत्र विशेषमाह[३] — चरे मार्गे स्थिरे गृहे इति । चरराशौ चरांशके वा लग्नगते[३] तस्य राशेरुक्तप्रदेशसम्भवे मार्गे[४] प्रसूतिः । स्थिरराशौ स्थिरांशके वा लग्नगते तदुक्तप्रदेशसम्भवे गृहे प्रसूतिः । उभयराशेश्चरासन्नमर्धं चरराशिः स्थिरासन्नमर्धं स्थिरराशिरिति पक्षमङ्गीकृत्य इह चरस्थिरयोवोक्तौ । राश्यंशकाभ्यां फलनिरूपणे[५] तदधिपवशाच्च निरूपणीयम् इति प्राप्तस्य अधिपतेर्ग्रहस्य विशेष्यस्य विशेषणं स्वक्षांशगते इति । अधिपतिग्रहे स्वक्षांशगते स्वमन्दिरे[६] जन्म वक्तव्यम् । राश्यधिपे स्वर्क्षस्थिते स्वनवांशकस्थिते वा सति, अथवा अंशकाधिपे स्वक्षेत्रस्थे स्वनवांशस्थे वा सति स्वमन्दिरे प्रसूतिः । एवं राश्यंशकयोरधिपतिग्रहवशात् स्वगृहे बन्धुगृहे शत्रुगृहे वा प्रसूतिर्वक्तव्येति यावत् । अत एवाह — बलयोगात् फलमंशकक्षयोः इति । अंशकाधिपतेर्बलाधिक्ये अंशकेन फलं वक्तव्यं, राश्यधिपतेर्बलाधिक्ये राशिना फलं वक्तव्यं, तयोः स्वक्षांशगतत्वे स्वगृहे, मित्रर्क्षांशगतत्वे मित्रगृहे, परक्षांशगतत्वे परगृहे प्रसूतिरित्याद्युक्तं भवति । पूर्वोक्तयोगाभावे राश्यंशसमानगोचरादिषु प्रसवो वक्तव्यः । तेषां योगानां सम्भवे योगोक्तप्रदेशेष्वेव प्रसवो वक्तव्य इति ॥ १३ ॥

प्रसवानन्तरं कुन्त्यादिभिरिव मात्रा हेतुबलात् परित्याज्यस्य कर्णादेरिवापत्यस्य लक्षणं[१] वैतालीयेनाह —

> **आरार्कजयोस्त्रिकोणगे**
> **चन्द्रेऽर्के च विसृज्यतेऽम्बया ।**
> **दृष्टेऽमरराजमन्त्रिणा**
> **दीर्घायुः सुखभाक् च स स्मृतः ॥ १४ ॥**

इति । चन्द्रे आरार्कजयोः त्रिकोणगे अम्बया विसृज्यते । अर्के च आरार्कजयोस्त्रिकोणगे अम्बया विसृज्यत इत्यन्वयः । चन्द्रेऽर्के चेति पृथङ्निर्देशाद् योगद्वयमेतत् । आरार्कजयोरिति द्वन्द्वेन निर्दे-

१. 'ति विशे' क. पाठः. २. 'षानाह', ३. 'ग्ने', ४. 'र्गे जन्म प्र' ग. पाठः. ५. 'णे तदधिपनिरूपणे त' क. पाठः. ६. 'रे प्रसूतिः । एवं राश्यंशयोः स्थिते' ग. पाठः. ७. 'शयो' क. ग. पाठः. ८. 'ति ॥ १३ ॥', ९. 'णमाह—' ख. ग. पाठः.

शाद् उभयोरारार्कजयोस्त्रिकोणगतत्वं च विवक्षितम्। अत्रार्कस्य पितृकारकत्वाद् अर्के आरार्कजयोस्त्रिकोणगे पि(ता ? त्रा)विसृज्यत इति केचित्। अस्ते चेति वा पाठः। अमरराजमन्त्रिणा दृष्टे योगकर्तरि स विसृष्टः दीर्घायुः सुखभाक् च स्मृतः। अमरराजमन्त्रिणेति। बलाधिकेन गुरुणा दृष्टे अमरत्वं रसायनसेवादिजनितं, मध्यबलेन गुरुणा दृष्टे राजत्वं, स्वल्पबलेन गुरुणा दृष्टे मन्त्रित्वं च भवतीति क्रमं द्योतयितुम् अमरराजमन्त्रिणेत्युक्तम्। दीर्घायुष्यं सुखभाक्त्वं च मात्रा विसृष्टस्यापि गुरुदृष्टौ सत्यां जायते। स्मृत इति अस्य आगममूलत्वं द्योतयति॥ १४॥

अत्रैव योगान्तरं वसन्ततिलकेनाह —

> पापेक्षिते तुहिनगावुदये कुजेऽस्ते
> त्यक्तो विनश्यति कुजार्कजयोस्तथाये।
> सौम्येऽभिपश्यति तथाविधहस्तमेति
> सौम्येतरेषु परहस्तगतोऽप्यनायुः॥ १५॥

इति। तुहिनगौ पापेक्षिते उदये कुजे अस्ते सति अम्बया त्यक्तो विनश्यतीत्यन्वयः। पापेक्षिते कुजादितराभ्यां यत्रतत्र स्थिताभ्यां दृष्टे कुजे सप्तमस्थिते च सति मात्रा त्यज्यते त्यक्तो नश्यति च इत्येको योगः। तथा पापेक्षिते तुहिनगौ उदये सति कुजार्कजयोराये च स्थितयोः मात्रा त्यक्तो विनश्यति इत्यन्यो योगः। अत्र पापेक्षितत्वमस्तगतार्कदृष्टत्वमेव विवक्ष्यते। कुजार्कजयोराये इत्युक्तत्वात्। तत्रापि कुजस्य पाददृष्टिः मन्दस्य पूर्णदृष्टिश्च सम्भवति। तस्मादत्र उभयत्रापि योगे चन्द्रस्य लग्नगतत्वं पापैर्दृष्टत्वं च तुल्यम्। अत्र विशेषमाह — सौम्ये अभिपश्यति तथाविधहस्तमेतीत्यन्वयः। यथोक्तयोगकर्तारं चन्द्रं सौम्ये शुभग्रहे बुधगुरुशुक्राणामन्यतमे पश्यति सति तथाविधहस्तम् एति। स शुभग्रहः स्वाश्रितराशंशकादिबलविशेषवशाद् यस्या

१. 'योस्त्रि' ख. पाठः. २ 'त्वं विवक्षितम्। आरार्कजयोस्त्रिकोणगतत्वं बि' ग. पाठः. ३. 'म्। अम' ख. ग. पाठः. ४. 'चात्रोक्तं मा' ग. पाठः. ५. 'रोर्दृष्टौ' क. ग. पाठः. ६. 'रमाह—' ख. ग. पाठः. ७. 'तं स', ८. 'क', ९. 'मेकत' ख. पाठः.

जातेः सूचको भवति तज्जातीयस्य हस्तं प्राप्नोति । शुभग्रहदृष्टिबलात् तत्र दीर्घायुः सुखभाक् च भवति । सौम्येतरेषु सौम्येभ्य इतरेषु सूर्यकुजमन्देष्वेव पश्यत्सु च तथाविधहस्तमेति । तत्र विशेषः— परहस्तगतोऽप्यनायुश्च भवति । विसर्जनयोगकर्ता चन्द्रः सौम्यैरदृष्टः सौम्येतरैर्दृष्टश्च यदि भवति तदा परहस्तगतोऽपि म्रियत इत्युक्तं भवति । तथाच सारावल्यां —

"म्रियते च पापदृष्टे शशिनि विलग्ने कुजेऽस्तगे त्यक्तः ।
लग्नाच्च लाभगतयोर्वसुधासुतमन्दयोरेवम् ॥
पश्यति सौम्यो* जातं यादृग् गृह्णाति तादृशो जातम् ।
शुभपापग्रहदृष्टे परैः§ भृतितोऽपि(?) स म्रियते ॥
सर्वेष्वेतेषु यदा योगेषु श(शि ? शी) सुरेज्यमन्ददृष्टः ।
भवति तदा दीर्घायुर्हस्तगतः सर्ववर्णेषु ॥"

इति । अत्र जातः सर्वदा स्वभूमिं त्यजति ॥ १५[1] ॥

इति कर्णभोजराजगुणशेखरा[2]दिवन्मातृत्य[3]क्तानामुत्तरकालदीर्घायुषां तथैव उत्तरकालनिरायुषां च लक्षणमुक्त्वा स्वगृहपरगृहसमानसम्भाविनां लक्ष[4]णं वैतालीयेनाह —

पितृमातृगृहेषु तद्बलात्
तरुशालादिषु नीचगैः शुभैः ।
यदि नैकगतैस्तु वीक्षितौ
लग्नेन्दू विजने प्रसूयते ॥ १६ ॥

इति । पितृकारकस्य रवेः नवमाधिपस्य वा बलाधिक्ये सति पितृगृहे प्रसूयते, मातृकारकस्य चन्द्रस्य चतुर्थाधिपस्य वा बलाधिक्ये सति मातृगृहे प्रसूतिरितीदं लक्षणं 'स्वर्क्षांशगते स्वमन्दिरे' इत्यत्रैवोक्तं, किं पुनरत्रोच्यते । सत्यं तत्रोक्तमेवैतत् । किन्तु विशेषप्रतिपादनार्थमत्रानूद्यते । कोऽसौ विशेष इति चेत् पितृमातृगृहेष्विति बहुवचन-

१. 'ति ॥ १५ ॥' ख. ग. पाठः. २. 'पा', ३. 'स' क. पाठः. ४. 'णमाह —' ख. ग. पाठः.

* 'म्यो बलवान् या ........जातः ।'. § 'गृहीतोऽथवा म्रि' इति मुद्रितसारावलीपाठः ।

प्रयोगः । जातस्यास्य पितृकारकग्रहस्य "स्वतुङ्गवक्रोपगतैस्त्रिसङ्गुणं द्विरुत्तमस्वांशगृहत्रिभागगैः" इति वक्ष्यमाणस्य गुणनस्य विषयत्वं सम्भवति चेद् यावान् गुणकारः तावन्ति पितृगृहाणि तथा मातृकारकग्रहस्य चेत् तावन्ति मातृगृहाणीति द्योतयितुम् अत्र बहुवचनप्रयोगः कृतः । कथं पितृमातृबहुत्वमिति चेद् एकयोर्मातापित्रोरौरसः पुत्रः, अन्ययोर्मातापित्रोर्दत्तपुत्रः, परयोर्मातापित्रोः कृत्रिमपुत्रः, इत्यादिधर्मशास्त्रोक्तपुत्रभेदवशात् पितृबहुत्वं मातृबहुत्वं पितृद्वैगुण्यं मातृद्वैगुण्यं वा यथाबलं ग्रहैर्वक्तव्यमिति जातस्य द्वित्र्यादिपितृमातृसम्भवस्य लक्षणमत्रोक्तमिति वेदितव्यम् । यथा एकस्य स्कन्दस्य कार्त्तिकेय इति शङ्करपुत्र इति पार्वतीनन्दन इति अग्निभूरिति षाण्मातुर इति नामभिरनेकपितृमातृसम्बन्धः, तथा जातस्य तत्काललक्षणवशात् कारणभेदजनितमनेकपितृमातृत्वं सम्भवत्येव । स्वगृहप्रसवस्याशक्त्या बहुविधोपद्रवजनितया अन्यत्र प्रसवस्य लक्षणमाह — तरुसालादिषु नीचगैः शुभैरिति । नीचगैः शुभैः तरुसालादिषु प्रसूयते । शुभैः शुभग्रहैः नीचगतैः, अत एव मानहानिमनस्तापादिसूचकैः तरुसालादिषु तरोर्मूले सालः प्राकारः तत्समीपे वा । आदिग्रहणात् नदीकूलारण्यपर्वतादयोऽनावृतदेशा गृह्यन्ते । अथोत्तरार्धेन उक्तलक्षणलक्षितस्य प्रसूतिदेशस्य विजनत्वं जनाकीर्णत्वं (च) विविनक्ति । लग्नेन्दू एकगतैः ग्रहैर्न वीक्षितौ यदि विजने प्रसूयते । एकत्र स्थितैः ग्रहैरुभयत्र स्थितौ लग्नेन्दू न दृश्येते यदि तदा जनरहिते प्रदेशे प्रसूतिर्वक्तव्या । लग्नस्येन्दोश्च पृथक्स्थितयोरेकस्थितयोर्वा बहुभिर्ग्रहैर्दृश्यमानत्वे सति जनाकीर्णे प्रदेशे प्रसूतिरित्यर्थादुक्तं भवति । तथाच सारावल्यां —

"पितृमा*तृगृहे वर्गे त(त्त)त्स्वजनगृहेषु बलयोगात् ।
प्राकारतरुनदीषु च सूतिर्नीचाश्रितैः सौम्यैः ॥
नेक्षन्ते लग्नेन्दू यद्येकस्था ग्रहास्तदाटव्याम् ।"

१. 'स्य पि'. २. 'नू स गु' ग. पाठः. ३. 'त्तः', ४. 'मः', ५. 'दे', ६. 'णवशात्' ख. पाठः. ७. 'कुल्यार', ८. 'र्णे दे' ग. पाठः. ९. 'ति । विज' ख. ग. पाठः.

* 'तृग्रहबलतस्तत्तत्स्व' इति मुद्रितसारावलीपाठः ।

इति । विजनत्वलक्षणे पुनर्लग्नेन्द्वोः पृथक्स्थितत्वज्ञापनाय एकगतै-रित्युक्तम् । तथाहि—यदा लग्नाद् द्वितीये चन्द्रः, तृतीये चान्ये ग्रहास्तिष्ठन्ति, तदानीमेव लग्नेन्द्वोरन्यदर्शनाभावः सम्भवति । तथा हि पद्धतिप्रदर्शितदृष्ट्यानयनप्रकारादवधार्यते । तद् यथा—

"एकद्वित्रिचतुश्शरर्तुभवनैरूनीकृतांशात्मिका
दृश्यद्रष्टृभिदाधिता तिथियुता खाङ्कच्युतार्धीकृता ।
खाग्न्यूना द्विगुणा वियत्तपनशु(द्व्य ? द्धा)र्धीकृता च क्रमाद्
दृष्टेः षाष्टिलवाः स्युरत्र दशभाधिक्ये भवेन्नेक्षणम् ॥"

इति । अस्यार्थः—दृश्याद् ग्रहाद् द्रष्टरि ग्रहे विशोधिते यदन्तरं भवति तद् दृश्यद्रष्टृभिदा सा यथासम्भवम् एकराशिना द्वाभ्यां वा त्रिभिर्वा चतुर्भिर्वा पञ्चभिर्वा षड्भिर्वा ऊनीकृता विशोधिता ततोऽशात्मिका कार्या । अर्धाधिकं क्षिप्त्वा लिप्तानां विसर्जनं, राशीनां षड्भ्योऽधिकत्वे सति शिष्टानां त्रिंशद्गुणावरोपणं च कर्तव्यमित्यर्थः । तदा दृश्यद्रष्टृ-भिदा भागात्मिका भवति । ततः क्रमात् सा एकोनितशिष्टा चेद् अर्धिता कार्या । तदा दृष्टेः षष्ट्यंशा भवन्ति । द्विराश्यूनितशिष्टा चेत् तिथियुता पञ्चदशसंयुक्ता कार्या । त्रिराश्यूनितशिष्टा चेत् खाङ्कच्युतार्धी-कृता कार्या । खाङ्का नवतिः । ततः शोधिता अर्धीकृता च कर्तव्या । चतुरूनितशिष्टा चेत् खाग्न्यूना कार्या । त्रिंश(द्धिः ? ता)शोधनीया । तत्र शिष्टा दृष्टिषष्ट्यंशा भवन्ति । अतः पञ्चमभावान्ते दृष्ट्यभावश्च ज्ञायते । पञ्चराश्यूनितशिष्टा चेद् द्विगुणा कार्या । अतः षष्ठभावान्ते दृष्टेः पूर्णता च ज्ञायते । षड्राश्यूनितशिष्टा चेद् वियत्तपनशुद्धा वियत्तपना विंश-त्यधिकशतं, तेभ्यः शोधिता अर्धीकृता च कार्या । तदा दृष्टेः षष्ट्यंशा भवन्ति । एवं द्वितीयादारभ्य यावदेकादशं दृष्टिषष्ट्यंशानां सद्भावः । दृश्यद्रष्टृभिदा दशराश्यधिका चेद् ईक्षणं न भवति । तथाच श्रीपतिः—"दिग्भ्योऽधिकं पश्यति न ग्रहेन्द्रः" इति । एवंप्रकारे दृष्ट्यानयने तृतीयभावस्थिता ग्रहाः स्वस्मादेकादशं लग्नं व्ययस्थितं चन्द्रं च न

१. 'न्य' ग. पाठः. २. 'म् ॥ अ' ख. ग. पाठः. ३. 'ष्टि', ४. 'श्यु' ग. पाठः ५. 'ष्ठभा' क. पाठः. ६., ७. 'जा', ८. 'नाभस', ९. 'श्यो' ग. पाठः.

पश्यन्ति इत्येवमभिप्रायेण एकगतैरित्युक्तम् । ननु उक्तप्रकारे दृष्ट्यानयने लाभे व्यये वा सहस्थितयोर्लग्नेन्द्वोरपि[1] दृष्ट्यभावः स्यात् । सत्यम् । ग्रहाणां[2] दृष्ट्यभावस्तत्र भवत्येव, किन्तु लग्नस्य चन्द्रयोगेन चन्द्रदृष्टिफलस्य सम्भवात् । "योगे दृष्टिफलं योज्यं दृष्टौ योगफलं तथा" इति वचनात् । ग्रहयोगस्य ग्रहदृष्ट्युक्तफलप्रदत्वे सति लग्न[3]स्य चन्द्रदृष्टिफलसम्भवः, ततो ग्रहदृष्ट्यभावजन्यं विजनत्वलक्षणं न[4] जाघटीति । अतः पृथक्स्थयोरेव लग्नेन्द्वोरिदं लक्षणमुक्तं[5] भवतीति सर्वमनवद्यम्[6] । अत्र पूर्वोक्ततरुसालादिषु जातस्य वृक्षविक्रयादिना जीवनं, विजने प्रसूयत इत्यत्र जातस्य निर्जनदेशेऽवस्थितिः ॥ १६ ॥

प्रसूतिसमयसम्भवं[7] लक्षणं[8] मन्दाक्रान्तयाह —

मन्दर्क्षांशे शशिनि हिबुके मन्ददृष्टेऽब्जगे वा
तद्युक्ते वा तमसि शयनं नीचसंस्थैश्च भूमौ ।
यद्द्राशिर्व्रजति हरिजं गर्भमोक्षस्तु तद्वत्
पापैश्चन्द्रात्* स्मरसुखगतैः क्लेशमाहुर्जनन्याः ॥ १७ ॥

इति । शशिनि मन्दर्क्षांशे हिबुके तमसि शयनम् इत्यन्वयः । चन्द्रे मन्दराश्यंशकस्थे हिबुकस्थिते[9] च सति मातुः प्रसवकाले तमसि शयनं वक्तव्यम् । अब्जगे मन्ददृष्टे वा इत्यन्यो योगः । चन्द्रे जलराशिगते यत्रतत्रास्थितेन[10][11] मन्देन दृष्टे सति च तमसि शयनम् । तद्युक्ते वा चन्द्रे मन्दयुते[12] वा यत्रतत्रास्थिते च सति तमसि शयनम् इत्यपरो योगः । इति योगत्रितयम् । केचित्तु मन्दर्क्षांशे शशिनि हिबुके शशिनि मन्ददृष्टे शशिनि अब्जगे शशिनि तद्युक्ते शशिनि चेति अत्र तमःशयनस्य लक्षणपञ्चकमाचक्षते[13] । एतेषु योगेषु यदार्कदृष्टश्चन्द्रमा भवति तदान्धकाराभावः । यस्माद्यवनेश्वरः — 'जातस्तमिस्रे यदि नार्कदृष्टे' इति । अत्र जातस्य दीप-

१. 'हेन्द्राणां', २. 'ग्यं', ३. 'भच', ४. 'न च जा', ५. 'क्तमिति' ग. पाठः. ६. 'म् ॥ १६ ॥', ७. 'व', ८. 'णमाह' ख. ग. पाठः. ९. 'ते स' क. पाठः. १०. 'कु' ख. पाठः. ११. 'ते म' क. ख. पाठः. १२. 'क्ते' क. पाठः. १३. 'ते । एत' ख. ग. पाठः.

* 'न्द्रस्मर' इति व्याख्यानुसारी पाठः.

दर्शने निद्राभावः। एतत् तमःशयनमाधानकाले अन्यत्रापि यथासम्भवं भोजनसुरतप्रश्नादौ योजनीयम् । नीचसंस्थैर्भूमौ शयनं च वक्तव्यम् । शयनस्थानाधिपे नीचगते भूमौ शयनं वक्तव्यम् । नीचसंस्थैरिति बहुवचनाद् यथासम्भवं त्रिप्रभृतिभिर्ग्रहैः शुभैर्नीचसंस्थैर्भूमौ शयनं वाच्यमिति द्योत्यते । केचिल्लग्नस्थे वा नीचगे चन्द्रे भूशयनमिच्छन्ति । तथाच सारावल्यां —

"नीचस्थे भूशयनं चन्द्रेऽप्यथवा विलग्ने वा"

इति । एतदपि सुरतप्रश्नादौ युक्त्या योज्यम् । अस्मिन् योगे जातस्य शय्यासौख्यं न सम्भवति । राशिर्यद्वद्द्विरिजं व्रजति तद्वद् गर्भमोक्ष इत्यन्वयः। गर्भमोक्षः गर्भविनिर्गमः । लग्नराशिर्यथा क्षितिजं प्राप्नोति तथा गर्भमोक्षः। तथाचोक्तं सारावल्यां —

"शीर्षोदये विलग्ने मूर्ध्ना प्रसवोऽन्यथोदये पद्भ्याम् ।
उभयोदये भुजाभ्याम्"

इति । यदा लग्नाधिपो नवांशकाधिपो वा लग्नस्थो वा ग्रहो वक्रीभवति तदा वैपरीत्येन गर्भमोक्षो वाच्यः । तथाच मणित्थः —

"लग्नाधिपेंऽशकपतौ लग्नस्थे वक्रिते ग्रहे वापि ।
विपरीतमतो मोक्षो वाच्यो गर्भस्य स क्रमशः ॥"

चन्द्रस्मरसुखगतैः पापैः जनन्याः क्लेशमाहुः। चन्द्रयुक्तैः चन्द्रस्मरयुक्तैः चन्द्रसुखयुक्तैश्च जनन्याः क्लेशमाहुः । अत्र केचित् चन्द्रगतैः लग्नात् स्मरगतैः सप्तमस्थैः सुखगतैः चतुर्थस्थैरिति वदन्ति । तथाच सारावल्यां —

"क्लेशो मातुः क्रूरैर्बन्धवस्तगतैः शशाङ्कयुक्तैर्वा"

इति । अर्थाच्चन्द्रस्मरसुखगतैः शुभैर्जनन्याः सुखप्रसूतिश्च वक्तव्या । अस्मिन् योगे जातस्य मातृनिमित्तं द्रव्यक्षयादिकं वाच्यम् । तत्र चतुर्थे पापः सप्तमे शुभश्चेत् कलत्रनिमित्तं मात(रं ? रमभि)द्रुह्यति ॥ १७॥

१. 'म् । राशि' ख. ग. पाठः. २. 'ति । चन्द्र' ग, 'ति । चन्द्रात् स्म' ख. पाठः. ३. 'हुः । अर्था', ४. 'व्या' ॥ १७ ॥ ' ख. पाठः.

प्रसूति[1]समये मातुरवस्थालक्षणमुक्त्वा[2] सूतिकागृहस्वरूपं तद्गतविशेषांश्च चतुर्भिः श्लोकैर्लक्षयति । तत्र प्रथमं[3] दीपगृहद्वारलक्षणमिन्द्रवज्रयाह —

स्नेहः शशाङ्कादुदयाच्च वर्ति-
दीपो[4]ऽर्कयुक्तर्क्ष[5]वशाच्चराद्यैः ।
द्वारं च तद्वास्तुनि केन्द्रसंस्थै-
र्वाच्यं ग्रहैर्वीर्यसमन्वितैर्वा ॥ १८ ॥

इति । रात्रौ तमःशयनलक्षणाभावे प्रकाशार्थं मङ्गलार्थं च दिवापि मङ्गलार्थं न्यस्तस्य दीपस्य स्नेहः शशाङ्काद् वक्तव्य इति सम्बन्धः । शशाङ्कस्य चन्द्रहोरागतत्वे घृतादयो गोमहिषाजादिसम्भवाः स्नेहाः, सूर्यहोरागतत्वे तिलनालिकेरतौरवमधूकादिबीजसम्भवाः स्नेहाः । तद्वि-शेषश्च राश्यंशकग्रहयोगेक्षणवशान्निर्देश्यः । चन्द्राक्रान्तस्य राशेरंश[6]-कस्य वा बलिनो गतैष्यत्खण्डाभ्यां दीपभाजनस्थस्य स्नेहस्य एताव-न्नष्टम् एतावत् तत्र वर्तते इति च वक्तव्यम् । देशकालावस्थानुसरणं स-र्वत्र कर्तव्यम् । उदयाद् वर्तिश्च । उदयलग्नवशात् लग्नस्थस्यै वा लग्ना-धिपस्य वा ग्रहस्योक्ताद् वस्त्राद् उत्पन्ना, राशेरंशराशेर्वा बलिनो वर्णेन युक्ता बलसाम्ये विचित्रवर्णा वर्त्तिश्च वक्तव्या । तस्याश्च राशिगतैष्य-त्खण्डाभ्यां तस्या दग्धादग्धखण्डावादेश्यौ । अर्कयुक्तर्क्षवशाच्चराद्यै-र्दीपः । आदित्याधिष्ठितराशिवशात् सूतिकागृहं द्वादशधा विभज्य 'प्राच्यादिगृहे क्रियादय' इति वक्ष्यमाणप्रकारेण राशीन् कल्पयित्वा तत्र यत्रार्कस्तिष्ठति तत्र दीपस्थानं वक्तव्यम् । अथवा राशेर्बलाधिक्ये सति 'प्रागादीशाः क्रिये'त्यादिना यत्रार्काधिष्ठितराशिर्भवति तत्र दीप-स्थानं वक्तव्यम् । चराद्यैर्दीपविशेषो वक्तव्यः । चरराशिस्थेऽर्के च-रदीपः स्थिरराशिस्थेऽर्के स्थिरदीपः उभयराशिस्थेऽर्के डोलायमानो लम्बितदीपः । अर्कराशिवशाद् दीपभाजनस्य सौवर्णराजतकांस्याय-सम्मृन्मयत्वादि च यथासम्भवमौचित्यवशान्निर्देश्यम् । तद्वास्तुनि केन्द्रसंस्थैर्ग्रहैः द्वारं च वाच्यम् । ग्रहैः 'प्रागाद्या रविशुक्रलोहिततमःसौ-

1. 'तिकाले मा' क. पाठः. २. 'क्त्वा प्रसू' ख. पाठः ३. 'मं सूतिकागृहगतदीपलक्षणमाह —', ४ 'र्द्यं प्र' ख. ग. पाठः. ५. 'शेन निर्दे' क. ग. पाठः. ६. 'शेः राश्यंशक', ७. 'स्य ल', ८. 'शिं क' ग. पाठः. ९. 'दीप' क. ख. पाठः १०. 'तु' ख. पाठः.

न्दुवित्सूरयः' इत्युक्तायां स्वस्यां दिशि द्वारं वाच्यम् । केन्द्रस्थग्रहाभावे
ीर्यसमन्वितैर्वा इति । यो ग्रहो वीर्यान्वितः तस्योक्तदिशि द्वारं,
न्द्रे बहुषु ग्रहेषु सत्सु च वीर्याधिकेन, द्वौ वीर्याधिकौ चेद् द्वारद्वयं
ायश्चेत् त्रयम् इत्यादि बलौचित्यवशाद् विज्ञेयम् ॥ १८ ॥

अथ ग्रहवशेन सूतिकागृहलक्षणं शार्दूलविक्रीडितेनाह—

**जीर्णं संस्कृतमर्कजे क्षितिसुते दग्धं नवं शीतगौ**
**काष्ठाढ्यं नदृढं रवौ शशिसुते चानेकशिल्प्युद्भवम् ।**
**रम्यं चित्रयुतं नवं च भृगुजे जीवे दृढं मन्दिरं**
**चक्रस्थैश्च यथोपदेशरचनान् सामन्तपूर्वान् वदेत्॥१९॥**

इति । गृहभावस्थितेन गृहभावाधिपेन वा वीर्याधिकेन ग्रहेण
ूतिकागृहलक्षणं वक्तव्यम् । तत्र अर्कजे गृहकारके सति जीर्णं संस्कृतं
न्दिरं भवतीति शेषः । जीर्णं पुराणं तदानीं संस्कृतम् अवस्थानक्षमं
ृतमित्यर्थः । क्षितिसुते दग्धं दग्धैक(शेष ? देश)मित्यर्थः । शीतगौ
वं तत्कालरचितम् । रवौ काष्ठाढ्यं नदृढं भवति । काष्ठाढ्यम्
(शि ? त)क्षितदारुनिर्मितमित्यर्थः । नदृढम् अश्लिष्टसन्धिबन्धम् ।
शिसुते अनेकशिल्प्युद्भवं च अनेकैः शिल्पिभिर्निर्मितम् । भृगुजे
ीर्याधिके सति रम्यं चित्रयुतं नवं च मन्दिरम् । नवम् अभिनवर-
चितम् । जीवे मन्दिरं दृढं सारदारुकृतं सुश्लिष्टसन्धिबन्धं च भवति ।
क्रस्थैर्यथोपदेशरचनान् सामन्तपूर्वांश्च वदेदित्यन्वयः । चक्रस्थैः सू-
तिकागृहकारकस्य केन्द्रगतैः पणफरगतैरापोक्लिमगतैश्चेति यावत् । सा-
न्तपूर्वान् समन्तभवाः सामन्ताः ते पूर्वे येषां ते सामन्तपूर्वाः । तत्र
न्द्रेष्वेकत्र बलाधिको ग्रहस्तिष्ठति चेत् सूतिकागृहासन्ने तस्य साम-
न्तत्वेनान्यद् गृहं वक्तव्यम् । तच्च यथोपदेशरचनं जीर्णं संस्कृतमित्या-
ुक्तलक्षणम् । तथा 'प्रागाद्या रवी'त्युक्तग्रहदिशि वा 'प्रागादीशाः

१. 'क्त्या स्व' ख. पाठः. २. 'यां दि' क. पाठः. ३ 'स्य दि' ग. पाठः. ४. णमाह—', ५. 'न वा ग्र' ख. ग. पाठः. ६. 'र्णं' क. ग. पाठः. ७. 'ढं मन्दिर भ' क. ख. पाठः. ८. 'न्धिखण्डम् ।', ९. 'थः । सू' ग. पाठः. १०. 'तीग' ११. सा' क. ख. पाठः. १२. 'तीगृ' क. पाठः. १३. 'म् । य' ग. पाठः.

क्रियवृषनृयुक्कर्कटाः सत्रिकोणा' इत्युक्तराशिदिशि वा बलवशेन वक्तव्यम् इत्यपि यथोपदेशशब्देन द्योत्यते । ग्रहस्योच्चनीचान्तरस्थितिवशेन गृहाणामुत्तमाधममध्यमत्वं च वक्तव्यम् । सामन्तपूर्वानित्यत्र पूर्वशब्देन सामन्तगृहस्य अत्यासन्नत्वं, पणफरस्थितेन वीर्याधिकेन ग्रहेण वाच्यस्य गृहस्य सामन्तानन्तरत्वान्माध्यस्थ्यम्, आपोक्लिमस्थेग्रहेण वाच्यस्य भवनस्य तत्र दूरस्थत्वं च यथासम्भवं वक्तव्यमिति द्योत्यते । तत्र ग्रहाणां तुङ्गवक्रवर्गोत्तमस्वगृहस्वनवांशस्वद्रेक्काणगतत्वसम्भवे भवनानां द्विगुणत्वं त्रिगुणत्वं च वाच्यम् । आसन्नभवनद्योतकानां ग्रहाणां लग्नाधिपस्य शत्रुमित्रोदासीनत्ववशेन वि(प्रादित्व ? प्रन्वादि)वर्णवशेन च तत्तद्गृहवास्तव्यानां प्रातिवेशिकानां शत्रुमित्रोदासीनत्वविशेषो जातिविशेषश्च बलाबलवशेन निर्देष्टव्यः ॥ १९ ॥

अथैवं लक्षिते सूतिकागृहे प्रसूतेर्भागविशेषं दर्शयेनाह —

**मेषकुलीरतुलालिघटैः प्रा-**
**गुत्तरतो गुरुसौम्यगृहैश्च ।**
**पश्चिमतश्च वृषेण निवासो**
**दक्षिणभागकरौ मृगसिंहौ ॥ २० ॥**

इति । मेषकुलीरतुलालिघटैः प्राक् प्राग्भित्तिसमीपे । गुरुसौम्यगृहैरुत्तरतश्च उत्तरभित्तिसमीपे । वृषेण पश्चिमतो निवासः पश्चिमभित्तिसमीपे । मृगसिंहौ दक्षिणभागकरौ दक्षिणभित्तिसमीपकरौ । अत्र भावविशेषेण ग्रहविशेषेण वा वैशिष्ट्यं विना राशीनां संज्ञामात्रेण निर्देशाद् राशिभिरपि प्रसूतिसमयश्रवणकालोदयलग्नारूढच्छत्रभूतैर्बलवशेन विशेषो निर्देश्यं इति द्योत्यते ॥ २० ॥

सूतिकागृहस्य सूतिकाशय्यायाश्च यत्र यत्र जीर्णसंस्काराद्युक्तविशेषो वक्तव्यः, आधारदण्डिकानां नतत्वोन्नतत्ववक्रत्वादिसम्भवो वा भवति तन्निर्देशाय राशिविन्यासप्रकारं[11] वैतालीयेनाह —

**प्राच्यादि गृहे क्रियादयो**
**द्वौ द्वौ कोणगता द्विमूर्तयः ।**

---

१. 'येत्याद्युक्त' ग. पाठः. २. 'क्तदि' ख. पाठः. ३. 'न्तस्थि', ४. 'स्थस्य ग्रहवा' ग पाठः. ५. 'त्र तत्र प्र' क. पाठः. ६. 'समाह—' ख. ग. पाठः. ७. 'प्रदिक्समी ग. पाठः ८. 'ण वा प्र' ख. ग. पाठः. ९. 'भि सूतीस' क. पाठः. १०. 'श्यः ॥ २० ॥' ग. पाठः. ११. 'रमाह —' ख. ग. पाठः.

**शय्यास्वपि वास्तुवद् वदेत्**
**पादैः षट्त्रिनवान्त्यसंस्थितैः ॥ २१ ॥**

इति । गृहे प्राच्यादि द्वौ द्वौ क्रियादयो राशयः द्विमूर्तयः कोणगता भवन्ति इति सम्बन्धः । प्राच्यादि प्राचीमारभ्येति यावत् । प्राच्यां दिशि क्रियो वृषश्च द्वौ । कोणे द्विमूर्तिर्मिथुनराशिः । दक्षिणस्यां कर्कटसिंहौ द्वौ । निर्ऋतिकोणे कन्याराशिरित्याद्युक्तं भवति । एवं राशिविन्यासं विधाय तत्र ह्रस्वदीर्घादिराशिभिः शुभाशुभग्रहैश्च योगेक्षणवशात् तत्तदधिष्ठितप्रदेशेषु जीर्णसंस्कारदाहच्छित्रत्वादिविशेषा वाच्याः । शय्यास्वपि वास्तुवद् वदेत् । शय्यास्विति बहुवचनेन तत्रापि यथासम्भवं ग्रहैः जीर्णसंस्कृतत्वादि निरूपणीयमिति द्योत्यते । वास्तुवदिति वास्तुनीव राशिविन्यासं कृत्वा विशेषं वदेत् । किन्तु पादैः षट्त्रिनवान्त्यसंस्थितैः । प्रसवलग्नं खट्वायां शिरोविन्यासस्थाने निधाय ततः तृतीयषष्ठनवमद्वादशराशीन् खट्वापादेषु विन्यसेत् । तदन्तराल-रा(शिभिः ? शीन्)खट्वादण्डेषु च विन्यसेद् इत्यर्थादुक्तं भवति । दृश्यार्धेन वामभागः, अदृश्यार्धेन दक्षिणभागः इति च 'कं दृगि' त्यादिवक्ष्यमाणश्लोकेन सिध्यति । अस्य प्रयोजनं यमलर्क्षैर्विनतत्वं क्रूरर्क्षैस्तत्तुल्य उपघात इति । एवं सदैवापहतखट्वाप्रस(ङ्गा ? ङ्गो) यस्मादवश्यं क्वचिदपि पापग्रहेण भाव्यं यमलर्क्षेण च भाव्यमिति । तत्र यमलर्क्षे सौम्यग्रहस्वामियुक्ते दृष्टेऽप्यत्राप्यनियतत्वम् । पापग्रहोऽपि स्वोच्चराशित्रिकोणमित्रक्षेत्रस्थः अशुभफलकरो न भवति ॥ २१ ॥

प्रसवकालोपयोगिनाम् उपसूतिकानां निर्देशलक्षणमनुष्टुभमाह —

**चन्द्रलग्नान्तरगतैर्ग्रहैः स्युरुपसूतिकाः ।**
**बहिरन्तश्च चक्रार्धे दृश्यादृश्येऽन्यथा परे ॥ २२ ॥**

इति । चन्द्रलग्नान्तरगतैः ग्रहैरुपसूतिकाः स्युः । चन्द्रस्य च लग्नस्य च अन्तरे ये ग्रहाः ते चन्द्रलग्नान्तरगताः । विस्मापनप्रत्य-

१. 'त्युक्तं' ख. पाठः. २. 'शिन्यासं विन्यस्य विधा', ३. 'भैर्ग्रहै', ४. 'क्षो', ५. 'च्यः' ग. पाठः. ६. 'शिन्या' क. ग. पाठः. ७. 'ति ॥ २१ ॥' ख. ग. पाठः. ८. 'लोपयोगिकानां' क. ख. पाठः. ९. 'णमाह' ख. ग. पाठः. १०. 'स्य ल' ख. पाठः.

यानां प्रसवलग्नवशात् सामान्येन निर्देश उक्तः । अतोऽत्रापि लग्नाद् यावच्चन्द्रं स्थिता ग्रहाः गृह्यन्ते । न चन्द्राल्लग्नावधि स्थिताः । तत्र चन्द्रे सप्तमादुपरि स्थिते सति केचिद् अदृश्यार्धस्था ग्रहाः केचिद् दृश्यार्धस्थाश्च सम्भवन्ति । तत्र अदृश्यार्धस्थितैः प्रसवोपयोगिन्यः सूतिकागृहान्तःस्था उपसूतिका वाच्याः, दृश्यार्धस्थितैः सूतिकागृहाद् बहिःस्थिता वाच्याः । उच्चादिगतत्वेन तासां द्वित्रिगुणत्वं च शत्रुनीचादिगतैरनुपयोगित्वं च वक्तव्यम् । परे अन्यथा आह । परे दृश्यादृश्ये चक्रार्धे अन्तर्बहिःस्थिता उपसूतिकाः स्युरिति वदन्ति । तथाच जीवशर्मा —

"उदयशशिमध्यसंस्थैर्ग्रहैः स्युरुपसूतिकास्तत्र ।
उदगर्धगतैर्बाह्ये दक्षिणगैरन्तरे ज्ञे(ये ? याः) ॥"

इति । अत्र पूर्व एव पक्षः श्रेयान् । तथाचोक्तमाचार्येण स्वल्पजातके—

"शशिलग्नान्तरसंस्थग्रहतुल्याः सूतिकाश्च वक्तव्याः ।
उदगर्धेऽभ्यन्तरगा बाह्याश्चक्रस्य दृश्यार्धे ॥"

इति । अत्र उपसूतिका यैर्ग्रहैर्निर्दिश्यन्ते, तत्तद्ग्रहतुल्यजातिवर्णवयोरूपाश्च ता वक्तव्याः । जातिरुक्ता 'विप्रादित' इति । वयोऽपि शशिकुजबुधा बालाः । रविगुरू मध्यवयसौ । शुक्रो युवा । वृद्धोऽर्कज इति । वर्णाः रक्तश्यामादि । रूपाण्यपि मधुपिङ्गलदृगित्यादि ॥ २२ ॥

अथ जातस्य शिशोः शरीरलक्षणं दोधकेनाह[8]—

**लग्ननवांशपतुल्यतनुः स्याद्**
**वीर्ययुतग्रहतुल्यतनुर्वा ।**
**चन्द्रसमेतनवांशपवर्णः**
**कादिविलग्नविभक्तभगात्रः ॥ २३ ॥**

इति । लग्ननवांशपतुल्यतनुः स्यात् । लग्ननवांशाधिपेन तुल्यशरीरो भवतीत्यर्थः । वीर्ययुतग्रहतुल्यतनुर्वा भवति । तत्काले यो

१. 'त', २. 'त्र लग्नात् चन्द्र', ३. 'स्थाः स' ग. पाठः. ४. 'न्ति । पूर्व' ख. ग. पाठः. ५. 'क्षः त' ग. पाठः. ६. 'थोक्त' क. ख. पाठः. ७. 'श्च व' ग. पाठः. ८. 'णमाह—' ख., 'णमाह श्लोकचतुष्टयेन—' ग. पाठः. ९. 'नुर्भवति वा ।' क. ग. पाठः.

वीर्याधिको[1] ग्रहः, केन्द्रस्थितः इत्यर्थाद् भवति । तेन तुल्यतनुर्वा[2] भवति । चन्द्रसमेतनवांशपवर्णः चन्द्रस्थितनवांशाधिपस्य वर्ण इव वर्णो यस्य स तथा[3] । अत्र च वर्णः 'रक्तः श्यामो भास्कर' इत्यादिनोक्तः । कादिविलग्नविभक्तभगात्रः कं शिरः तदारभ्य विलग्नादिभिः राशिभिर्विभक्तं भगात्रं राशिस्वरूपं गात्रं यस्य सः कादिविलग्नविभक्तभगात्रः । विलग्नं शिरसि कृत्वा तदाद्यै राशिभिः वराङ्गमाननमित्यादिक्रमेण देहे[4]न्यस्तैः ग्रहयोगेक्षणवशाद् गात्राणां लक्षणं वक्तव्यमित्यर्थः[5] । तद्यथा—अत्र राशीनां प्रमाणमुक्तं 'पूर्वार्धे विषयादय' इत्यादिना पूर्वमेव । यत्राङ्गस्थे दीर्घे राशौ दीर्घराश्यधिपोऽवस्थितो भवति तदङ्गं तस्य दीर्घं वक्तव्यम् । तथाच स(त्य?ति) दीर्घाधिपतिगृहे स्थितो ग्रहोऽवयवदीर्घकृद् भवति । अर्थादेवाल्पप्रमाणराश्यधिपोऽल्पप्रमाणराशौ व्यवस्थितस्तदङ्गाल्पकृद् भवति । दीर्घराश्यधिपोऽल्पराशिव्यवस्थितोऽङ्गमध्यमकृत् । यत्र न कश्चिद् व्यवस्थितस्तत्र राशिप्रमाणमेवाङ्गप्रमाणं वाच्यम् । अत्र स्थिरचक्रेण गात्रलक्षणमुक्तम् ॥ २३ ॥

अथ चरचक्रेण[6] गात्रलक्षणं शार्दूलविक्रीडितेनाह —

**कंदृक्छ्रोत्रनसाकपोलहनवो वक्त्रं च होरादय-**<br>
**स्ते कण्ठांसकबाहुपार्श्वहृदयक्रोडानि नाभिस्तथा ।**<br>
**वस्तिः शिश्नगुदे ततश्च वृषणावूरू ततो जानुनी**<br>
***जङ्घेऽङ्घ्रीत्युभयत्र वाममुदितैर्द्रेक्काणभागैस्त्रिधा ॥ २४ ॥**

इति । मूर्धादिवक्त्रान्तं कण्ठादिनाभ्यन्तं वस्त्यादिपादान्तं च शरीरं त्रिधा विभज्य त्रिष्वपि भागेषु चरचक्रन्यासः क्रियते । तत्र लग्नभावस्य गन्तव्यमारभ्य सप्तमभावस्य गतभागावधि चक्रार्धमदृश्यम् । सप्तमभागस्य गन्तव्यभागमारभ्य लग्नगतभागान्तं चक्रार्धं दृश्यम् । तत्रादृश्यार्धस्य दक्षिणाङ्गेषु यथोक्तेषु न्यासः, दृश्यार्धस्य[7] वामाङ्गेषु न्यासः कर्तव्यः । तत्र प्रथमं मूर्धाद्यूर्ध्वभागन्यासमाह[8] —

१. 'र्ययुतो ग्र' क. पाठः. २. 'र्वा । च' क. ग. पाठः. ३. 'था । का', ४. 'हे', ५. 'र्थः । अत्र स्थि', ६. 'णाह —' ख. ग. पाठः. ७. 'श्यार्धेषु वा' ग. पाठः. ८. 'गानाह—' ख. ग. पाठः.

* 'जङ्घाङ्घ्री'ति मुद्रितपाठः.

कंदृक्छ्रोत्रनसाकपोलहनवः वक्त्रं च क्रमोत्क्रमाभ्यां दक्षिणवामभागयोर्होरादयो भवन्तीति सम्बन्धः । होरा लग्नम् । तस्य गन्तव्यभागः शिरसो दक्षिणार्धं, धनभावो दक्षिणदृष्टिः, तृतीयो राशिः दक्षिणकर्णः, चतुर्थो दक्षिणनासा, पञ्चमो दक्षिणकपोलः, षष्ठो दक्षिणहनुः, सप्तमस्य गतं वक्त्रदक्षिणार्धं, गन्तव्यभागः वक्त्रवामार्धम्, अष्टमो वामहनुः, नवमो वामकपोलः, दशमो वामनासा, एकादशो वामकर्णः, द्वादशो वामदृष्टिः, लग्नस्य गतभागः शिरसो वामार्धम् । एवमूर्ध्वाङ्गे लग्नादिचरचक्रन्यासः । अथ मध्यमाङ्गे न्यासमाह — कण्ठांसकबाहुपार्श्वहृदयक्रोडानि नाभिः । ते होरादयः पूर्ववत् क्रमोत्क्रमाभ्यां दक्षिणवामयोर्भागयोर्भवन्तीति सम्बन्धः । कण्ठस्य दक्षिणार्धं लग्नस्य गन्तव्यभागः, वामार्धं गतभागः, दक्षिणांसो द्वितीयराशिः, वामांसो द्वादशराशिः, तृतीयैकादशौ दक्षिणवामबाहू, चतुर्थदशमौ दक्षिणवामपार्श्वे, पञ्चमो हृदयदक्षिणभागः नवमो हृदयवामभागः, षष्ठो जठरस्य दक्षिणभागः, अष्टमो जठरस्य वामभागः, सप्तमस्य गतार्धं नाभेर्दक्षिणभागः गन्तव्यार्धं वामभागः । इति देहमध्यभागे चरचक्रन्यासः । अधःकाये चरचक्रन्यासमाह — वस्तिरित्यादिना । होरादय इत्यनुवर्तते । पूर्ववल्लग्नं वस्तिः, द्वितीयद्वादशौ शिश्नगुदयोर्दक्षिणवामभागौ, तृतीयैकादशौ दक्षिणवामवृषणमणी, चतुर्थदशमौ दक्षिणवामोरू, पञ्चमनवमौ दक्षिणवामजानुनी, षष्ठाष्टमौ दक्षिणवामजङ्घे । अस्तलग्नस्य गतगन्तव्यौ भागौ दक्षिणवामपादौ । इत्यधःकाये चरचक्रन्यासः । उदितैर्वामम् । उदितैरनस्तमितै राशिभिः । वामम् इति दक्षिणेतरं विलोमं च योजनीयमिति शेषः । वामशब्दस्य दक्षिणेतरार्थवाचित्वं विलोमार्थवाचित्वमप्यत्रापेक्ष्यते । अत उदितैर्दृश्यार्धस्थैः वामभागे प्रतिलोम इत्यर्थः सिध्यति । अत एवादृश्यार्धस्थैः दक्षिणभागे क्रमेण चेत्युक्तं भवति । तथाच पूर्वं व्याख्यातम् । त्रिषु स्थानेषु न्यस्तेन चक्रेण कथं विशेषनिर्देश इत्याशङ्कायामाह—

१. 'य', २. 'र्धं सप्तमस्य ग', ३, ४. 'वः', ५. 'चक्र' ग. पाठः. ६ 'मभागे न्या' ख. ग. पाठः. ७. 'व्य' क. ग. पाठः. ८. 'त्वमत्र'. ९. 'र्थात् सि' ग. पाठः. १०. 'च' ख. पाठः. ११. 'णेत्यु' क. पाठः.

द्रेक्काणभागैस्त्रिधा । लग्नस्य प्रथमद्रेक्काणे सति मूर्धाद्यङ्गेषु मध्यद्रेक्काणे कण्ठाद्यङ्गेषु तृतीयद्रेक्काणे वस्त्याद्यङ्गेषु इति त्रिधा न्यासः कर्तव्यः इति केचित् । अन्ये पुनरेवं व्याचक्षते—प्रथमद्रेक्काणजातश्चेत् स प्रथमद्रेक्काणो मूर्धा । द्वितीयद्वादशराश्योः प्रथमद्रेक्काणौ चक्षुषी । तृतीयैकादशराश्योः प्रथमद्रेक्काणौ कर्णौ । चतुर्थदशमयोः प्रथमद्रेक्काणौ नासिके । पञ्चमनवमयोः प्रथमद्रेक्काणौ कपोलौ । षष्ठाष्टमयोः प्रथमद्रेक्काणौ हनू । सप्तमस्य प्रथमद्रेक्काणो वक्त्रम् । लग्नमध्यद्रेक्काणः कण्ठः । द्वितीयद्वादशराशिमध्यद्रेक्काणावंसौ । तृतीयैकादशराशिमध्यद्रेक्काणौ बाहू । चतुर्थदशमराशिमध्यद्रेक्काणौ पार्श्वे । पञ्चमनवमराशिमध्यद्रेक्काणौ हृद्भागौ षष्ठाष्टमराशिमध्यद्रेक्काणौ क्रोडभागौ । सप्तमराशिमध्यद्रेक्काणो नाभिः । लग्नान्त्यद्रेक्काणो वस्तिः । द्वितीयद्वादशराश्यन्त्यद्रेक्काणौ शिश्नगुदभागौ । तृतीयैकादशराश्यन्त्यद्रेक्काणौ वृषणमर्णौ । चतुर्थदशमान्त्यद्रेक्काणावूरू । पञ्चमनवमान्त्यद्रेक्काणौ जानुनी । षष्ठाष्टमान्त्यद्रेक्काणौ जङ्घे । सप्तमराश्यन्त्यद्रेक्काणः पादौ । एवं प्रथमद्रेक्काणजातस्य । मध्यद्रेक्काणजातश्चेत्, लग्नमध्यद्रेक्काणो मूर्धा । द्वितीयद्वादशमध्यद्रेक्काणौ चक्षुषी । इत्यादि । सप्तमराशिमध्यद्रेक्काणो वक्त्रम् । लग्नान्त्यद्रेक्काणः कण्ठः इत्यादि । लग्नादिद्रेक्काणो वस्तिः इत्यादि । एवं मध्यद्रेक्काणजातस्य । अन्त्यद्रेक्काणजातश्चेत्, लग्नान्त्यद्रेक्काणो मूर्धा इत्यादि । लग्नादिद्रेक्काणः कण्ठः इत्यादि । लग्नमध्यद्रेक्काणो वस्तिः इत्यादि पूर्ववत् । अयं पाठः श्रेयान् । अत्र शीर्षोदयपृष्ठोदयोभयोदयराशिभिरूर्ध्वमुखाधोमुखतिर्यङ्मुखैश्च द्रेक्काणवेद्[2] बलवशेन स्थानविशेषो वक्तव्यः । तत्र द्रेक्काणाधिपस्य बलवत्त्वे द्रेक्काणवशात् स्थानकल्पना, लग्नस्य बलवत्त्वे शीर्षोदयादिना, आदित्यस्य बलवत्त्वे ऊर्ध्वमुखादिनेति सम्प्रदायः ॥ २४ ॥

उक्तेषु स्थानेषु ग्रहवशाद् वक्तव्यं विशेषं[3] शार्दूलविक्रीडितेनाह —

**तस्मिन् पापयुते व्रणः शुभयुते दृष्टे च लक्ष्मादिशेत्**
**स्वक्षांशस्थिरसंयुते च सहजः स्यादन्यथागन्तुकः ।**

---

१. 'इति केचित्' इत्यारभ्य 'अयं पाठः श्रेयान्' इत्यन्तं ख ग. पुस्तकयोर्नास्ति । २. 'वशाद् ब' ख. पाठः. ३. 'षमाह' ख. ग. पाठः.

**मन्देऽश्मानिलजोऽग्निशस्त्रविषजो भौमे बुधे भूभवः**
**सूर्ये काष्ठचतुष्पदेन हिमगौ शृङ्ग्यब्जजोऽन्यैः शुभः ॥**

इति । पापयुते तस्मिन् व्रणो भवति इत्यन्वयः । तत्र पापग्रहेण[1] युक्ते अङ्गे व्रणो[2] भवतीत्यर्थः । शुभयुते[3] दृष्टे च लक्ष्मादिशेत् । शुभेन युक्ते[4] दृष्टे वा[5] लक्ष्म आदिशेत् । लक्ष्म किणादिचिह्नम् । पापग्रहयुक्ते स्थाने शुभस्य[6] योगो वीक्षणं वा सम्भवति चेत् लक्ष्मैव भवति, न व्रण इत्यर्थः[7] । अत्र तत्तद्द्रेकाणस्थैः पापैः शुभैर्वा तत्तद्द्रेकाणोक्ताङ्गेषु[8] व्रणलक्ष्मादिकं वाच्यमिति विशेषः । स्वर्क्षांशस्थिरसंयुते च सहजः, ग्रहे स्वराशिस्थे स्वनवांशकस्थे स्थिरराशिस्थे वा सहजो व्रणः लक्ष्म वा, अन्यथा आगन्तुकः स्यात् । ग्रहस्य स्वर्क्षांशस्थिरसंयुताभावे आगन्तुकः जननानन्तरं कारणजनितः । व्रणकारणविशेषानाह — मन्दे अश्मानिलजः शनौ व्रणकारके सति अश्मानिलजः अश्मना अनिलेन वा जातः । भौमे अग्निशस्त्रविषजः अग्निना शस्त्रेण विषेण वा जातः । बुधे भूभवः भूभवो व्रणः भूम्यभिघातेन जातः । सूर्ये काष्ठचतुष्पदेन काष्ठेन दारुणा चतुष्पदेन गोमहिषादिभिर्जनितो व्रणः । हिमगौ शृङ्ग्यब्जजः शृङ्गिभिर्जलचरैः मत्स्यादिभिर्जनितः । अन्यैः शुभग्रहैः । बहुवचनम् अक्षीणचन्द्रस्य पापयोगरहितस्य बुधस्य च शुभत्वात्, गुरुशुक्रचन्द्रबुधैरित्यर्थः । शुभः शुभग्रहसहिते[9] देहावयवे सौष्ठवं वा भूषणं वा भविष्यतीति वक्तव्यम्[10] ॥ २५ ॥

पुनरपि व्रणादिज्ञानार्थं हरिणीमाह —

**समनुपतिता यस्मिन् गात्रे त्रयः सबुधा ग्रहा**
**भवति नियमात् तस्यावाप्तिः शुभेष्वशुभेषु वा ।**
**व्रणकृदशुभः षष्ठे लग्नात् तनौ भसमाश्रिते**
**तिलकमषकृद् दृष्टः सौम्यैर्युतश्च सलक्ष्मवान् ॥ २६ ॥**

इति । यस्मिन् गात्रे त्रयः सबुधाः ग्रहाः समनुपतिताः शुभेषु

---

१. 'हयु' ग. पाठः. २. 'णं' ख. पाठः. ३. 'भग्रहयु' ग. पाठः. ४. 'क्ते वा द' ख. पाठः. ५. 'च', ६. 'भग्रहयोगवीक्षणं स' ग. पाठः. ७. 'र्थः । स्व', ८. 'क्तेषु', ९. 'वती', १०. 'व्यम् । स' ख. ग. पाठः.

अशुभेषु वा, तस्य अवाप्तिर्नियमाद् भवति इत्यन्वयः । सबुधास्त्रयः बुधेन सह चत्वारः । तेषु शुभेष्वशुभेषु वा ते शुभा वा अशुभा वा मिश्रा वा भवन्त्वित्यर्थः । तस्यावाप्तिः तेषां चतुर्णां मध्ये यो बलवान् सोऽशुभश्चेद् व्रणस्य शुभश्चेद् भूषणस्य उभौ शुभाशुभौ बलिनौ चेल्लक्ष्मणः अवाप्तिः तत्कारकग्रहस्य दशाकाले प्राप्तिः नियमाद् भवति असंशयेन भवतीत्यर्थः । समनुपतिता इत्यत्र विशेष उच्यते — यस्य जन्मन्येकत्र सबुधास्त्रयस्ताराग्रहा भवन्ति (य?त)स्य नियमात् पतितत्वं द्रष्टव्यम् । सूर्यचन्द्रसहितावन्यौ चेद् रोगादिना पतितत्वम् । लग्नात् षष्ठे अशुभः भसमाश्रिते तनौ व्रणकृद् भवतीत्यन्वयः । भसमाश्रिते तनौ 'कालाङ्गानि वराङ्गमि'त्याद्युक्तेन प्रकारेण षष्ठराशिसमाश्रितो यः शरीरप्रदेशः तत्र व्रणकृत् । लग्नात् षष्ठत्वकल्पना मेषाद् वराङ्गादिकल्पना चात्र विवक्ष्यते । सौम्यैर्दृष्टस्तिलकमषकृत् । यद्यसावशुभः शुभदृष्टः तिलकमषकृत् न व्रणकृत् । तिलकमषकृत् तिलकः पिप्लुः कृष्णोन्नतबिन्दुः मषो रोम च तौ करोतीति तिलकमषकृत् । सौम्यैर्युतश्च सलक्ष्मवान् । यद्यसावशुभः सौम्यैर्युतस्तदा सपिप्लुः लक्ष्मवान् । लक्ष्मवान् लक्ष्मणा सहितः, वैवर्ण्यसहित इत्यर्थः । सौम्यैर्दृष्टस्तिलकमषकृत् सौम्यैर्युतस्तिलकमषकृद् लक्ष्मवांश्च भवतीत्युक्तं भवति ॥ २६ ॥

इति होराविवरणे जन्माख्यः पञ्चमोऽध्यायः ॥

## अथ षष्ठोऽध्यायः ।

अथ जननलग्नग्रहस्थितिवशेन शिशुशरीरगतव्रणादिलक्षणकथने "स्वर्क्षांशस्थिरसंयुते च सहजः स्यादन्यथागन्तुकः" इत्यत्र सहजस्यैव तत्कालविस्मापनत्वम् । आगन्तुकस्य तु कालान्तरभावित्वात् सद्योमरणलक्षणसम्भवे सति निर्देशो ह्यस्य एव स्यादितीदानीम् अस्मिन्नध्याये सद्योमरणलक्षणानि निर्दिश्यन्ते —

**सन्ध्यायां हिमदीधितिहोरा**
**पापैर्भान्तगतैर्निधनाय ।**

१. 'यः । बुधे' ख. पाठः. २. 'ते अशुभा वा शुभा वा' क. ग. पाठः. ३. 'षां म' ख. पाठः. ४. 'र्थः । लग्ना' ख ग. पाठः. ५. 'शितो' ग. पाठः. ६. 'शः । ल', ७. 'त्वं मे' ख. ग. पाठः. ८. 'ङ्गनिरूपणं चा', ९. 'क्षितम् । स सौ' ग. पाठः. १०. 'ष्टो युतश्च तिलकमषकृत् ति', ११. 'त् । सलक्ष्मवान् सपिप्लुः लक्ष्मणा' ख. ग. पाठः. १२. 'ति होराशास्त्रे प' क., 'र्दि प' ख., 'बृहज्जातकवि' ग. पाठः.

**प्रत्येकं शशिपापसमेतैः**
**केन्द्रैर्वा स विनाशमुपैति ॥ १ ॥**

इति। हिमदीधितिहोरा सन्ध्यायां भान्तगतैः पापैः निधनाय भवति इत्यन्वयः। ओजराशेरूर्ध्वार्धे युग्मराशेरधोर्धे चात्र हिमदीधितिहोरा। सन्ध्यायां, द्वे सन्ध्ये प्रातःसन्ध्या सायंसन्ध्या च तथाचोक्तं संहितायाम्—

"अर्धास्तमयादूर्ध्वं व्यक्तीभूता न तारका[1] यावत्।
तावत् सायंसन्ध्या प्रातःसन्ध्यापि ताराणाम् ॥
तेजःपरिहाणिमुखाद् भानोरर्धोदयो यावत्।"

इत्युक्तलक्षणायां सन्ध्यायाम्। भान्तगतैः यत्रतत्र नवमांशान्त्यगतैः पापैः। पापेषु यत्रतत्र राश्यन्त्यगतेषु सन्ध्याकाले चन्द्रहोरायां जन्म चेत् सद्योमरणं स्यादित्युक्तं भवति। प्रत्येकमित्यन्यो योगः। केन्द्रैः प्रत्येकं शशिपापसमेतैर्वा स विनाशमुपैति इत्यन्वयः। शशिपापसमेतैः शशिना पापैः सूर्यभौममन्दैश्च[2] संयुक्तैः केन्द्रैः स जातः शिशुर्विनाशमुपैति[3] ॥ १ ॥

पुनरप्यरिष्टयोगमिन्द्रवज्रेणाह—

**चक्रस्य पूर्वेतरभागगेषु**
**क्रूरेषु सौम्येषु च कीटलग्ने।**
**क्षिप्रं विनाशं समुपैति जातः**
**पापैर्विलग्नास्तमयाभितश्च ॥ २ ॥**

इति। कीटलग्ने क्रूरेषु सौम्येषु च चक्रस्य पूर्वेतरभागगेषु जातः क्षिप्रं विनाशं समुपैति इत्यन्वयः। वृश्चिके लग्ने सति क्रूरेषु चक्रस्य पूर्वभागगेषु सौम्येषु इतरभागगेषु सत्सु। वृश्चिकार्धे उदयति धनुर्मकरकुम्भार्धाः तथा तुलाकन्यासिंहार्धाश्च चक्रस्य पूर्वभागः। कुम्भस्योत्तरार्धादारभ्य यावत्सिंहपूर्वार्धमितरभागः[4]। अत्र कीटशब्देन वृश्चिककर्कटावुच्येते। यद्यपि पूर्वम् "अह्नि निशि च प्राप्ते च सन्ध्याद्वय"

१. 'वितारेण ॥' ख. पाठः. २. 'श्चन्द्रसं', ३. 'ति ॥ १ ॥ च', ४. 'गः; पापै' ख. ग. पाठः.

इत्यत्र जलजयोर्मकरमीनयोः कीटत्वमभ्युपगतं, तथापि न तयोः सन्ध्यृक्षत्वान्नाभ्युपगम्यते । तथाच बादरायणः—

"पूर्वापरभागगतैरशुभैरलिकर्कटे लग्ने ।
जातस्य शिशोर्मरणं सद्यः कथयति यवनेन्द्रः ॥"

इति । पापैरित्यादि योगान्तरम् । विलग्नास्तमयाभितः पापैश्च विनाशमुपैति इत्यन्वयः । विलग्नस्य[1] च अस्तमयस्य च अभितः लग्नराशेरस्तमयराशेश्चोभयतः । धनव्ययोरष्टमषष्ठयोश्च स्थितैरिति यावत् । अभित इति "पर्यभिभ्यां सर्वोभयार्थेषु तसिर्वक्तव्यः" इत्यभिशब्दादुभयार्थे तसिप्रत्ययः । उदयलग्नास्तलग्नयोरुभयपापित्वे सति जातस्य सद्यो मरणं स्यादित्यर्थः । अस्य योगस्य शुभयोगेक्षणाभ्यामपवादो भवतीति द्रष्टव्यं, यतोऽत्रैव योगे "निधनारिधनव्ययस्थिता" इत्यादिश्लोकेन नेत्रहानिं वक्ष्यति । अन्ये पुनरभितःशब्द आभिमुख्ये वर्तत इति वर्णयन्ति । तत्र लग्नाद् यो द्वितीयराशौ ग्रहो व्यवस्थितः, स उदयमभिलषतीति लग्नस्याभिमुख्ये भवति । यश्च लग्नादष्टमराशौ भवति, सोऽस्तमयमभिलषति सप्तमराशावभिमुखो भवति । तेनैतज्ज्ञातं—लग्नाद् द्वितीयाष्टमगतैः सर्वैः पापैर्जातो म्रियते । अन्ये पुनरभितःशब्द आभिमुख्य एवं वदन्ति । यस्माद् यवनेश्वरः—"पापेषु लग्नाभिमुखेषु सर्वेष्वत्रा(ना?)प्तवीर्येष्वशुभर्क्षगे(ष्वि)"ति । किन्तु यो लग्नाद् द्वादशस्थाने स्थितः स लग्नमभिलषति लग्नाभिमुखो भवति । षष्ठे यश्च स्थितः सोऽस्ताभिमुखो भवति, यस्माद् ग्रहाणां प्राङ्मुखी गतिः । तत्र पूर्वाभिमुखं व्रजतो लग्नद्वितीयस्थस्याभिमुख्यं न सम्भवति । नचाष्टमस्थस्यास्ताभिमुख्यं भवति । तेनैतज्जातं—लग्नद्वादशषष्ठाश्रितैः पापैर्यस्य जन्म भवति, स म्रियत इति । गर्गः सर्वाण्येव व्याख्यानान्यभिमतानीति । तथाच (त ? क)क्ष्यः(?)—

"अरिव्ययगतैः पापैर्यदि वा धनमृत्युगैः ।
लग्ने वा पापमध्यस्थे द्यूने वा मृत्युमाप्नुयात्" ॥

इति ॥ २ ॥

१. 'स्यास्त' ग. पाठः. २. 'वेदिति', ३. 'ति ॥ २ ॥' ख. ग. पाठः.

**भौमे विलग्ने शुभदैरदृष्टे**
**षष्ठेऽष्टमे वार्कसुतेन युक्ते ।**
**तौ चार्कसंस्थौ शुभदृष्टिहीनौ**
**जातस्य सद्यः कुरुतः प्रणाशम् ॥ ३ ॥**

शुभदैः अदृष्टे भौमे विलग्ने षष्ठे अष्टमे वा अर्कसुतेन युक्ते सति जातः क्षिप्रं विनाशम् उपैतीति सम्बन्धः। तौ अर्कसंस्थौ शुभदृष्टिहीनौ च जातस्य सद्यः प्रणाशं कुरुतः इत्यन्वयः । भौमार्कसुतौ अर्कसंस्थौ अर्कयुक्तौ मूढाविति यावत् । चशब्देन विलग्न इत्यनुकृष्यते । अर्थाल्लग्नस्थौ कुजार्कसुतौ मूढौ शुभदृष्टिहीनौ चेत् सद्योमरणं कुरुतः । अर्कसंस्थावित्युक्त्या द्वादशस्थावपीति द्योत्यते । द्वादशस्थौ लग्नाभिमुखावित्यर्थः । तथाचोक्तं यवनेश्वरेण —

"पापेषु लग्नाभिमुखेषु नश्येद्वाप्तवीर्येष्वशुभर्क्षगेषु ।"

इति ॥ ३ ॥

**पापावुदयास्तगतौ क्रूरेण युतश्च शशी ।**
**दृष्टस्तु शुभैर्न यदा मृत्युस्तु भवेदचिरात् ॥ ४ ॥**

पापौ उदयास्तगतौ क्रूरेण युतः शशी शुभैर्न दृष्टस्तु यदा तदा तु अचिरान्मृत्युर्भवेदित्यन्वयः । एकः पापग्रहः उदये, एकोऽस्तमये च, एकश्चन्द्रेण युतश्च[1], स चन्द्रः शुभग्रहैरदृष्टश्च यदा भवति तदापि अचिरान्मरणमित्यर्थः[2] । एवं लग्नादारभ्य द्वितीयादिभावेषु यत्र यत्रावस्थितौ मन्दमाहेयौ अन्योन्यं पश्य(ति? तः) चेत् तत्तद्भाववशान्नित्यं दुःखदौ भवतः ॥ ४ ॥

**क्रूरसंयुतः शशी स्मरान्त्यमृत्युलग्नगः ।**
**कण्टकाद् बहिः शुभैरनीक्षितश्च मृत्युदः ॥ ५ ॥**

शशी स्मरान्त्यमृत्युलग्नगः क्रूरसंयुतः मृत्युद इत्यन्वयः । उक्तेषु चतुर्षु स्थानेषु स्थितः शशी क्रूरसंयुतः, क्रूरशब्देन कुजोऽत्र गृह्यते। संयुत इत्यत्र उपसर्गेण समकलत्वं च गृह्यते । अपवादार्थं विशेषणमाह — कण्टकाद् बहिः शुभैरनीक्षित इति । कण्टकाद् बहिः स्थितैः शुभग्रहैरदृष्टः। अत्र अनीक्षित इति चन्द्रविशेषणोक्त्या कण्टक-

---

१. 'श्च', २. 'र्थः ॥ ४ ॥' ख. ग. पाठः.

शब्देन लग्नकेन्द्रं गृह्यत इत्यवगम्यते । ततो लग्नस्य[1] शुभकेन्द्रत्वं चन्द्रस्य शुभदृष्टिश्चास्य योगस्यापवाद इति सिद्धं भवति । तथाच सारावल्यां —

"व्ययाष्ट*सप्तोदयगे शशाङ्के पापैः समेते शुभदृष्टिहीने ।
केन्द्रेषु सौम्यग्रहवर्जितेषु§ जातस्य सद्यः कुरुते प्रणाशम् ॥"

इति ॥ ५ ॥

**क्षीणे हिमगौ व्ययगे पापैरु(भ ? द)याष्टमगैः ।**
**केन्द्रेषु शुभाश्च न चेत् क्षिप्रं निधनं प्रवदेत् ॥ ६ ॥**

हिमगौ चन्द्रे क्षीणे परिक्षीयमाणकरे (लग्ना)द् व्ययगे द्वादशस्थे पापैः क्रूरग्रहैरु(भ?द)याष्टमगैः केन्द्रेषु सौम्यग्रहो यदि न च भवति, एतैः पापग्रहैर्मृत्युमिच्छन्त्याचार्याः । यस्माद् भगवान् गार्गिः —

"क्षीणे (च) चन्द्रे व्ययगे पापैरष्टमलग्नगैः ।
केन्द्रबाह्यस्थितैः सौम्यैर्जातस्य निधनं वदेत् ॥"

इति ॥ ६ ॥

**शशिन्यरिविनाशगे निधनमाशु पापेक्षिते**
**शुभैरथ समाष्टकं दलमतश्च मिश्रेक्षिते ।**
**असद्भिरवलोकिते बलिभिरत्र मासं शुभे**
**कलत्रसहिते च पापविजिते विलग्नाधिपे ॥ ७ ॥**

शशिनि अरिविनाशगे पापेक्षिते आशु निधनं भवति इत्यन्वयः । चन्द्रे[2] शत्रुस्थानमष्टमस्थानं वा गते पापग्रहेण दृष्टे सति आशु निधनं भवति । अथ शुभैरीक्षिते समाष्टकं, जीवितकाल इति शेषः[3] । मिश्रेक्षिते च अतो दलमित्यन्वयः । मिश्रेक्षिते पापैः शुभैश्च मिश्रैः ईक्षिते सति अतः दलं समाष्टकस्य दलं समानां चतुष्टयमित्यर्थः । अत्र शुभे बलिभिरसद्भिः अवलोकिते मासं जीवितकालः । अत्र शत्रु-

---

१. 'ति ॥ ५ ॥ शशि' ख. ग. पाठः. २. 'न्द्रे पा', ३. 'श्रैः शत्रुस्थानमष्टमस्थानं वा गते निरीक्षि' ग. पाठः.

---

* 'ध्वषष्ठोदय', § 'षु प्राणैर्वियोगं व्रजति प्रजातः ।' इति मुद्रितसारावलीपाठः.

स्थाने मृत्युस्थाने च स्थिते शुभे गुरुबुधशुक्राणामन्यतमे बलिभिरुच्च-वक्रादिबलयुक्तैरसद्भिर्ग्रहैरवलोकिते मासमात्रमायुः । अन्यथापि यो-जना—अत्र योगे चन्द्रस्य रिपुविनाशस्थितौ शुभे इति शोभने, शुभ-ग्रहयोगाद् इति यावत् । अयमर्थः—अरिविनाशस्थिते चन्द्रे शुभयुक्ते-ऽपि अशुभैर्दृष्टे सति मासमात्रमायुः । अत एव रिपुविनाशस्थे चन्द्रे-शुभग्रहेण युक्ते शुभग्रहैर्दृष्टे सति अरिष्टाभाव इति सिध्यति । (विलग्ना-धिपे पापविजिते कलत्रसहिते च ? ) । अत्र चन्द्रमाः षष्ठाष्टमस्थानस्थः सौम्यक्षेत्रगतो वा भवति, अथवा पापक्षेत्रगतः सौम्यग्रहयुक्तो वा भवति तदा न मरणप्रदः । यस्माद् यवनेश्वरः —

"लग्नाच्छशी नैधनगोऽशुभर्क्षे षष्ठे तु वा पापनिरीक्षितश्च ।
सर्वायुराहन्ति शुभैरमिश्रे तदीक्षितेऽब्दाष्टकपर्ययेण ॥"

इति । यस्य कृष्णपक्षे दिवा जन्म शुक्लपक्षे रात्रौ, लग्नात् षष्ठाष्टमगः शशी शुभाशुभदृष्टोऽपि भवति, तस्य न मरणम् । यस्मान्माण्डव्यः —

"पक्षे सिते भवति जन्म यदि क्षपायां
कृष्णेऽथवाहनि शुभाशुभदृश्यमानः ।
तच्चन्द्रमा रिपुविनाशगतोऽपि यत्ना-
दापत्सु रक्षति पितेव शिशुं न हन्ति ॥"

इति । विलग्नाधिपे पापविजिते कलत्रसहिते च मासमात्रमायुरित्यन्यो योगः । पापविजिते पापेन विजिते पापग्रहेण सह युद्धे पराजिते, ल-ग्नाधिपे शुभे अशुभे वा सप्तमस्थे सतीत्यर्थः । युद्धस्य समकक्षत्वे सम्भवात् सप्तमस्थितलग्नाधिपपापयोः पापग्रहः लग्नाधिपं परिभूय लग्नजातं मासमात्रेण व्यापादयतीत्युक्तं भवति ॥ ७ ॥

अथारिष्टान्तरं मन्दाक्रान्तयाह —

**लग्ने क्षीणे शशिनि निधनं रन्ध्रकेन्द्रेषु पापैः**
**पापान्तःस्थे निधनहिबुकद्यूनयुक्ते च चन्द्रे ।**

---

१. 'गवशाद्', २. 'च मास' ख. ग. पाठः. ३. 'ब' क. ख. पाठः. ४. 'ति ॥ ल' ख. ग. पाठः.

**एवं लग्ने भवति मदनच्छिद्रसंस्थे[1] च पापे[2]**
**मात्रा सार्धं यदि न च शुभैर्वीक्षितः शक्तिमद्भिः[3] ॥ ८ ॥**

इति । क्षीणे शशिनि लग्ने पापैः रन्ध्रकेन्द्रेषु स्थितैः निधनं भवतीत्यन्वयः । क्षीणचन्द्रे लग्नस्थे सति पापग्रहैरष्टमे वा केन्द्रेषु वा स्थितैः सद्योमरणं भवतीत्यर्थः । योगान्तरमाह — चन्द्रे पापान्तःस्थे निधनहिबुकद्यूनयुक्ते च । पापान्तःस्थे पापयोरुभयोर्मध्यस्थे चन्द्रे निधनस्थिते वा चतुर्थस्थिते वा सप्तमस्थिते वा च निधनं भवति । एवमिति । चन्द्रे एवं लग्ने सति मदनच्छिद्रसंस्थे[4] पापे मात्रा सार्धं निधनं भवति । चन्द्रे पापान्तःस्थे लग्नस्थिते सति सप्तमे वाष्टमे वा स्थिते पापग्रहे मात्रा सार्धं मरणं भवति । स चन्द्रः शक्तिमद्भिः शुभैर्न वीक्षितो यदि तदैव निधनमिति सम्बन्धः । चशब्दस्त्वर्थे । स तु चन्द्रः लग्नस्थितश्चन्द्रः । चन्द्रस्य कर्तृत्वनिर्देशाद् बलवच्छुभनिरीक्षितत्वे सति मातृमरणाभावोऽत्र[6] द्योत्यते ॥ ८ ॥

अथारिष्टयोगान्तरमिन्द्रवज्रेणाह —

**राश्यन्तगे सद्भिरनीक्ष्यमाणे**
**चन्द्रे त्रिकोणोपगतैश्च शेषैः ।**
**प्राणैः प्रयात्याशु शिशुर्वियोग-**
**मस्ते च पापैस्तुहिनांशुलग्ने ॥ ९ ॥**

इति । चन्द्रे राश्यन्तगे सद्भिः अनीक्ष्यमाणे शेषैः त्रिकोणोपगतैः शिशुः आशु प्राणैः वियोगं प्रयातीत्यन्वयः । चन्द्रे यस्यकस्यचिद् राशेरवसाने स्थिते शुभग्रहैरदृश्यमाने सति शेषैः चन्द्रादितरैः शुभैरशुभैश्च लग्नत्रिकोणस्थितैः शिशुराशु प्राणैर्वियुज्यते इत्यर्थः[8] । त्रिकोणोपगतैश्च पापैरिति वा पाठः । योगान्तरमाह — तुहिनांशुलग्ने अस्ते पापैश्च शिशुः आशु प्राणैर्वियोगं प्रयाति इत्यन्वयः । चन्द्रे उदयस्थिते सप्तमस्थैः पापैरर्ककुजमन्दैरिति यावत् ॥ ९ ॥

---

१. 'स्थैश्च पा', २. 'पैर्मात्रा', ३. 'भ्दः', ४. 'स्थैः पापैर्मात्रा', ५. 'भ्दः', ६. 'वो द्यो' ग. पाठः. ७. 'ते ॥ रा' ख. ग. पाठः. ८. 'र्थः । यो' ख., 'र्थः । तु' ग. पाठः ९. 'स्थितैः पा' ख. पाठः.

अथारिष्टान्तराणि हरिण्याह —

**अशुभसहिते ग्रस्ते चन्द्रे कुजे निधनाश्रिते**
**जननिसुतयोर्मृत्युर्लग्ने रवौ तु स शस्त्रजः ।**
**उदयति रवौ शीतांशौ वा त्रिकोणविनाशगै-**
**र्निधनमशुभैर्वीर्योपेतैः शुभैरयुतेक्षिते ॥ १० ॥**

इति । ग्रस्ते चन्द्रे अशुभसहिते लग्ने कुजे निधनाश्रिते जननिसुतयोः मृत्युः इत्यन्वयः । ग्रस्ते चन्द्रे राहुणा गृहीते पूर्णेन्दौ पापे[1]सहिते लग्नस्थिते सति कुजे निधनाश्रिते जननिसुतयोर्द्वयोरपि मृत्युः स्यात् । योगान्तरमाह — रवौ तु स शस्त्रज इति । सूर्ये ग्रस्ते अशुभसहिते लग्ने[2]स्थिते सति कुजे निधनाश्रिते सति सः जननिसुतयोः मृत्युः शस्त्रजः शस्त्रनिमित्तो भवतीति सम्बन्धः । सोमग्रहणे राहुकेत्वन्यतरसंयोगे सत्यपि सूर्यग्रहणे[3] च राहुकेत्वन्यतरस्य क्षीणचन्द्रस्य च संयोगे सत्यपि अशुभसहित[4] इत्युक्त्या कुजस्य निधनाश्रितत्वोक्त्या च अशुभो मन्द इत्युक्तं भवति । अत्र सोमग्रहणेऽशुभः शनैश्चर एव । सूर्यग्रहणे शनैश्चरो बुधश्च इति केचित् । मन्दस्य अशुभशब्देन निर्देशः इष्टकष्टफलनिर्णयप्रकारेण शुभाशुभनिरूपणं कर्तव्यमिति द्योतयितुम् । उत्तरार्धेनान्यो योगः — रवौ शीतांशौ वा उदयति त्रिकोणविनाशगैः पापैः निधनं भवति इत्यन्वयः । अस्य योगस्यापवादार्थं विशेषणं वीर्योपेतैः शुभै[5]रयुतेक्षिते इति । योगकर्तरि चन्द्रेऽर्के वा बलिभिः शुभैरयुक्ते अदृष्टे च सत्येव शिशोर्मरणं वक्तव्यमित्यर्थः ॥ १० ॥

अथारिष्टान्तरमपरव(ज्रे ? क्रे)णाह —

**असितरविशशाङ्कभूमिजै-**
**र्व्ययनवमोदयनैधनाश्रितैः[6] ।**
**भवति मरणमाशु देहिनां**
**यदि बलिना गुरुणा न वीक्षिताः ॥ ११ ॥**

---

१ 'पेन स' क. ग. पाठः. २. 'ग्ने' ग. पाठः. ३. 'णे रा' ख. पाठः. ४. 'ति । मन्द' ख. ग. पाठः. ५. 'लवाद्भिः शु', ६. 'नस्थितैः ।' क. ग. पाठः.

इति । व्ययनवमोदय*नैधनाश्रितैरसितरविशशाङ्कभूमिजैः देहिनामाशु मरणं भवतीत्यन्वयः । बलिना गुरुणा न वीक्षिता यदि । बलवता गुरुणा योगकर्तारो दृष्टाश्चेन्मरणं न भवतीत्यर्थः । अर्थात् पञ्चमस्थेन गुरुणा इति सिध्यति । पञ्चमस्थस्य लग्ननवमयोस्त्रिकोणदृष्टिः व्यये चतुरश्रदृष्टिः धने दशमदृष्टिश्च सम्भवति । अत्र नैधनशब्देनाष्टममुच्यते । तत्रापि गुरोश्चतुरश्रदृष्टिः सम्भवति इति केचित् । अर्थादेव बलहीनगुरुणा वीक्षिताश्चेन्मरणं प्रवदेत्, किन्तु आशु न प्रवदेदिति ॥ ११ ॥

अथारिष्टान्तरं पुष्पिताग्रयाह—

**सुतमदनवमान्त्यलग्नरन्ध्रे-**
**ष्वशुभयुतो मरणाय शीतरश्मिः ।**
**भृगुसुतशशिपुत्रदेवपूज्यै-**
**र्यदि बलिभिर्न युतोऽवलोकितो वा ॥ १२ ॥**

इति । सुतमदनवमान्त्यलग्नरन्ध्रेषु अशुभयुतः शीतरश्मिः मरणाय भवति इत्यन्वयः । उक्तेषु षट्सु स्थानेषु स्थितः पापयुक्तश्चन्द्रः सद्योमरणाय भवतीत्यर्थः । बलिभिः भृगुसुतशशिपुत्रदेवपूज्यैः युतः अवलोकितो वा न यदि इत्यन्वयः । शुक्रबुधगुरूणां योगे वीक्षणे वा सति चन्द्रो न[3] मरणं करोतीत्यर्थः । अपिच अस्यापवादस्य निजोक्तानां सर्वेषामरिष्टयोगानां पश्चादभिधानात् सर्वारिष्टयोगनाशकरत्वं द्रष्टव्यम् ॥ १२ ॥

अथोक्तानामनुक्तकालविशेषाणां योगानां सम्भवे कस्मिन् काले योगफलं भवतीति संशयस्य[5] व्युदासाय तत्कालं[6] भ्रमरविलसितेनाह—

**योगे स्थानं गतवति बलिन-**
**श्चन्द्रे स्वं वा तनुगृहमथवा ।**
**पापैर्दृष्टे बलवति मरणं**
**वर्षस्यान्तः किल मुनिगदितम् ॥ १३ ॥**

---

१. 'नस्थितै' क. ग. पाठः. २. 'ति ॥ ११ ॥ सु', ३. 'मरणाय न भवती' ख. ग. पाठः. ४. 'गानां नाशकर्तृत्वं' ख. पाठः. ५. 'यन्वु', ६. 'लं निर्दिशति—' ख. ग. पाठः.

---

* 'अत्र द्वितीयभावार्थकमिदम् ।

इति। बलवति चन्द्रे योगे बलिनः स्थानं गतवति पापैर्दृष्टे सति मुनिगदितं मरणं वर्षस्यान्तः भवति किल इत्यन्वयः। वर्षस्यान्तः वर्षमध्ये। चन्द्रस्य त्रयोदश पर्यया भवन्ति। तेषु कुत्र पर्यये कुत्र राशौ स्थिते शशिनि फलानुभव इति ज्ञातुमाह—योगे बलिनः स्थानं गतवति पापदृष्ट इति। योगे सद्योमरणयोगे। बलिनः योगकर्तॄणां मध्ये बलाधिकस्य। स्थानं तदधिष्ठितराशिम्। गतवति प्राप्ते सति। अथवा स्वं स्थानं जन्मचन्द्रराशिम्। अथवा तनुगृहं जन्मलग्नराशिम्। एषु त्रिषु एकं राशिं गतवति सति। तत्र विशेषनिर्देशायाह—बलवतीति। यत्र स्थितश्चन्द्रो बलवान् भवति। पुनरपि विशेषमाह—पापैर्दृष्ट इति। यत्र स्थितश्चन्द्रो बलवान् पापैर्दृष्टश्च भवेत्, तत्र मरणम्। त्रयोदशसु वर्षान्तर्गतपर्ययेषु यत्र पर्यये उक्तराशिषु स्थितः बलवान् पापदृष्टश्च भवेत्, तत्र मरणमादेश्यम्। एवं सम्भवेऽपि चन्द्रस्य शुभयोगः शुभदृष्टिर्वा यदि स्यात्, तर्हि पुनरन्यस्मिन् पर्यये तादृशे चन्द्रे निर्देश्यम्। तस्माद् वर्षस्यान्तरेकोनचत्वारिंशत्(सु?)कालविशेषेषु यस्मिन् काले चन्द्रस्य बलवत्त्वं पापदृष्टिश्च शुभयोगेक्षणाभावश्च तत्र मरणमादेश्यमित्युक्तं भवति। अन्येषु योगेष्वपि योगकारकर्क्षजन्मर्क्षजन्मलग्नवशादेवं चन्द्रेण शुभाशुभकालो वक्तव्य इति द्रष्टव्यम्॥ १३॥

इति होराविवरणे सद्योमरणाध्यायः षष्ठः॥

---

## अथ सप्तमोऽध्यायः।

अथ सद्योमरणाभावेन जीवने ज्ञाते कियन्तं कालं जीवतीति ज्ञातुमायुर्दायविधानमुपदिशति सप्तमाध्यायेन। आयुर्दायस्त्रिविधः— पिण्डदशा जीवशर्मीयदशा अंशकदशा चेति। तत्र प्रथमं पिण्डदशायां ग्रहवत्सरान् पुष्पिताग्रयाह—

**मययवनमणित्थशक्तिपूर्वै-**
**र्दिवसकरादिषु वत्सराः प्रदिष्टाः।**
**नवतिथिविषयाश्विभूतरुद्रा**
**दश सहिता दशभिः स्वतुङ्गभेषु॥ १॥**

---

१. 'म्। तस्मात् त्र' ग. पाठः. २. 'न्मल', ३. 'भसम्भवका', ४. 'रा-नाह—' ख. ग. पाठः.

इति । मययवनमणित्थशक्तिपूर्वैः दिवसकरादिषु स्वतुङ्गभेषु एते वत्सराः प्रदिष्टाः । मयादयो होराचार्याः । शक्तिपूर्वः शक्तिः पूर्वो यस्य सः शक्तिपूर्वः । पराशर इत्यर्थः । तैर्दिवसकरादिषु स्वोच्चराशिस्थितेषु एते वत्सरा उपदिष्टाः । दशभिः सहिता नवतिथिविषयाश्विभूतरुद्राः दश दिवसकरादीनां क्रमेणोपदिष्टाः । तत्र दिवसकरस्य दशसहिता नव एकोनविंशतिः । चन्द्रस्य दशसहितास्तिथयः पञ्चविंशतिरिति यावत् । कुजस्य पञ्चदश । बुधस्य द्वादश । गुरोः पञ्चदश । शुक्रस्यैकविंशतिः । शनैश्चरस्य विंशतिः । एवं ग्रहाणां स्वस्वपरमोच्चस्थितानाम् आयुर्दायवत्सरा होराचार्यैरुपदिष्टाः ॥ १ ॥

एतेषां नीचहरणं[1] मन्दाक्रान्तयाह—

**नीचेऽतोऽर्धं ह्रसति हि ततश्चान्तरस्थेऽनुपातो**
**होरा त्वंशप्रतिममपरे राशितुल्यं वदन्ति ।**
**हित्वा वक्रं रिपुगृहगतैर्हीयते स्वत्रिभागः**
**सूर्योच्छिन्नद्युतिषु च दलं प्रोज्झ्य शुक्रार्कपुत्रौ ॥ २ ॥**

इति । नीचे अतः अर्धं ह्रसति इत्यन्वयः । परमनीचस्थितानामुक्तेभ्यो वत्सरेभ्योऽर्धं हीयते[2] । ततश्च अन्तरस्थे ग्रहे अनुपात इति सम्बन्धः । तत उच्चनीचयोरन्तरे स्थितस्य वत्सरज्ञानाय अनुपातः, त्रैराशिकं कर्तव्यमित्यर्थः । अत्रेयं प्रक्रिया — ग्रहाणां तात्कालिकस्फुटं विन्यस्य तस्मात् स्वं स्वं सावयवमुच्चं विशोधयेत् । शिष्टं षड्भ्यूनं चेन्मण्डलाद् विशोध्य राशिभागलिप्ताः स्वेन स्वेन वत्सरप्रमाणेन गुणयेत् । मासा दिवसा नाडिकाश्च जायन्ते । तत्र नाडिकाः[3] षष्टिर्दिवसः, त्रिंशद्दिवसा मासः, द्वादशमासाः वत्सरः[4] इति प्रमाणक्रमेण उपर्युपर्यारोपिता वत्सरमासदिवसनाडिकात्मिका तस्य तस्य ग्रहस्य दशा भवति[5] । तथाच सारावल्यां—

"स्वोच्चशुद्धा ग्रहाः शोध्याः षड्भ्यूना भमण्डलात् ।
स्वपिण्डगुणिता भक्ता *भास्करैर्वत्सरादिकम् ॥"

---

१. 'णमाह—' ख. ग. पाठः. २. 'र' ख. पाठः. ३. 'काष' ग. पाठः. ४. 'स्म' ख. पाठः. ५. 'तीति । ग्रहाणां' ख. ग. पाठः.

---

* 'राशिमानेन वत्सराः ॥' इति मुद्रितसारावलीपाठः. ।

इति । ग्रहाणां दशानयनमुक्त्वा लग्नायुराह —होरा तु अंशप्रतिमं, होरा लग्नं, तत्तु अंशप्रतिमं नवमांशतुल्यम्, आयुर्ददातीति शेषः[1] । यावन्तो नवांशका लग्ने भुक्ताः, तावन्त्येव वर्षाणि ददातीत्यर्थः । अपरे राशितुल्यं वदन्ति केचिद् राशितुल्यं लग्नस्य राशिसंख्याप्रमाणमायुरिति वदन्ति[2] । तथाच मणित्थः—

"लग्नर्क्षतुल्यं वर्षाणि मासाद्यमनुपाततः ।
लग्नायुर्दायमिच्छन्ति होराशास्त्रविशारदाः ॥"

इति । पक्षद्वयोक्त्या[3] "बलयोगात् फलमंशकर्क्षयोरि"ति बलवशेन लग्नायुरानयनमित्युक्तं भवति । शत्रुक्षेत्रहरणमाह —वक्रं हित्वा रिपुगृहगतैः स्वत्रिभागः हीयते इत्यन्वयः । भौमं वर्जयित्वा शिष्टैर्ग्रहैः शत्रुक्षेत्रस्थितैः स्वत्रिभागः स्वायुर्दायस्य त्रिभागः तृतीयोऽशः हीयते इत्यर्थः । मूढहरणमाह —सूर्योच्छिन्नद्युतिषु च दलं हीयते इत्यन्वयः । शुक्रम् अर्कपुत्र च प्रोज्झ्य वर्जयित्वा शिष्टेषु ग्रहेषु सूर्येणोच्छिन्नरश्मिषु सत्सु स्वायुषः दलम् अर्धं हीयते इत्यर्थः[4] । हित्वा वक्रमित्यत्र केचिदेवमिच्छन्ति । यथा —वक्र(ग)तं ग्रहं हित्वान्यः शत्रुक्षेत्रगतस्त्रिभागमपहरतीति । एतदसत् । यस्माद् बादरायणः —

"भूम्याः पुत्रं वर्जयित्वारिभस्था
हन्युः स्वात् * स्वात् स्वायुषस्ते त्रिभागम् ।
अस्तं याताः सर्व एवार्धहानिं
कुर्युर्हित्वा दैत्यपूज्यार्कपुत्रौ ॥"

इति ॥ २ ॥

दृश्यार्धहरणं[5] §चक्रवाकेनाह —

**सर्वार्धत्रिचरणपञ्चषष्ठभागाः**
**क्षीयन्ते व्ययभवनादसत्सु वामम् ।**
**सत्स्वर्धं ह्रसति ततस्त्वथैकगाना-**
**मेकोऽशं हरति बलीत्यथाह सत्यः ॥ ३ ॥**

---

१. 'षः । अ', २. ,न्ति । पक्ष' ख. ग. पाठः. ३. 'मुक्तं' क. पाठः. ४. 'र्थः ॥ २ ॥', ५. 'णमाह—' ख. ग. पाठः.

---

* स्वादायुष इति पाठः स्यात् । § वृत्तरत्नाकररीत्या प्रहर्षिणी ।

इति। असत्सु व्ययभवनाद् वामं सर्वार्धत्रिचरणपञ्चषष्ठभागाः क्षीयन्ते इत्यन्वयः । असद्ग्रहेषु क्रूरग्रहेषु व्ययभवनादारभ्य वामं प्रतिलोमं स्थितेषु यथाक्रमम् उक्तभागाः क्षीयन्ते। अयमर्थः—पापग्रहे व्ययस्थे तस्यायुः सर्वं क्षीयते। एकादशभावस्थे आयुषोऽर्धं क्षीयते । दशमभावस्थे तदायुषस्त्रिभागः क्षीयते । नवमभावस्थे चतुर्थांशः क्षीयते। अष्टमभावस्थे पञ्चमांशः क्षीयते। सप्तमभावस्थेऽपि दृश्यार्धस्थे षष्ठांशः क्षीयते। भावान्तरालेषु तु त्रैराशिकेन हरणं कर्तव्यमित्यर्थादुक्तं भवति। तथाचोक्तं श्रीपतिना —

"लग्नं ग्रहोनं यदि षड्गृहेभ्यो हीनं तदानीं हरसम्भवः स्यात् ।"

इति । सत्सु ततः अर्धं ह्रसति। सत्सु शुभग्रहेषु व्ययभवनात् प्रतिलोमं स्थितेषु ततः यथोक्ताद् अर्धं हीयते । शुभग्रहे व्ययस्थे तदायुषोऽर्धं नश्यति, लाभस्थे पादः, दशमे पादार्धमित्यादि द्रष्टव्यम् । एषु स्थानेषु ग्रहबहुत्वे विशेषमाह — अथ एकगानां बली एकः अंशं हरति इति सत्याचार्य आह इत्यन्वयः । एकत्र हरणस्थाने स्थितानां ग्रहाणां मध्ये बलवानेक एव आत्मनो यथोक्तमंशं हरति, नान्ये इति सत्याचार्यमतम्। तथाचोक्तम् —

"एकर्क्षोपगतानां यो भवति बलाधिको विशेषेण ।
क्षपयति यथोक्तमंशं स एव नान्योऽपि तत्रस्थः ॥"

इति । वराहमिहिरस्याप्येवं मतम् । इह सत्यमतोपन्यास आगमा-(स?नु)स्मृतिप्रयोजनार्थमिति ॥ ३ ॥

क्रूरोदयहरणं वसन्ततिलकेनाह —

**साधोंदितोदितनवांशहतात् समस्ताद्**
**भागोऽष्टयुक्तशतसङ्ख्य उपैति नाशम् ।**
**क्रूरे विलग्नसहिते विधिना त्वनेन**
**सौम्येक्षिते दलमतः प्रलयं प्रयाति ॥ ४ ॥**

इति । क्रूरे विलग्नसहिते सार्धोदितोदितनवांशहतात् समस्ताद्

१. 'स्थे तदा आ' ख. ग. पाठः. २. 'वेऽपि' क. ख. पाठः. ३. 'षु त्रै' क. ग. पाठः. ४. 'लग्न' क. पाठः. ५. 'ग्र' ख. पाठः. ६. 'त्यादि । सत्सु तु त' क. ख. पाठः. ७. 'म् ॥ ३ ॥'. ८. 'णमाह —' ख. ग. पाठः.

अष्टयुक्तशतसङ्ख्यो भागः नाशमुपैति इत्यन्वयः। क्रूरे अर्कारसौरिणामन्यतमे विलग्नस्थे सति। सार्धोदितोदितनवांशहताद् अर्धोदितेन नवांशकेन सहितानां लग्नोदितनवांशानां सङ्ख्यया गुणितात्। समस्तात् पृथक् पृथक् सलग्नानां सर्वेषां ग्रहाणाम् आनीतादायुर्दायात्। अष्टयुक्तशतसङ्ख्यः अष्टोत्तरशतेन हारकेण हृत्वा लब्धो भागः पृथक् पृथक् सर्वेषामायुःपिण्डेषु नाशमुपैति। अत्र विशेषमाह — लग्ने सौम्येक्षिते अनेन विधिना दलं प्रलयं प्रयाति। लग्ने सौम्यग्रहदृष्टे सति क्रूरोदयहरणार्थमानीतस्य भागस्यार्धमेव प्रलयं प्रयातीत्यर्थः। अत्र केचित् सार्धोदितोदितनवांशानां मेषादितो गणनमाचक्षते। तत्पक्षे मीनराशौ पापसहिते मीनान्त्यजातस्य[1] सद्योमरणमेव स्यात्। तत्र जाताः केचन जीवन्तोऽपि दृश्यन्ते। अपिच सार्धोदितोदितनवांशशब्देन अस्तमितानामनुदितानां नवांशानां ग्रहणं च कर्तव्यं स्याद्, अतस्तदसदेव। अन्ये पुनः उदयलग्नं लिप्तीकृत्य ज्ञानवीरेण हृत्वा शिष्टात् ननखैः लब्धानां सार्धोदितानाम् अंशकानां सङ्ख्यया गुणयन्ति। अस्य हरणस्य क्रूरोदयजन्यत्वाद् उदयलग्नोदितनवांशसङ्ख्यया सार्धोदितया गुणनमेव अत्र आचार्येण क्रूरे विलग्नसहिते सार्धोदितोदितनवांशहताद् इत्युक्त्या दर्शितम्। एवमानीतस्य यथोक्तहरणशिष्टस्य

"वर्षं द्वादश मासास्त्रिंशद्दिवसा भवेत् स मासस्तु।
षष्टिर्नाड्यो दिवसः षष्टिस्तु विनाडिका नाडी॥"

इत्युक्तलक्षणस्य कालस्य सावनत्वात् सावनात्मकस्यायुःपिण्डस्य सौरीकरणं कर्तव्यम्। सौरपक्षे[3] उत्तरायणदक्षिणायनद्वयात्मकेन खलु वत्सरेण लोकव्यवहारः। तथा पूर्वापरपक्षद्वयात्मकेन मासेन मासव्यवहारः। तथा दिनरात्र्यात्मकेन सावनदिनेन लोके दिनव्यवहारः। तथाचोक्तममरसिंहेन—

"अष्टादश निमेषास्तु काष्ठा त्रिंशत्तु ताः कला।
तास्तु त्रिंशत् क्षणस्ते तु मुहूर्तो द्वादशास्त्रियाम्॥

१. 'न्त्ये', २. 'नां न' ग. पाठः. ३. 'क्षेण लो' ख. ग. पाठः. ४. 'कस्य व्य' ग. पाठः.

ते तु त्रिंशदहोरात्रः पक्षस्ते दश पञ्च च ।
पक्षौ पूर्वापरौ शुक्लकृष्णौ मासस्तु तावुभौ ॥
द्वौ द्वौ माघादिमासौ स्यादृतुस्तैरयनं त्रिभिः ।
अयने द्वे गतिरुदग्दक्षिणार्कस्य वत्सरः ॥"

इति । अत्र दिवसमासवत्सराणां सावनचान्द्रसौराणां परस्परं भिन्नत्वेऽपि अभेदेन लोकव्यवहारः प्रवर्तते । तस्मात् सावनेन निर्दिष्टस्य कालस्य दिवसमासवर्षात्मकस्य लोकव्यवहाराय सौरीकरणं कर्तव्यम् । सौरसावनान्तरं च पञ्च दिवसाः पञ्चदश घटिकाः एकत्रिंशद् विघटिकाः पञ्चदश गुर्वक्षराणि च एकस्मिन् वत्सरे भवति । सौरीकरणार्थं च ग्रहाणामायुर्दायं विन्यस्य तत्रस्थानि वर्षाणि द्वादशभिर्गुणयित्वा मासैर्योजयेत् । मासांश्च त्रिंशता हत्वा दिनैर्योजयेत् । ततः सावयवानि तान्यायुर्दायदिनानि तत्समेन हत्वा श्रीजगन्नूपुरेण हरेत् । लब्धानि सौरवर्षाणि पुनर्द्वादशभिर्हत्वा तेनैव हारेण[1] लब्धाः (मासाः, पुनस्त्रिंशता हत्वा तेनैव हारेण लब्धाः) सौरदिवसाश्च भवन्ति । एवं सौरीकरणम् । एवं ग्रहाणां लग्नस्यायुःपिण्डेषु सौरीकृतेषु संयोजितेषु जातस्य शिशोर्जीवितकालः सिद्धो भवति ॥ ४ ॥

अथ[2] पुरुषादीनां परमायुःप्रमाणनिर्देशार्थं शिखरिणीमाह—

**समाः षष्टिर्द्विघ्ना मनुजकरिणां पञ्च च निशा**
**हयानां द्वात्रिंशत् खरकरभयोः पञ्चककृतिः ।**
**विरूपा सा त्वायुर्वृषमहिषयोर्द्वादश शुनां**
**स्मृतं छागादीनां दशकसहिताः षट् च परमम् ॥ ५ ॥**

इति । मनुजकरिणां द्विघ्नाः षष्टिः समाः पञ्च निशाश्च परममायुः स्मृतम् इत्यन्वयः । मनुजानां करिणां च द्विघ्नाः द्विगुणाः षष्टिः विंशत्यधिकशतं समाः वत्सराः पञ्च निशाश्च[3] अहोरात्राः परमायुः स्मृतम् । मुनिभिरिति शेषः । हयानां द्वात्रिंशत् परमायुः । खरकरभयोः पञ्चककृतिः खरस्य करभस्य च पञ्चानां वर्गः पञ्चविंशतिरिति यावत् । वृषमहिषयोस्तु सा विरूपा परमायुः विरूपा एकोना पञ्चककृतिः

१. 'ण हत्वा ल' ख. पाठः. २. 'थ परमायुर्लक्षणमाह—', ३. 'श्च प' ख. ग, पाठः.

चतुर्विंशतिरिति यावत् । शुनां द्वादश समाः परमायुः । छागादीनां दशकसहिताः षट् च । छगादीनाम् आदिशब्देन मृगादयो गृह्यन्ते । दशकसहिताः षट् षोडश इति । मुनिभिः स्मृतम् इत्युक्त्या उक्तानां परमायुःसङ्ख्यानां लग्नग्रहस्थितिवशान्निर्देश्यत्वं द्योत्यते । तस्माद् विंशत्युत्तरशतायुषः पुरुषस्य द्वादशायुषः शुनश्च आयुर्दायकरणं तुल्यं भवति । कथमिति चेत् पुरुषस्य आयुषि एकोनविंशतिः सूर्यस्याब्दाः । शुनस्त्वायुषि तस्य सूर्यस्य षट्त्रिंशद्दिवसोनौ द्वौ संवत्सरौ । एवमन्येषां ग्रहाणाम् अन्येषां तुरगादीनां च परमायुषि आयुर्दायप्रमाणं कल्पनीयम् । तद्वशात् तुरगादीनामपि दशाफलविपाकः यथाकालं यथासम्भवं वक्तव्यः । अत्र एककालप्रसूतानां नरतुरगखरवृषभशुनकच्छागादीनां जननलग्नग्रहस्थितिवशान्निर्देश्यस्यायुर्दायस्य जात्यनुसारेण नानाप्रमाणत्वसम्भवोक्त्या कारणबलेनायुषो वृद्धिह्रासौ भवत इति व्यज्यते । अत्र समाः षष्टिरिति प्रथममुक्त्वा पश्चाद् द्विघ्नेति विशेषणेन परमायुर्निर्देशात् केषुचिद् विषयेषु षष्टेरपि परमायुष्ट्वेन ग्रहणम् आचार्यस्याभिप्रेतमिति द्योत्यते । तदर्थमेव पूर्वं ग्रहाणां वत्सरकथनेऽपि "नवतिथिविषयाश्विभूतरुद्रा दशे"ति पृथग् ग्रहवत्सरेषु दशकमपहाय शेषस्य निर्देशः कृतः । अतोऽल्पायुर्विषयविशेषेषु एवमप्यायुर्दायानयनं कर्तव्यमित्युक्तं भवति ॥ ५ ॥

परमायुर्योगलक्षणं[3] पुष्पिताग्रयाह—

**अनिमिषपरमांशके विलग्ने**
**शशितनये गवि पञ्चवर्गलिप्ते ।**
**भवति हि परमायुषः प्रमाणं**
**यदि सहिताः सकलाः स्वतुङ्गभेषु ॥ ६ ॥**

इति । विलग्ने अनिमिषपरमांशके शशितनये गवि पञ्चवर्गलिप्ते सति सकलाः स्वतुङ्गभेषु सहिता यदि परमायुषः प्रमाणं भवति हि इत्यन्वयः । अनिमिषो मीनः तस्य परमांशः अन्त्यो[4]ऽशः । बुधे वृषभ-

१. 'षायु', २. 'नाचा' क. पाठः. ३. 'णमाह—' ख. ग. पाठः. ४. 'न्त्यां' क. ग. पाठः.

राशौ पञ्चवर्गलिप्ते पञ्चानां वर्गः पञ्चवर्गः पञ्चविंशतिरिति यावत्, तावतीभिर्लिप्ताभिः समन्विते सति । सकलाः बुधादन्ये सर्वे ग्रहाः । स्वतुङ्गभेषु स्वस्वपरमोच्चराशिषु । सहिता यदि तदा परमायुषः प्रमाणं भवति । तद्यथा — मेषे परमोच्चस्थितस्य रवेरेकोनविंशतिर्वत्सराः । परमोच्चस्थितस्य चन्द्रस्य पञ्चविंशतिः । परमोच्चस्थितस्य कुजस्य लाभस्थितत्वाद् दृश्यार्धहरणसम्भवेनार्धहान्या सप्त संवत्सराः षण्मासाश्च । बुधस्य परमनीचादतिक्रान्तस्य सप्त संवत्सराः षण्मासाः पञ्च दिनानि च । गुरोः परमोच्चस्थस्य पञ्चदश वत्सराः । शुक्रस्य एकविंशतिः । शनेः परमोच्चस्थस्य अष्टमगतत्वेन दृश्यार्धहरणसम्भवात् पञ्चमांशहान्या षोडश वत्सराः । लग्नस्य "होरा त्वंशप्रतिममि"त्युक्त्या नव वत्सराश्च सम्भवन्ति । यथोक्तानां वर्षमासदिनानां पिण्डीकरणे वत्सराणां विंशत्युत्तरशतं पञ्च दिनानि च यथोक्तं परमायुःप्रमाणं भवति । अस्य प्रमाणस्य त्रैराशिकेन तुरगादीनामपि यथोक्ते स्वास्मिन् परमायुषि ग्रहाणां लग्नस्य च वर्षमासदिनविभागो द्रष्टव्यः ॥ ६ ॥

"ज्योतिषमागमशास्त्रं विप्रतिपत्तौ न योग्यमस्माकम् ।
स्वयमेव विकल्पयितुं किन्तु बहूनां मतं वक्ष्ये ॥"

इत्यादिभिर्वचनैः प्रकटं प्रदर्शितात्मव्यापारो महात्मा वराहमिहिरः सम्यगविज्ञातहोरातन्त्ररहस्यानाम् अवज्ञातसम्प्रदायसरणीनां परपक्षनिराकरणमात्रप्रवृत्तानाम् उत्तानचेतसां वैतण्डिकानाम् आपातप्रतिभासमानदोषाभासप्रदर्शनपरं मतं वक्ष्यमाणसत्याचार्यमतप्रशंसनाय दर्शयति श्लोकद्वयेन । तत्र प्रथमं शालिन्याह —

आयुर्दायं विष्णुगुप्तोऽपि चैवं
देवस्वामी सिद्धसेनश्च चक्रे ।
दोषश्चैषां जायतेऽष्टावरिष्टं
हित्वा नायुर्विंशतेः स्यादधस्तात् ॥ ७ ॥

इति । विष्णुगुप्तोऽपि एवमायुर्दायं चक्रे, देवस्वामी च एवं चक्रे, सिद्धसेनश्च एवं चक्रे इत्यन्वयः । विष्णुगुप्तश्चाणक्यः । न केवलं

१. 'स्थत्वा' क. पाठः. २. 'णे' ख. पाठः. ३. 'क्त', ४. 'युषः प्र' क. पाठः. ५. 'क्तस्थेऽस्मि', ६. 'भि', ७. 'वि' ख. पाठः.

T

मययवनमणिन्थपराशरा एवमायुर्दायं चक्रुः, चाणक्यदेवस्वामिसिद्ध-सेनाश्च एवमायुर्दायं कृतवन्त इत्यर्थः। मयादीनामेतेषाम् आचार्याणां दोषो जायते च। को दोष इति चेत्, अविमृश्यकारित्वमिति सिध्यति वक्ष्यमाणेन। तथाहि — अरिष्टमष्टौ हित्वा विंशतेरधस्तादायुर्न स्याद् इति सम्बन्धः। "शुभैरथ समाष्टकमि"त्युक्तलक्षणस्यारिष्टस्य कालम-ष्टवर्षात्मकं वर्जयित्वा विंशतिवर्षस्याधस्तादायुर्जीवितकालः(न स्यात्)। तदवधिभवं मरणमिति यावत्। जातस्य वर्षाष्टकस्याधो बालारिष्टयोगेन मरणं सम्भवति। वर्षाष्टकादूर्ध्वं विंशतेरधस्ताद् द्वादशसु वर्षेषु मयाद्यु-क्तायुर्दायमार्गेण दशावसानाभावान्मरणं न सम्भवेत्। तेष्वपि वर्षेषु मरणं दृश्यते च। तस्मादेषां मयादीनाम् अविमृश्यकारितालक्षणो दोषः सञ्जायते इत्यर्थः॥ ७॥

पुनरपि तेषामाचार्याणामायुर्दूषणार्थं शालिन्याह —

**यस्मिन् योगे पूर्णमायुः प्रदिष्टं**
**तस्मिन् प्रोक्तं चक्रवर्तित्वमन्यत्।**
**प्रत्यक्षोऽयं तेषु दोषोऽपरोऽपि**
**जीवन्त्यायुः पूर्णमर्थैर्विनापि॥ ८॥**

इति। यस्मिन् योगे पूर्णमायुः प्रदिष्टं तस्मिन् अन्यच्चक्रव-र्तित्वं प्रोक्तम् इत्यन्वयः। "अनिमिषपरमांशक" इत्यादिना प्रोक्ते पूर्णं परमायुरुपदिष्टम्। तत्रैव योगे अन्यच्चक्रवर्तित्वं च निर्दिष्टम्। बुधं विना षड्भिर्ग्रहैः स्वतुङ्गस्थितैः परमायुरुपदिष्टम्। तथाचोक्तं —

"सुखिनः प्रकृष्टकार्या राजप्रतिरूपकाश्च राजानः।
एकद्वित्रिचतुर्भिर्जायन्ते स्वोच्चगैः परं दिव्याः॥"

इति। तस्मात् परमायुर्योगे चक्रवर्तित्वं च सम्भाव्यमिति मयादीनां मतमित्युक्तं भवति। तेष्वयमपरोऽपि प्रत्यक्षो दोषः। तेषु मयादिषु अयं वक्ष्यमाणोऽपरोऽपि प्रत्यक्षो दोषः अविमृश्यकारितालक्षणो

१. 'वमेवायु' क. पाठः. २. 'कुर्वन्तीत्य', ३. 'प्रदिष्टं' ग. पाठः, ४. 'ङ्गगैः प' क. पाठः. ५. 'गैरतः प' क. ग. पाठः,

भवति । अर्थैर्विनापि पूर्णमायुर्जीवन्ति । परमायुर्जीवनं दृश्यते येषां, ते अर्थैर्विनाभूताः दरिद्राश्च दृश्यन्ते । तस्मादेषामायुर्लक्षणे वा चक्रवर्तित्वलक्षणे वा द्वयोरेकत्राविमृश्यकारितालक्षणो दोषः प्रत्यक्षो जायत इत्यर्थः । इति विमलतरतपश्चरणपश्चात्कृतसकलजनैः करतलामलकवदुपलभ्यमानसकलभुवनान्तर्वर्तिसमस्तवृत्तान्तनितान्तमहनीयमहिमभिः मयासुरपराशरादिभिर्दिव्यैरतिविचित्रकीर्त्तिपवित्रीकृतभुवनत्रितयैश्च विपश्चिद्भिः चाणक्यमणिन्थयवनेश्वरसिद्धसेनादिभिरपि जगदनुग्रहाय महाकारुणिकैरुपदिष्टेषु होराशास्त्रेषु स्वयमविज्ञातचिरायुरल्पायुर्विषयसम्प्रदायप्रायैरविज्ञातगुरुकुलावासपरिश्रमैः

"शिष्यस्य बुद्धिमान्द्यादाचार्यस्योपदेशसंवरणात् ।
परिमुषितसम्प्रदायान्यहह परे दूषयन्ति शास्त्राणि ॥"

इत्यादिषूद्दिष्टविदग्धमानिलक्षणप्रथमोदाहरणभूतैः यैः कैश्चिदुत्तानबुद्धिभिरुद्घोषितमुत्थापितात्मदूषणमिदं दूषणद्वयमाचार्येण वराहमिहिरेण तावद् ईदृशमनधिगतपरमार्थं गतानुगतिकं लोकवृत्तं प्रकाशयितुमत्रायुर्दायप्रकरणे प्रदर्शितम् । तथाहि — आयुर्दायस्य चक्रवर्तियोगस्य च परमायुर्योगलक्षण एव केवलमेकीभूतस्य तत्कालात् पूर्वापरकालेषु भिन्नस्वरूपतया पूर्णायुर्जीवनस्य दारिद्र्ययोगस्य च सम्भवात् तद्दूषणं न घटते । परमायुर्योगोक्तग्रहाणामुच्चासन्नराशिगतानामपि आयुर्दायानयने स्वल्पमेवान्तरं भवति । चक्रवर्तियोगस्य पुनरभाव एव, केमद्रुमाद्यनिष्टयोगसम्भवश्च स्यात् । शताधिकवर्षजीवनदर्शनेऽपि पूर्णायुर्जीवनस्य लोकव्यवहारासिद्धत्वात् पूर्णायुर्जीवनमर्थैर्विनाभावश्च युगपत् सम्भवतीति नैतद् दूषणं दूषणत्वेनाचार्यस्याभिमतम् । किन्तु — एवं दूषणमदूषणविषयेऽपि वदति । लोके दैवविद्भिर्यथावद् विमृश्यैव लक्षणं वक्तव्यमिति शिष्यान् बोधयितुमेव प्रदर्शितम् ॥ ८ ॥

अथ जीवशर्ममतेन सत्याचार्यमतेन चायुर्दायमौपच्छन्दसिकेनाह—

**स्वमतेन किलाह जीवशर्मा**
**ग्रहदायं परमायुषः स्वरांशम् ।**

१. 'तिल', २. 'लांसवा', ३. 'णडु', ४. 'स्थि' क. पाठः.

ग्रहभुक्तनवांशराशितुल्यं
बहुसाम्यं समुपैति सत्यवाक्यम् ॥ ९ ॥

इति । जीवशर्मा स्वमतेन परमायुषः स्वरांशं ग्रहदायम् आह इत्यन्वयः । जीवशर्मा नामाचार्यः स्वमतेन आत्मोत्प्रेक्षया परमायुषः स्वरांशं पञ्चदिनोत्तरविंशत्यधिकशतवर्षप्रमाणस्य सप्तभिर्विभज्य लब्धम् अंशं दिनसप्तांशसहितद्वाविंशतिदिवसाधिकैकमासान्वितसप्तदशवर्षप्रमाणकं ग्रहदायं ग्रहाणामायुर्दायमाह सर्वेषां तुल्यप्रमाणं निर्दिष्टवान् । अत्र जीवशर्ममतेऽपि पूर्वोक्तानि हरणानि यथोक्तं कर्तव्यानि । ग्रहाणां वत्सरप्रमाण एव विशेष इत्याचार्येण तदेव दर्शितम् । सत्याचार्यप्रशंसापूर्वकम् अंशकायुर्दायमाह — ग्रहभुक्तनवांशराशितुल्यं सत्यवाक्यं बहुसाम्यं समुपैतीत्यन्वयः । ग्रहभुक्तैर्ग्रहैर्भुक्तैः नवांशराशिभिस्तुल्यम् । राशिशब्देन नवांशकानां मेषादितो गणना द्योत्यते । तस्मादियमत्र प्रक्रिया — ग्रहस्फुटानि विन्यस्य लिप्तीकृत्य द्वादशनवांशलिप्ताप्रमाणेन ज्ञानवीरेण हृत्वा शिष्टा लिप्ताः नवांशप्रमाणेन द्विशत्या हृत्वा लब्धा ग्रहायुर्दायवत्सरा भवन्ति । शेषं द्वादशभिर्गुणयित्वा द्विशत्यैव[1] हृत्वा लब्धाः मासाः । शिष्टं पुनस्त्रिंशता हत्वा द्विशत्या हृत्वा लब्धा दिवसा भवन्ति । शिष्टं षष्ट्या हत्वा लब्धा* नाडिका भवन्ति । एवं लब्धं वर्षमासदिननाडिकात्मकं ग्रहाणामायुः ग्रहभुक्तनवांशराशितुल्यमित्युक्तम् । एवं सत्याचार्यस्य वाक्यं बहुसाम्यं समुपैति । बहुसाम्यं बहुभिरुदाहरणत्वेनालोचितेषु जातकेषु दृष्टैर्जीवितकालैः साम्यं समुपैति । अथवा — बहुसाम्यं बहुभिराचार्यमतैः साम्यं समुपैति इति । सत्यवाक्यमादरणीयमित्यर्थः । अत्र मययवनाद्युक्ते[2] आयुर्दाये[3] दोषाभासप्रदर्शनेन[4] तन्निराकरणानुक्त्या च जीवशर्ममते स्वमतत्वेनाप्रामाण्यसूचनाच्च सत्याचार्यमतस्य बहुसाम्यसम्भवोक्त्या च वराहमिहिराचार्यस्य साक्षादभिप्रेतं सत्याचार्यमतमित्यवगम्यते ॥ ९ ॥

---

१. 'त्यै हृ' क. पाठः. २. 'क्तेषु आ', ३. 'येषु दो' ख. ग. पाठः. ४. 'भावसंप्र' ग. पाठः. ५. 'पु' ख. ग. पाठः.

---

* 'द्विशत्या हृत्वे'ति शेषः ।

तत्र विशेषं वंशस्थेनाह —

स्वतुङ्गवक्रोपगतैस्त्रिसङ्गुणं
द्विरुत्तमस्वांशगृहत्रिभागगैः ।
इयान् विशेषस्तु भदन्तभाषिते
समानमन्यत् प्रथमेऽप्युदीरितम् ॥ १० ॥

इति । ग्रहभुक्तनवांशराशितुल्यं ग्रहायुः स्वतुङ्गवक्रोपगतैः त्रिसङ्गुणं भवति । स्वोच्चस्थैर्वक्रगामिभिश्च ग्रहैः त्रिसङ्गुणं कार्यम् । तथा उत्तमस्वांशगृहत्रिभागगैर्द्विगुणितम्[2] । कार्यमिति शेषः । उत्तमस्वांशगृहत्रिभागगैः वर्गोत्तमगतैः स्वनवांशगतैः स्वक्षेत्रगतैः स्वद्रेक्काणगतैश्च ग्रहैः स्वकीयमंशकायुर्द्विगुणं कार्यमित्यर्थः । भदन्तभाषिते इयांस्तु विशेषः । भदन्तः सत्यः । सत्यवाक्ये अंशकायुषि इयान् उच्चवक्राभ्यां त्रिगुणीकरणम् उत्तमादिचतुष्के द्विगुणीकरणमित्येतावान् विशेषः । प्रथमे उदीरितमन्यत् समानमपि भवतीति शेषः । प्रथमे मययवनादिमते उदीरितमन्यन्नीचमूढादिहरणमिति यावत् । तत् समानमपि । अत्रांशकायुष्यपि कर्तव्यमित्यर्थः । 'विशेषणमात्रप्रयोगे विशेष्यप्रतिपत्तिरि'ति न्यायात् त्रिसङ्गुणमिति विशेषणेन पूर्वप्रस्तुतं ग्रहभुक्तनवांशराशितुल्यमंशकायुरिति विशेष्यमत्राध्याहार्यम् ॥ १० ॥

पुनरप्यंशकायुषि विशेषमिन्द्रवज्रयाह[3] —

किन्त्वत्र भांशप्रतिमं ददाति
वीर्यान्विता राशिसमं च होरा ।
क्रूरोदये योऽपचयः स नात्र
कार्यं च नाब्दैः प्रथमोपदिष्टैः ॥ ११ ॥

इति । किन्तु अत्रायं विशेष इत्यर्थः । अत्र होरा भांशप्रतिममायुर्ददाति, वीर्यान्विता राशिसमं च ददातीत्यन्वयः । अत्रांशकायुषि होरा लग्नं भांशप्रतिमं नवांशतुल्यमायुर्ददाति । पूर्वोक्तग्रहदशान-

१. 'षमाह—', २. 'णं का', ३. 'षमाह —' ख. ग. पाठः.

यनवल्लभस्य दशानयनं कार्यमित्यर्थः। होरा वीर्यान्विता "होरा स्वामिगुरुज्ञे"त्याद्युक्तलक्षणवीर्यान्विता चेत् केवलं भांशप्रतिममेव न, राशिसमं च आयुर्ददाति। वीर्यहीना चेद् भांशप्रतिममेव ददाति, वीर्यवती चेद् भांशसमं राशिसमं च आयुरेकीकृत्य ददातीत्यर्थः। क्रूरोदये योऽपचयः सोऽत्र न कार्यः। क्रूरस्योदये सति योऽपचयो मयादिमते निर्दिष्टः, सोऽत्रांशकायुषि न कर्तव्यः। तथा प्रथमोपदिष्टैरब्दैश्च न कार्यम्। प्रथमोपादिष्टैः 'नवतिथी'त्याद्युक्तैः परमायुस्स्वरांशकत्वेनोक्तैश्च वत्सरैरत्रांशकायुषि न कार्यं न किञ्चित् कर्तव्यमस्ति ॥११॥

पुनरप्यत्र सम्प्रदायविशेषमिन्द्रवज्रयाह[1] —

सत्योपदेशः प्रवरोऽत्र किन्तु
कुर्वन्त्ययोग्यं बहुवर्गणाभिः।
आचार्यकं त्वत्र बहुघ्नतायामेकं तु यद् भूरि तदेव कार्यम् ॥ १२ ॥

इति। सत्योपदेशः प्रवरः। अत्रोक्ते पिण्डायुषि मयादिमते जीवशर्ममते सत्यमते च त्रिष्वप्यायुर्दायेषु सत्योपदेशः प्रवरः सत्याचार्योपदेशः श्रेयान्। किन्तु अत्र बहुवर्गणाभिरयोग्यं कुर्वन्ति। बहुवर्गणाभिः बह्वीभिर्वर्गणाभिः गुणनक्रियाभिरयोग्यमनुचितं कुर्वन्ति, सम्प्रदायविकला इति शेषः। यथा—परमोच्चे वक्रे स्थितस्य शुक्रस्य मीनांशकत्वाद् द्वादश वत्सराः वर्गोत्तमत्वाद् द्विगुणिताश्चतुर्विंशतिः सम्भवन्ति। वक्रगत्या त्रिगुणिताः पुनर्द्वासप्ततिः। पुनरुच्चस्थित्यां[2] त्रिगुणिताः षोडशाधिकं शतद्वयं शुक्रस्यैव आयुर्दाय इति। इत्येवं बह्वीभिर्वर्गणाभिः सम्प्रदायवैकल्यात् केचिदनुचितमाचरन्तीत्यर्थः। अत्राचार्यकं तु, आचार्यकं सम्प्रदायः। अत्र गुणकरणे एवं सम्प्रदायः। बहुघ्नतायां तु एकं भूरि यत् तदेव कार्यमित्यन्वयः। बहुघ्नतायां बहुगुणकारप्राप्तौ। गुणकारविषयाः षट्। तत्र द्वैगुण्यविषयेषु चतुर्ष्वपि प्राप्तेष्वेकमेव द्वैगुण्यं कर्तव्यम्। त्रैगुण्यविषययोर्द्वयोरपि सम्भवे एकमेव

1. 'षमाह—' ख. ग. पाठः. २. 'त्या च त्रि' ग. पाठः.

त्रैगुण्यं कर्तव्यम् । द्वैगुण्यस्य च त्रैगुण्यस्य च सम्भवे भूरित्वादेकं त्रैगुण्यमेव कर्तव्यमित्यत्र सम्प्रदायः । एवमत्रांशकायुर्दाये सम्प्रदायवैकल्यसम्भवमनौचित्यजनितं दोषं दर्शयित्वा तत्परिहाराय सम्प्रदायस्वरूपनिर्देशादत्र शास्त्रे तत्र तत्र सम्प्रदायमार्गेण सूचितस्य गूढार्थस्य सत्ता शृङ्गग्राहिकया प्रदर्शिता । तत्र यद्यप्याचार्येणांशायुः परममुक्तं, तथापि (यदा) लग्नं सम्यग् बलीभवति तदांशायुः कर्तव्यम् । तथार्को बलवान् भवति तदा पिण्डायुः कर्तव्यम् । तथाच सारावल्याम्—"अंशोद्भवं विलग्नात् पिण्डं भानोरि"ति । यदांशायुःपिण्डायुषी द्वे अपि कार्ये तदा द्वाभ्यामपि दशान्तर्दशापाककल्पना कार्या इति ॥ १२ ॥[1]

अमितायुर्लक्षणं[2] पुष्पिताग्रयाह —

**गुरुशशिसहिते कुलीरलग्ने**
**शशितनये भृगुजे च केन्द्रयाते ।**
**भवरिपुसहजोपगैश्च शेषै-**
**रमितमिहायुरनुक्रमाद् विना स्यात् ॥ १३ ॥**

इति । इह कुलीरलग्ने गुरुशशिसहिते सति शशितनये भृगुजे केन्द्रयाते च शेषैः भवरिपुसहजोपगैश्च अनुक्रमाद्विना अमितमायुः स्यादित्यन्वयः । इह जीवलोके कर्कटके लग्ने गुरुशशिभ्यां सहिते बुधे शुक्रे च केन्द्रस्थिते सति शेषैरर्ककुजशानिभिः लाभशत्रुसहजस्थानगतैः जातस्य अनुक्रमाद्विना आयुर्दायानयनक्रमं विना अमितम् अपरिच्छिन्नमायुर्भवति । अयमर्थः — एवंविधयोगं दृष्ट्वायुर्दायगणना न कर्तव्या । यस्मात् तस्य न संवदति ॥ १३ ॥[3]

इति होराविवरणे[4] सप्तमोऽध्यायः ॥

## अथ अष्टमोऽध्यायः ।

अथ सप्तमाध्यायोक्तक्रमानीते ग्रहलग्नायुर्योगात्मके जननमरणयोरन्तरालभवजीवितकाले दशाफलानि गोचरफलानि योगफलानि च ग्रहस्थितिवशाद् वक्तव्यानि । कस्य कदा कीदृशमिति कालं विभज्य निर्देष्टुं प्रथमं जीवितकालं त्रिधा विभक्तुं मालिनीमाह—

**उदयरविशशाङ्कप्राणिकेन्द्रादिसंस्थाः**
**प्रथमवयसि मध्येऽन्त्ये च दद्युः फलानि ।**

१. 'ता ॥ १२ ॥', २. 'णमाह —', ३. 'ति ॥ १३ ॥' ख. ग. पाठः, ४. 'णे आयुर्दायः स' क. पाठः.

नहि न फलविपाकः केन्द्रसंस्थाद्यभावे
भवति हि फलपक्तिः पूर्वमापोक्लिमेऽपि ॥ १ ॥

इति । उदयरविशशाङ्कप्राणिकेन्द्रादिसंस्थाः ग्रहाः क्रमेण प्रथमवयसि मध्ये अन्त्ये च फलानि दद्युरित्यन्वयः । उदयश्च रविश्च शशाङ्कश्च उदयरविशशाङ्का इति द्वन्द्वसमासेन जातकनिरूपणे त्रयाणां साम्यं दर्शितम् । वक्ष्यति च— "भेन्द्वर्कास्पदपातिगांशनाथवृत्त्ये"ति । त्रिभिरपि निरूपणे तुल्ये केन कर्तव्यमिति शङ्कायामाह— उदयरविशशाङ्कप्राणीति । प्राणी बलवान् । उदयरविशशाङ्केषु प्राणी यः, तस्य केन्द्रादिसंस्थाः, उदयरविशशाङ्केषु बलयुक्तस्य केन्द्रपणपरापोक्लिमस्था इत्यर्थः । केन्द्रस्थाः प्रथमवयसि, पणपरस्था मध्यवयसि, आपोक्लिमस्था अन्त्यवयसि च फलानि कुर्वन्ति । केन्द्रस्थानां दशापाकः प्रथमं, पणपरस्थानां वयसो मध्यत्रिभागे, आपोक्लिमस्थानामन्त्यत्रिभागे च दशाकाल इत्युक्तं भवति । केन्द्रपणपरापोक्लिमेषु एकत्र द्वयोर्वा ग्रहाभावे कथं वक्तव्यमित्याशङ्कायामाह— केन्द्रसंस्थाद्यभावे फलविपाकः नहि न । द्वौ नञौ प्रकृतमर्थं सूचयत इति न्यायेन केन्द्रसंस्थाद्यभावेऽपि फलविपाकोऽस्त्येवेत्यर्थः । कथमिति चेदत्राह— आपोक्लिमेऽपि पूर्वं फलपक्तिर्भवति हि । केन्द्रपणपरस्थग्रहाभावे आपोक्लिमस्थानां फलपक्तिः पूर्वं भवति । अर्थादेव केन्द्रस्थाभावे पणपरस्थस्य फलं पूर्वमित्युक्तं भवति । तथाच (व्य ? स्व)ल्पजातके—

"लग्नार्कशशाङ्कानां यो बलवांस्तद्दशा भवेत् प्रथमा ।
तत्केन्द्रपणपरापोक्लिमगानां बलवशाच्छेषाः ॥"

इति ॥ १ ॥

अथ केन्द्रादिषु ग्रहबहुत्वे कथं वक्तव्यमित्याशङ्कायां[2] दशाक्रमज्ञानार्थमिन्द्रवज्रयाह—

आयुः कृतं येन हि यत्तदेव
कल्प्या दशा सा प्रबलस्य पूर्वा ।

---

१. 'ति ॥ १ ॥', २. 'यामाह—' ख. ग. पाठः.

**साम्ये बहूनां बहुवर्षदस्य**
**तेषां च साम्ये प्रथमोदितस्य ॥ २ ॥**

इति । येन हि यदायुः कृतं तदेव दशा कल्प्या इत्यन्वयः । येन ग्रहेण लग्नेन वा कृतं जनितमायुः सप्तमाध्यायोक्तप्रक्रियया आनीतमायुर्यत् तदेव तस्य ग्रहस्य लग्नस्य वा दशा कल्प्या। सा दशा पूर्वा प्रबलस्य । केन्द्रस्थानां पणपरस्थानामापोक्लिमस्थानां वा एकत्र स्थितानां बहुत्वे सति तेषां मध्ये यो बलवान्, तस्य पूर्वा प्रथमा । पुनरप्येवं बलक्रमेण दशाक्रमः । तेषां बलसाम्ये सति कथमित्यत्राह— बहूनां साम्ये बहुवर्षदस्य । दशाक्रमस्य बलसाम्येन बलवशान्निर्णेतुमशक्यत्वे सति बहुवर्षदस्य बह्वायुर्वत्सरप्रदस्य प्रथमा दशा । एवं वत्सराधिक्यवशाद् दशाक्रमः । वत्सरसाम्ये कथमित्यत्राह — तेषां साम्ये च प्रथमोदितस्य । यस्य ग्रहस्य मौढ्यानन्तरोदयः प्रथमं जातः, तस्य दशा प्रथमा । मौढ्यानन्तरोदयस्य प्राथम्यम् आदित्याद् विप्रकर्षाधिक्ये सति सम्भवति। ततस्तद्वशाद् दशाक्रमनिर्णय इत्यर्थः । तथाच गार्गिः—

> "बली लग्नेन्दुसूर्याणां दशामाद्यां प्रयच्छति ।
> तस्मात् ततः प्रयच्छन्ति केन्द्रादिस्थाः क्रमेण ते ॥
> अत्रापि बलिनः पूर्वं तत्साम्ये बहुदायदाः ।
> तत्साम्येऽपि प्रयच्छन्ति ये पूर्वं रविविच्युताः ॥"

इति । अत्र तु ग्रहस्य आदित्याद् विप्रकर्षाधिक्ये सत्यपि अन्यस्य बह्वायुर्वर्षदातृत्वमस्ति चेत्, तस्यैव दशा प्रथमा। तथा बह्वायुर्वर्षदातृत्वे सत्यपि अन्यस्य बलाधिक्यमस्ति चेद् बलाधिकस्यैव दशा प्रथमेत्यनुसन्धेयम् । एवमत्र फलकथनं प्रति दशानां कालविभाग उक्तः । "स्वां स्वां दशामुपगताः स्वफलप्रदाः स्युरि"ति वक्ष्यमाणफलनिर्देशं प्रति स्वस्वदशाकालज्ञानोपायस्तावदत्र दर्शितः । फलनिर्देशकाले वक्ता श्रोता तटस्थश्च सम्भवति। ततो वक्तरि श्रोतरि तटस्थे च

---

१. 'शा' ख. पाठः. २. 'थैः । अत्र' ख. ग. पाठः. ३. 'वा' ग. पाठः.

यानि तात्कालिकलक्षणानि सहसा दृश्यन्ते, तान्यपि सम्यगवधार्य फलनिर्देशः कर्तव्य इति तत्प्रकारसूचनमप्यत्र श्लोके परमकारुणिकेनाचार्येण कृतं वेदितव्यम् । तद्यथा — "आयुः कृतं येन हि यत्तदेव" इति । येन हि यत् कृतं तदेव आयुरिति योजना । येन वक्त्रा श्रोत्रा तटस्थेन वा यत् कृतं करणेन निर्वर्तितं[1] ज्ञेयज्ञानं तदेव आयुः ।

"पूर्वमायुः परीक्षेत पश्चाल्लक्षणमादिशेत् ।"

इत्यादिभिर्वचनैरायुषः प्राधान्यकथनाद् आयुरित्युक्तम् । तदुपलक्षणमेवान्येषां विवाहसन्ततिभोगविशेषाणामपि जिज्ञासितानां सर्वेषाम् । तत्प्रकारप्रदर्शनं च शिष्यहिताय किञ्चित् क्रियते —

"पाषण्डाश्रमवर्णानां सवर्णाः कर्मसिद्धये ।
त एव विपरीताः स्युर्दूताः कर्मविपत्तये ॥"

अस्यार्थः — पाषण्डा आश्रमा वर्णाश्च पाषण्डाश्रमवर्णाः । पाषण्डा वेदबाह्याः । आश्रमाः ब्रह्मचारिगृहस्थवानप्रस्थसन्न्यासिनः । वर्णाः ब्राह्मणक्षत्रियवैश्यशूद्राः । एषां सवर्णाः समानवर्णाः । पाषण्डानां पाषण्डाः समानवर्णाः । ब्रह्मचारिणो ब्रह्मचारी, गृहस्थस्य गृहस्थः, वानप्रस्थस्य वानप्रस्थः, सन्न्यासिनः सन्न्यासी, ब्राह्मणस्य ब्राह्मणः, क्षत्रियस्य क्षत्रियः, वैश्यस्य वैश्यः, शूद्रस्य शूद्रः सवर्णः । एतदुपलक्षणं चण्डालस्य चण्डाल इत्यादीनामपि । सर्वेषां सवर्णा एव शुभसूचकाः । त एव विपरीताः विपरीतवर्णाश्चेदशुभसूचकाः पाषण्डानामाश्रमिण आश्रमिणां पाषण्डा इत्यादि द्रष्टव्यम् । एष प्रकारो दूत्ये शकुनेऽपि चिन्तनीयः । वक्तृगतः प्रष्टृगतश्चावस्थाविशेषः शुभमशुभं वा सूचयति[2] । तत्र प्रष्टृगतो यथा — "अशस्तचिन्तावचन" इत्यादि । वक्तृगतश्च यथा —

"जुह्वाने पावकं पिण्डान् पितृभ्यो निर्वपत्यपि ।"

इत्यादि । तटस्थगतानि लक्षणान्यपि फलविषये[3] योज्यानि ।

---

१. 'व', २. 'दर्शय' ख. ग. पाठः. ३. 'विशेषे यो' ग. पाठः.

"प्रशस्तं पुष्पसामान्यं श्राद्धपुष्पं विनायुषि ।
प्रशस्तं वस्त्रसामान्यं नववस्त्रं विनायुषि ॥"

इत्यादिलक्षणानि प्रेक्ष्यप्रेक्षकतटस्थगतानि जिज्ञासितवस्तून्यायुरादौ योजयितव्यानि । सा दशा कल्प्या पृच्छाकथनसमये दैवज्ञेन । आत्मनि पृच्छके वा तटस्थे वा यल्लक्षणं यथा दृष्टं तल्लक्षणं फलानुभवकालेऽपि । तत्र दृष्ट एव प्रकारः, अथवा तदौपम्ययुक्तोऽवस्था-प्रकारो निर्देश्यः । दैवज्ञस्य बहूनां सन्निधौ विशेषलक्षणप्रदर्शने सर्वेषामपि जिज्ञासायां सत्यां कस्य कथं तत्फलं वक्तव्यमित्यत्राह — प्रबलस्य पूर्वा इति । तेषां जिज्ञासूनां मध्ये यः प्रबलः, अन्ये यं प्रति प्रवणा भवन्ति सः प्रबलः, तस्य पूर्वं फलानुभूतिः । जिज्ञासूनां प्राबल्यसाम्ये सति कथमित्यत्राह — साम्ये बहूनां बहुवर्षदस्येति । तेषां मध्ये वयोधिकस्य फलानुभूतिः । बलेन वयसा च साम्ये कथमित्यत्राह — तेषां च साम्ये प्रथमोदितस्य इति । तेषां वयोधिकानां साम्ये प्रथमोदितस्य प्रथमं तत्र प्रदेशे प्राप्तस्य इत्यर्थः । तथाचाचार्येण महायात्रायामुक्तम् —

"अपृच्छतः पृच्छतो वा जिज्ञासोर्यस्यकस्यचित् ।
होराकेन्द्रत्रिकोणेभ्यस्तत्र वक्तुः शुभाशुभम् ॥"

इति । अत्र च "भक्ष्याहृताकाररुतैश्च चिन्त्यम्" इति वक्ष्यति । तस्मात् तत्काललक्षणानि सम्यगवधार्य दैवज्ञेन जिज्ञासून् प्रति शुभाशुभं वक्तव्यम् इत्यभिप्रायः स्पष्टः । तत्प्रदर्शनमत्रापि कृतमिति द्रष्टव्यम् ॥

दशासु कालविशेषनिर्णयार्थमन्तर्दशानयनं वसन्ततिलकेनाह —

**एकर्क्षगोऽर्धमपहृत्य ददाति तु स्वं**
**त्र्यंशं त्रिकोणगृहगः स्मरगः स्वरांशम् ।**
**पादं फलस्य चतुरश्रगतः सहोरा-**
**स्त्वेवं परस्परगताः परिपाचयन्ति ॥ ३ ॥**

इति । केन्द्रस्थेषु ग्रहेषु लग्नचतुर्थसप्तमस्थाः, पणफरस्थेषु पञ्चमाष्टमस्थौ, आपोक्लिमस्थेषु नवमस्थः । एते एव दशापहारकर्तारः ।

---

१. 'णद', २, ३. 'त्याह', ४. 'नमाह—' ख. ग. पाठः, ५. 'क' ग. पाठः.

तेषां दशाभागानाह — एकर्क्षगः अर्धमपहृत्य स्वं ददातीत्यन्वयः। दशाधिपतिस्थितलग्ने तेन सह स्थितो ग्रहः तस्य दशाया अर्धमपहृत्य स्वं फलं ददाति। एकर्क्षगा बहवः सन्ति चेत्, तेषु बलाधिकोऽर्धाप-हारी भवतीत्येकवचनेन सूचितम्। एवमुत्तरत्रापि। तथा त्रिकोणगृहगः त्र्यंशमपहृत्य स्वं ददाति। चतुरश्रगतः (फलस्य) पादमपहृत्य, स्मरगः स्वरांशमपहृत्य स्वं ददातीति सम्बन्धः। एतेषु बहवः सन्ति चेत्, सर्वेऽप्युक्तभागापहारिणो न भवन्ति। तेषु बलाधिक एव भागं हरति। तथाच सत्यः—

"एकर्क्षोपगतानां यो भवति बलाधिको विशेषेण।
एकः स एव हर्ता नान्ये तत्र स्थिता भागान्॥"

इति। सहोराः ग्रहाः एवं परस्परगताः परिपाचयन्ति। होरा लग्नं तेन सह वर्तमानाः सहोराः। अयमर्थः—ग्रहाः सप्त लग्नं च इत्यष्टौ दशाधिपा उक्ताः। तत्र तेषु यस्य दशा वर्तते ग्रहस्य वा लग्नस्य वा, तस्मादुक्तेषु स्थानेषु स्थिता ग्रहा वा लग्नं वा उक्तं भागमपहरन्ति। उक्तेषु ग्रहावस्थितराशौ वा लग्ने वा तत्त्रिकोणे वा तच्चतुरश्रे वा तत्सप्तमे वा एषु सर्वेषु वा ग्रहलग्नसंयोगाभावे तस्य दशायामप-हाराभावः॥ ३॥

उक्तानामन्तर्दशानां गणितेनानयनमिन्द्रवज्रयाह—[5]

**स्थानान्यथैतानि सवर्णयित्वा**
**सर्वाण्यधश्छेदविवर्जितानि।**
**दशाब्दपिण्डे गुणना यथांशं**
**छेदस्तदैक्येन दशाप्रभेदः॥ ४॥**

इति। एतानि सर्वाणि स्थानानि सवर्णयित्वा अधश्छेदविव-र्जितानि कर्तव्यानीति शेषः। स्थानशब्देन प्रकरणवशाद् भागस्थान-वाचिना भागा गृह्यन्ते। अत्र दशापहारप्रकरणे दशापतेर्भागः सक-लदशा, सहस्थितस्य ग्रहस्य लग्नस्य वा तद्द्विभागः, त्रिकोणस्थितस्य

१. 'षु अर्धापहारिषु ब', २. 'को भ' ग. पाठः. ३. 'ति। सहो', ४. 'त्रिको', ५. 'नमाह—' ख. ग. पाठः.

तत्रिभागः, सप्तमस्थितस्य तत्सप्तभागः, चतुरश्रस्थितस्य तच्चतुर्भागः[1] । एतानि पञ्चापि भागस्थानानि पृथग् विन्यस्य क्रमादधोऽधः स्वं स्वं हारं न्यसेत् । सकलदशास्थानस्याधो रूपं न्यसेत् "कल्प्यो हरो रूपमहाररा[2]शेः" इत्युक्तत्वात् । द्विभागस्याधो द्वौ न्यसेत्, त्रिभागस्याधस्त्रीन्[4] न्यसेत् । सप्तांशस्याधः सप्त । चतुर्भागस्याधश्चतुरः काणान् न्यसेत् । ततः —

"अन्योन्यहाराभिहतौ हरांशौ राश्योः समच्छेदविधानमेवम्"

इति न्यायेन सवर्णीकरणं कार्यम् । तद्यथा — अत्र पञ्चसु स्थानेषूर्ध्वस्थितेषु भागेषु अधःस्थितेषु छेदेषु पूर्वमेकस्य भागस्य छेदेन अ(न्यदृ?न्यं) भागं छेदं च गुणयेत् । तस्य छेदेन पूर्वगुणकारं तस्य भागं च गुणयेत् । तौ समच्छेदौ भवतः । एवं कृतेन समच्छेदेन तृतीयं भागं तच्छेदं च गुणयेत् । तच्छेदेन पूर्वकृतौ समच्छेदौ तदंशौ च पृथक् चतुरोऽपि गुणयेत् । त्रयोऽपि समच्छेदा भवन्ति । एवमितरावपि सवर्णयेत् । अत्र पञ्चसु स्थानेषु स्थितानां समच्छेदानां भागानां च द्वाभ्यामपवर्तनसम्भवात् तस्मिन्नपवर्तने अर्धीकरणे कृते सकलदशाधिपस्य स्वान्तर्दशाभागाश्चतुरशीतिः । अर्धापहारिणो भागा द्विचत्वारिंशत् । त्रिभागापहारिणो भागा अष्टाविंशतिः । सप्त[5]भागापहारिणो भागा द्वादश । चतुर्भागापहारिणो भागा एकविंशतिः । एषां भागानामधःस्थिताश्छेदाश्च पृथक् चतुरशीतिसङ्ख्यास्तुल्याः स्युः । तैः कार्याभावाच्छेदानपहाय पञ्चसु स्थानेषु स्थिता भागा एवात्र गृह्यन्ते । अत उक्तमधश्छेदविवर्जितानीति । उत्तरार्धेन प्रदर्शितैरेभिर्भागैरन्तर्दशानयनत्रैराशिकं प्रति गुणकारभागहारावाह — दशाब्दपिण्डे यथांशं गुणना तदैक्येन छेदः एभिर्दशाप्रभेदो भवति इति सम्बन्धः । यथांशं गुणना इति यस्यान्तर्दशा आनीयते, तस्योक्ता अंशास्तत्र गुणकारा[6]ः । अन्तर्दशापहारिणां यथासम्भवं स्वस्वस्थानगता अंशा गुणकारा इत्यर्थः । तदैक्येन[7] तेषां गुणकारत्वेनोक्तानामंशानामैक्येन ।

---

१. 'तुरश्रभागः', २. 'ह' ग. पाठः. ३. 'यै' ख. पाठः. ४. 'स्त्रीन् । स' ग. पाठः. ५. 'समभा' क. पाठः. ६. 'राः', ७. 'नच्छेद इत्यर्थः । ते' ग. पाठः.

पिण्डीकृतैश्चतुरशीत्याद्युक्तभागैरित्यर्थः । तेषु पिण्डीकृतेषु अक्षरसङ्ख्यया सौन्दर्यमिति भवति, स भागहारः । दशाधिपस्य दशाब्दपिण्डमपहर्तॄणां यथाक्रममुक्तैरक्षरसङ्ख्यया वेदरविहरिप्रियपुत्रसङ्ख्यैः स्वैः स्वैरंशैर्गुणयित्वा तदैक्येन अक्षरसङ्ख्यया सौन्दर्येण विभजेत् । लब्धं स्वस्वदशाप्रभेदा भवन्ति[1] ॥ ४ ॥

अथ दशान्तर्दशाकालविशेषानुक्त्वा तत्र वक्तव्यानां शुभाशुभानां फलानां पुष्टमध्यलघुतावबोधाय दशानामन्वर्थान् संज्ञाविशेषान्[2] (वैतालीये ? औपच्छन्दसिके)नाह —

सम्यग्बलिनः स्वतुङ्गभागे
सम्पूर्णा बलवर्जितस्य रिक्ता ।
नीचांशगतस्य शत्रुभागे
ज्ञेयानिष्टफला दशा प्रसूतौ ॥ ५ ॥

इति । सम्यग्बलिनः दशा सम्पूर्णा इत्यन्वयः । स्थानदिक्कालचेष्टाबलसहितस्य दशा सम्पूर्णासंज्ञा स्यात् । स्वतुङ्गभागे दशापि सम्पूर्णा । निजपरमोच्चांशस्थितस्य[3] दशापि सम्पूर्णा[4] । तुङ्गबलस्य स्थानबलान्तर्भावेऽपि गोबलीवर्दन्यायेन पृथगुपादानात् फलदानं प्रति वैशिष्ट्यं प्रदर्शितम् । अर्थादेव किञ्चिन्न्यूनबलस्य उच्चराशिगतस्य च दशा पूर्णासंज्ञेत्युक्तं भवति । बलवर्जितस्य दशा रिक्ता भवति । नीचांशगतस्य च दशा रिक्ता रिक्तासंज्ञेत्यर्थः । शत्रुभागे दशा अनिष्टफला ज्ञेया । प्रसूताविति सर्वत्र योज्यम् । जननकालग्रहस्थितिवशादेव दशान्तर्दशयोः सम्पूर्णादिसंज्ञाकॢप्तिः[5], न त्वनुभवकालस्थितिवशादिति भावः[6] । अत्र च गार्गिः —

"सर्वैर्बलैरुपेतस्य परमोच्चगतस्य च ।
संपूर्णाख्या दशा ज्ञेया धनारोग्यविवर्धिनी ॥

1. 'न्ति ॥

सम्पूर्णाथवा रिक्ता ततोऽनिष्टफला स्मृता ।
तथावरोहिणी मध्या स्वारोहिण्यधमा तथा ॥
ततो मिश्रफला चेति दशात्राष्टविधा स्मृता ॥ ४ ॥',

2. 'षानाह —' ख. ग. पाठः. 3. 'च्चसंस्थि', 4. 'र्णासंज्ञा स्यात् । तु' ख. पाठः
5. 'प्तिः' क. ग. पाठः. 6. 'वः ॥ ५ ॥ अ' ख. ग. पाठः.

स्वोच्चराशिगतस्याथ किञ्चिद्बलयुतस्य च ।
पूर्णा नाम दशा ज्ञेया धनवृद्धिकरी शुभा ॥
सर्वैर्बलैरपेतस्य नीचराशिगतस्य च ।
रिक्ता नाम दशा ज्ञेया धननाशस्य कारिणी ॥
यः स्यात् परमनीचस्थस्तथारिनवांशके ।
तस्यानिष्टफला नाम दशानर्थविवर्धिनी ॥"

इति ॥ ५ ॥

पुनरपि संज्ञाविशेषानिन्द्रवज्रयाह —

**भ्रष्टस्य तुङ्गादवरोहिसंज्ञा**
**मध्या भवेत् सा सुहृदुच्चभांशे ।**
**आरोहिणी निम्नपरिच्युतस्य**
**नीचारिभांशेष्वधमा भवेत् सा ॥ ६ ॥**

इति । तुङ्गाद् भ्रष्टस्य दशा अवरोहिसंज्ञा स्यादित्यन्वयः । परमोच्चाद् भ्रष्टस्य दशा अवरोहिणीत्यर्थः । सा सुहृदुच्चभांशे मध्या भवेत् । सा तुङ्गभ्रष्टस्य दशा सुहृदुच्चभांशे सुहृद्भे सुहृदंशे उच्चांशे च स्थितस्य मध्या मध्यसंज्ञा । निम्नपरिच्युतस्य दशा आरोहिणी, परमनीचभ्रष्टस्य दशा आरोहिणीसंज्ञा[1] भवति । सा नीचारिभांशेष्वधमा भवेत् ।[2] नीचारिभांशेषु नीचांशे अरिभे अर्यंशे च स्थितस्य अधमसंज्ञा भवति ॥ ६ ॥

पुनरपि संज्ञाविशेषानुपजातिकयाह —

**नीचारिभांशे समवस्थितस्य**
**शस्ते गृहे मिश्रफला प्रदिष्टा ।**
**संज्ञानुरूपाणि फलानि चैषां**
**दशासु वक्ष्यामि यथोपयोगम् ॥ ७ ॥**

इति । शस्ते गृहे नीचारिभांशे समवस्थितस्य दशा मिश्रफला प्रदिष्टा इत्यन्वयः । शस्ते[3] मूलत्रिकोणे स्वक्षेत्रे वा इत्यर्थः । तत्र

१. 'ज्ञा भवतील्य', २. 'ति ॥ ६ ॥' नी' ख. ग. पाठः. ३. 'स्ते स्वमू' क. ग. पाठः.

नीचांशे वा शत्रुक्षेत्रांशे वा अवस्थितस्य ग्रहस्य दशा मिश्रफलासंज्ञा प्रदिष्टा इति । फलानि च संज्ञानुरूपाणि । आसां दशानां फलानि च संज्ञाया अनुरूपाणि । सम्पूर्णायां दशायाम् आरोग्यधनयोः समृद्धिः । पूर्णायामारोग्यधनयोः सद्भावः । रिक्तायामारोग्यधनयोरभावः, रोगदारिद्र्यबाहुल्यमिति यावत् । अनिष्टफलायां देहविषये वा धनविषये वा कष्टफलप्रायत्वं, नात्यन्ताभाव इत्यर्थः । अवरोहिण्यामारोग्यधनयोः क्रमावरोहणम् । मध्यायामवरोहणेऽपि किञ्चिद्वृद्धिः । आरोहिण्यामारोग्यधनयोः क्रमोत्कर्षः । अधमायाम् उत्कर्षे किञ्चिदपकर्षः । मिश्रफलायां त्वारोग्यधनसमृद्ध्योर्व्याधिनैर्धन्ययोश्च देशकालवशान्मिश्रत्वम् । एवं दशान्तर्दशानां संज्ञाविशेषान् निर्दिश्य तत्फलानि च संज्ञानुरूपशब्देन सामान्यतो निर्दिष्टानि । विशेषतश्चैषां ग्रहाणां दशासु यथोपयोगं यथानुभवं वक्ष्यामि, 'सौर्यां स्वमि'त्यादिभिर्वक्ष्यमाणश्लोकैरिति शेषः । वक्तव्यस्य निर्देशं विना वक्ष्यामीति भविष्यन्निर्देशेन यथोक्तदशाफलनिर्देशस्य पुरतो बहु चिन्तनीयमस्तीति द्योत्यते ॥७॥

तत्र लग्न(गता ? )गतं[1] विशेषनिरूपणं[2] वैतालीयेनाह —

> उभयेऽधममध्यपूजिता
> द्रेक्काणैश्चरभेषु चोत्क्रमात् ।
> अशुभेष्टसमा स्थिरे क्रमा-
> द्धोरायाः परिकल्पिता दशा ॥ ८ ॥

इति । लग्नस्वामिदशातुल्यफलत्वेऽप्ययं विशेषः — होरायाः परिकल्पिता दशा उभये द्रेक्काणैः क्रमादधममध्यपूजिता भवति इत्यन्वयः । उभयराशौ लग्नगते तत्प्रथमद्रेक्काणे सति लग्नदशा अधमा, मध्यद्रेक्काणे मध्या[3], अन्त्यद्रेक्काणे पूजिता भवति । तथा चरभेषु उत्क्रमाच्च अधममध्यपूजिता अन्त्यद्रेक्काणे अधमा मध्यद्रेक्काणे मध्या आदिद्रेक्काणे उत्तमा च भवतीत्यर्थः । तथा स्थिरे क्रमादशुभेष्टसमा भवति । स्थिरराशावादिद्रेक्काणे अशुभा मध्यद्रेक्काणे इष्टा उत्तमा अन्त्यद्रेक्काणे समा मध्या भवतीत्यर्थः ॥ ८ ॥

---

१. 'ता' क. पाठः. २. 'णमाह —' ख. ग. पाठः. ३. 'ध्यमा अ' ग. पाठः.

अथ निसर्गदशाक्रमं लग्नदशास्थानं च शार्दूलविक्रीडितेनाह[1] —

**एकं द्वे नव विंशतिर्धृतिकृती पञ्चाशदेषां क्रमा-**
**च्चन्द्रारेन्दुजशुक्रजीवदिनकृद्दैवाकरीणां समाः ।**
**स्वे स्वे पुष्टफला निसर्गसमये पक्तिर्दशायाः क्रमा-**
**दन्त्ये लग्नदशा शुभेति यवना नेच्छन्ति केचित्तथा ॥**

इति । चन्द्रारेन्दुजशुक्रजीवदिनकृद्दैवाकरीणां क्रमात् समा एतावत्यः । चन्द्रस्यैकं, क्रमादित्युक्त्या चन्द्रस्य प्रथममेका समेत्यर्थः । तत आरस्य द्वे समे । ततो बुधस्य नव समाः । अतोऽवगम्यते एते त्रयोऽपि स्तनन्धयादिबालविशेषा इति । ततो द्वादशसमाभ्यः परं शुक्रस्य विंशतिसमा निसर्गदशा । शुक्रो युवेति च द्रष्टव्यम् । ततः परं धृतिः अष्टादश समा गुरोर्निसर्गदशा । गुरुः प्रौढ इति च द्योत्यते । ततः परं कृतिः विंशतिसमा रवेर्निसर्गदशा । रविर्वृद्ध इति च व्यज्यते । ततः सप्ततेः परं पञ्चाशन्मन्दस्य निसर्गदशा । मन्दो वृद्धतमे[2] इति चानुसन्धेयम्[3] । एतेषु निसर्गदशाधिपेषु ग्रहेषु बलवत्सूपचयस्थितेषु तद्दशासु शोभनानि भवन्ति अन्यथा अशोभनानि । एतच्च सर्वथा चिन्त्यम् । स्वे स्वे निसर्गसमये दशायाः क्रमात् पक्तिः पुष्टफला भवति । एवमुक्ते निसर्गदशासमये दशायाः ग्रहाणां सप्तमाध्यायोक्तप्रकारेणोत्पादितायाः पक्तिः पाकः तुल्यकालीना यदि भवति, तदा पुष्टफला भवति । ग्रहाणामायुर्दायोक्तदशा अन्तर्दशा वा स्वे स्वे यथोक्तनिसर्गसमये सम्भवति चेत्, सा सम्पूर्णफला स्यादित्यर्थः[4] । अत्र केचिद् वदन्ति — यथापूर्वविधिना ज्ञाता शुभा सती शुभमत्यर्थं प्रयच्छति, अशुभा सत्यशुभमत्यर्थमिति । एतच्चायुक्तम् । यस्माद् यवनेश्वरः "श्रेष्ठा दशा स्वे वयसि ग्रहस्ये"ति । यवना अन्त्ये लग्नदशा शुभेति वदन्ति । निसर्गदशाया विंशत्यधिकशतप्रमाणाया अन्त्ये परस्ताज्जीवनकाले लग्नदशेति वदन्ति । सा शुभेति च वदन्ति । हयोनामपि[5] द्वात्रिंशदायुः । परमायुषि त्रैराशिकेन निसर्गदशायां कल्पि-

---

१. 'चाह —' ख. ग. पाठः. २. 'र' क. पाठः. ३. 'यम् । स्वे', ४. 'र्थः । यव', ५. 'यादीना' क. ग. पाठः.

तायां परस्ताज्जीवनं दृश्यते चेत्, तत्काले लग्नदशेति यवनमतम्। केचित् तथा नेच्छन्ति। लग्नस्य बलाधिक्ये तद्दशायाः प्राथम्यनिर्देशात्। स्वे स्वे पुष्टफलेत्युक्तनिसर्गदशावैपरीत्ये दशाफलानां केषाञ्चिद् वैकल्यमपि सम्भवतीति द्योत्यते ॥ ९ ॥

दशारम्भकालराशिवशाच्च फलानां विशेषो भवतीति[1] शार्दूलविक्रीडितेनाह—

**पाकस्वामिनि लग्नगे सुहृदि वा वर्गेऽस्य सौम्येऽपि वा**
**प्रारब्धा शुभदा दशा त्रिदशषड्लाभेषु वा पाकपे।**
**मित्रोच्चोपचयत्रिकोणमदगः पाकेश्वरस्य स्थित-**
**श्चन्द्रः सत्फलबोधनानि कुरुते पापानि चातोऽन्यथा ॥**

इति। पाकस्वामिनि लग्नगे[2] अस्य सुहृदि लग्नगते अस्य वर्गे लग्नगते अपि वा सौम्ये लग्नगते प्रारब्धा दशा शुभदा भवतीत्यन्वयः। पाकस्वामिनीति दशापाकपतौ अन्तर्दशापाकपतौ वा। सुहृदि[3] पाकपतेर्मित्रे। वर्गे षड्वर्गाणामेकतमे। सौम्ये शुभग्रहे। लग्नगे[4] दशारम्भकाललग्नस्थिते सति। (प्रारब्धा) दशा मूलदशा वान्तर्दशा वा। शुभदा निरन्तरशुभप्रदा भवतीत्यर्थः। अथवा पाकपे त्रिदशषड्लाभेषु स्थिते सति प्रारब्धा दशा शुभदा इत्यन्वयः। पाकाधिपे दशाप्रारम्भलग्नस्य उपचयस्थिते सति आरब्धापि[5] दशा शुभदा। अर्थादुक्तविपर्ययेऽशुभदा[6] च भवतीति द्रष्टव्यम्। अत्र प्रसक्तस्य[7] शुभाशुभदानस्य कालविशेषं च दशान्तर्दशयोर्वर्तमानकाले पाकाधिपस्योपचयापचयादिराशिविशेषचारिणा चन्द्रेण दर्शयति — मित्रेत्यादि। पाकेश्वरस्य[8] मित्रोच्चोपचयत्रिकोणमदगश्चन्द्रः सत्फलबोधनानि कुरुते इत्यन्वयः। पाकेश्वरः दशापतिः, तस्य मित्रराशौ उच्चराशौ उपचयराशिषु च पञ्चमनवमयोः सप्तमे च स्थितश्चन्द्रः सत्फलानि शुभफलानि बोधयतीत्यर्थः[9]। अतोऽन्यथा पापानि च बोधयति। अतोऽन्यथा पाकेश्वरस्य शत्रुराशौ[10] नीचराशौ उपचयत्रिकोणमदान्यराशिषु स्थितश्चन्द्रोऽशुभफलानि बोधयतीत्यर्थः ॥ १० ॥

१. 'त्याह —' ख. ग. पाठः. २. 'गते अ', ३. 'दि वा पा' ग. पाठः. ४. 'गते द' क. ग. पाठः. ५. 'प्रा' ग. पाठः. ६. 'भा च' ख. पाठः. ७. 'स्य दशासु' ग. पाठः. ८. 'रस्य पाकपतेः मि' क. ग. पाठः. ९. 'र्थः ॥ १० ॥' ग. पाठः १०. 'शौ उ' क. पाठः.

शुभाशुभानुभवकालस्य चन्द्रचारेण निर्देश्यत्वेन दशारम्भे चन्द्रस्थितिरपि निरूपणीयेति शार्दूलविक्रीडितेनाह[1]—

**प्रारब्धा हिमगौ दशा स्वगृहगे सौख्यार्थमानावहा**
**कौजे दूषयति स्त्रियं बुधगृहे विद्यासुहृद्वित्तदा ।**
**दुर्गारण्यपथालया कृषिकरी सिंहे सितर्क्षेऽन्नदा**
**कुस्त्रीदा मृगकुम्भयोर्गुरुगृहे मानार्थसौख्यावहा ॥ ११॥**

इति । हिमगौ स्वगृहगे प्रारब्धा दशा सौख्यार्थमानावहा भवति इत्यन्वयः । चन्द्रे स्वक्षेत्रगते प्रारब्धा दशा ग्रहाणां लग्नस्य च दशा अन्तर्दशा वा सौख्यमर्थं मानं चावहति । यस्य कस्य च ग्रहस्य दशा शुभदाप्यशुभदापि चन्द्रे कर्कटकस्थे प्रारब्धा दशा शुभदैवावबोध्यते पुरुषेणेत्यर्थः । कौजे स्त्रियं दूषयति । चन्द्रे कुजराशिस्थिते प्रारब्धा दशा स्त्रीदोषादनर्थमावहतीत्यर्थः । बुधगृहे विद्यासुहृद्वित्तदा चन्द्रे बुधगृहस्थे प्रारब्धा दशा विद्यां सुहृदो वित्तं च ददाति । सिंहे दुर्गारण्यपथालया दुर्गम् अरण्यं पन्थाश्च दुर्गारण्यपथाः, ते आलयो यस्यां दशायां सा दुर्गारण्यपथालया, कृषिकरी अर्थात् पर्वतारण्यादिषु कृषिं करोति । सिंहस्थिते चन्द्रे प्रारब्धा दशा दुर्गारण्यपथेषु स्थितिं कृषिं करोतीत्यर्थः । सितर्क्षेऽन्नदा । शुक्रराशिस्थे चन्द्रे प्रारब्धा दशा अन्नं ददाति मृष्टाशनं ददाति । मृगकुम्भयोः कुस्त्रीदा । मकरकुम्भयोः स्थिते चन्द्रे प्रारब्धा दशा कुस्त्रीदा, कुत्सितस्त्रीप्रदेत्यर्थः । गुरुगृहे मानार्थसौख्यावहा । गुरुक्षेत्रस्थे चन्द्रे प्रारब्धा दशा अभिमानमर्थं सौख्यं चावहतीत्यर्थः[2] ॥ ११ ॥

अथार्क[3]दशाफलं[4] शार्दूलविक्रीडितेनाह —

**सौर्यां स्वं नखदन्तचर्मकनकक्रौर्याध्वभूपाहवै-**
**स्तैक्ष्ण्यं धैर्यमजस्रमुद्यमरतिः ख्यातिः प्रतापोन्नतिः ।**
**भार्यापुत्रधनारिशस्त्रहुतभुग्भूपोद्भवा व्यापद-**
**स्त्यागः पापरतिः स्वभृत्यकलहो हृत्क्रोडपीडामयाः ॥**

---

१. 'त्याह—' ख. ग. पाठः. २. 'ति ॥' क. ग. पाठः. ३. 'थ द' ग. पाठः. ४. 'लमाह—' ख. ग. पाठः.

इति । सौर्यामेतानि फलानि भवन्तीति सम्बन्धः । सूर्यसम्बन्धिनी दशा अन्तर्दशा च सौरी, तस्यां नखदन्तचर्मकनकक्रौर्याध्वभूपाहवैः स्वम् । नखाः व्याघ्रनखादयः, दन्ता गजदन्तादयः, चर्म अजिनं, कनकं च एतानि चत्वारि विक्रेयद्रव्याणि । एभिर्विक्रीयमाणैरित्यर्थात् सिध्यति । तथा क्रौर्याध्वभूपाहवैश्च । क्रौर्यं क्रूरकर्म । अध्वशब्देन अध्वगमनं लक्ष्यते । भूपैः अर्थात् सेवितैः । आहवः युद्धं, पराक्रम इति यावत् । एभिरष्टाभिर्निमित्तभूतैः स्वम् अर्थार्जनं भवतीत्यर्थः । तथा तैक्ष्ण्यं क्षिप्रकारित्वं, धैर्यम् अध्यवसायादचलनं, शुभाशुभप्राप्तौ हर्षविषादैरनभिभव इत्यर्थः । अजस्रमुद्यमरतिः अनवरतमुत्साहेन प्रीतिः, ख्यातिर्लोकप्रसिद्धिः, प्रतापोन्नतिः दूरादेवारीणां भयजनकत्वं प्रतापः तस्योन्नतिः अप्रतिहतत्वम्, एतानि आदित्यदशायां शुभफलानि । कष्टफलान्याह— भार्यापुत्रधनारिशस्त्रहुतभुग्भूपोद्भवा व्यापदः । भार्यापुत्रधनेभ्योऽन्तरङ्गेभ्यो बहिरङ्गेभ्यश्चारिशस्त्रहुतभुग्भूपेभ्यश्च उद्भवो यासां तथाविधा व्यापदो भवन्ति । तथा त्यागः निःसङ्गता, पापरतिः पापेषु रतिः, स्वभृत्यकलहः स्वभृत्यैः कलहः, तथा हृत्क्रोडपीडामयाः हृदयपीडा क्रोडपीडा जठरामयाश्च ॥ १२ ॥

अथ चन्द्रदशाफलं[3] शार्दूलविक्रीडितेनाह —

**इन्दोः प्राप्य दशां फलानि लभते मन्त्रद्विजात्युद्भवा-**
**नीक्षुक्षीरविकारवस्त्रकुसुमक्रीडातिलान्नश्रमैः ।**
**निद्रालस्यमृदुद्विजामररतिः स्त्रीजन्म मेधाविता**
**कीर्त्यर्थोपचयक्षयौ च बलिभिर्वैरं स्वपक्षेण च ॥ १३ ॥**

इति । इन्दोर्दशामन्तर्दशां वा प्राप्य मन्त्रद्विजात्युद्भवानि फलानि लभते । मन्त्रोद्भवानि ब्राह्मणोद्भवानि च फलानि प्रयोजनानि धनानि लभते । तथा इक्षुक्षीरविकारवस्त्रकुसुमक्रीडातिलान्नश्रमैश्च फलानि लभते । इक्षुविकारा गुडादयः क्षीरविकारा घृतादयः, वस्त्राणि त्वक्फल-

१. 'वैश्च । क्रौ', २. 'नम् । अज', ३. 'लमाह—' ख. ग. पाठः. ४. 'शां प्रा' क. ग. पाठः. ५. 'प्य फलानि मन्त्रद्विजात्युद्भवानि मन्त्रनिमित्तानि द्विजातिनिमित्तानि च लभते । तथा' ख. पाठः. ६. 'मैः इ' क., ७. 'गुडात् क्षी', ८. 'राद् दध्यादिकात् वस्त्रेभ्यः कुसुमेभ्यः क्री' क. पाठः.

कृमिरोमभवानि, कुसुमानि कुङ्कुमचन्दनादीनि, क्रीडा क्रीडादयः, तिलं स्निग्धद्रव्योपलक्षणम् । अन्नम् (ददाति?) ओदनादि,

"सिक्थैर्विरहितो मण्डः पेया सिक्थसमन्विता ।
बहुसिक्था विलेपी स्यादोदनो विगतद्रवः ॥"

कृतान्नादीनि मोदकापूपादीनि च गृह्यन्ते । स्वेदजनकः शरीरव्यायामः श्रमः । एतैश्च धनानि लभत इत्यर्थः । निद्रालस्यमृदुद्विजामररतिर्भवति । निद्रायामालस्ये मृदुषु मार्दवयुक्तेषु जनेषु द्विजामरेषु देवब्राह्मणेषु रतिः प्रीतिः । स्त्रीजन्म स्त्रीप्रसूतिः । मेधाविता धारणावत्त्वं, 'धीर्धारणावती मेधा' इत्यमरः । कीर्त्यर्थोपचयक्षयौ च भवतः । कीर्तेरर्थस्य च उपचयः वृद्धिः, क्षयश्च सम्भवतः । बलिभिर्वैरं बलवद्विग्रहः । स्वपक्षेण च वैरं स्वजनविरोधश्च भवतीत्यर्थः । एवमत्रेष्टानि च कष्टानि च फलान्युक्तानि चन्द्रस्य बलवशेन निर्देष्टव्यानि ॥ १३ ॥

अथ कुजदशाफलं शार्दूलविक्रीडितेनाह—

**भौमस्यारिविमर्दभूपसहजक्षित्याविकाजैर्धनं**
**प्रद्वेषः सुतमित्रदारसहजैर्विद्वद्गुरुद्वेषिता ।**
**तृष्णासृग्ज्वरभङ्गपित्तजनिता रोगाः परस्त्रीष्टता**
**प्रीतिः पापरतैरधर्मनिरतिः पारुष्यतैक्ष्ण्यादि च ॥ १४ ॥**

इति । भौमस्य दशायाम् अरिविमर्दभूपसहजक्षित्याविकाजैर्धनं भवति । अरिविमर्दः शत्रुजयः, भूपः, सहजा भ्रातरः, क्षितिः क्षेत्राणि, आविकम् अविभवं कम्बलादि, अजा मेषाः, एतैर्निमित्तभूतैर्धनम् । कुजस्यानिष्टफलान्याह पादत्रयेण—सुतमित्रदारसहजैः प्रद्वेषः । सुतमित्रकलत्रभ्रातृभिः प्रकर्षेण द्वेषः । विद्वद्गुरुद्वेषिता विदुषो गुरूंश्च द्वेष्टुं शीलमस्येति तथा, तस्य भावः विद्वद्गुरुद्वेषिता । तृष्णासृग्ज्वरभङ्गपित्तजनिता रोगाः । तृष्णा पिपासा, असृक् रक्तं, ज्वरः प्रसिद्धः,

---

१. 'छायास्तिलेभ्योऽन्नात् श्रमाच्च एतेभ्यः सकाशात् शुभदशायां शुभानि फलानि प्राप्नोति । अशुभदशायामशुभानि । स्वभावं दर्शयति — निद्रा', २. 'तिः निद्रारतिः आलस्यरतिश्च मृदुः क्षमावान् द्विजामररतिः द्विजाः ब्राह्मणाः अमराः देवाः एतेषां रतिः भक्तिः, स्त्रीजन्म प्राप्नोति । मेधाविता बुद्धिवृद्धिश्च । की', ३. 'च । शुभदशायां कीर्त्यर्थयोरुपचयः अशुभदशायां कीर्त्यर्थयोः क्षयः । बलिभिः स्वपक्षेण च वैरं प्राप्नोति ॥ १३ ॥', ४. 'भौमद' क. पाठः. ५. 'लमाह —' ख. ग. पाठः. ६. 'क्र' ख. पाठः.

भङ्गः अभिघातः, पित्तं च, एतैर्जनिता रोगाः । परस्त्रीष्टता, अन्यपत्नी-सक्तता, पापरतैः सह प्रीतिः, अधर्मनिरतिः अधर्मेषु हिंसादिषु तात्पर्यम् । पारुष्यतैक्ष्ण्यादि च, पारुष्यं कटुव्यवहारादि तैक्ष्ण्यं नैर्घृण्यादि, एतान्यनिष्टफलानि ॥ १४ ॥

अथ बुधदशाफलं[3] शार्दूलविक्रीडितेनाह —

**बौध्यां दौत्यसुहृद्गुरुद्विजधनं विद्वत्प्रशंसा यशो-**
**युक्तिद्रव्यसुवर्णवेसरमहीसौभाग्यसौख्याप्तयः ।**
**हास्योपासनकौशलं मतिचयो धर्मक्रियासिद्धयः**
**पारुष्यश्रमबन्धमानसरुजा पीडा च धातुत्रयात् ॥**

इति । बौध्यां बुधस्य दशायामन्तर्दशायां वा प्राप्तायामित्यर्थः । दौत्यसुहृद्गुरुद्विजधनं दौत्येन दूतकर्मणा सुहृद्भिः गुरुभिः द्विजैश्च निमित्तभूतैर्धनं भवति । विद्वत्प्रशंसा विद्वद्भिः प्रशंसा । यशोयुक्तिद्रव्यसुवर्णवेसरमहीसौभाग्यसौख्याप्तयः आप्तिशब्दः प्रत्येकमभिसम्बध्यते । यशसः कीर्तेः (आप्तिः?) युक्तिद्रव्यस्य यमलद्रव्यस्य पेटकादेः, सुवर्णस्य, वेसरस्याश्वस्य, मह्याः क्षेत्रस्य, सौभाग्यस्य सकलवल्लभत्वस्य, सौख्यस्य च विषयानुभवजनितस्याप्तयः प्राप्तयो भवन्ति । हास्योपासनकौशलम् । हास्यं प्रहसनव्यवहारः, उपासनं सेवा, तयोः कौशलम् । मतिचयः शास्त्रोपस्कृतबुद्धिवर्धनम् । धर्मक्रियासिद्धयः धर्मकर्माणि तत्फलसिद्धयश्च भवन्ति । चतुर्थपादेनानिष्टफलानि । पारुष्यश्रमबन्धमानसरुजा । पारुष्येण वाग्दोषादिना श्रमेण भारवहनादिजनितेन बन्धेन पारतन्त्र्येण च जनिता मानसरुजा मनस्तापः । धातुत्रयात् पीडा च । धातुत्रयाद् वातपित्तकफैः पीडा च सन्निपातरोगाश्च भवन्तीत्यर्थः । मिश्रदशायामुभयमपि द्रष्टव्यम् ॥ १५ ॥

अथ जीवदशाफलं[4] शार्दूलविक्रीडितेनाह —

**जैव्यां मानगुणोदयो मतिचयः कान्तिः प्रतापोन्नति-**
**र्माहात्म्योद्यममन्त्रनीतिनृपतिस्वाध्याययज्ञैर्धनम् ।**
**हेमाश्वात्मजकुञ्जराम्बरचयः प्रीतिश्च सद्भूमिपैः**
**सूक्ष्मोहागमनैपुणं श्रवणरुग् वैरं विधर्माश्रितैः ॥ १६ ॥**

---

१. 'पनिष्ठैः स', २. 'तिः', पापकृतैरिति पापोपकर्मिभिरित्यर्थः । अ' ख. पाठः.
३. ४. 'लमाह —' ख. ग. पाठः.

इति । जैव्यां[1] जीवस्य दशायामन्तर्दशायां वा । मानगुणोदयः मानस्याभिमानस्य गुणानामधृष्यगुणानामभिगम्यगुणानां च उदय उत्कर्षः । मतिचयः मतिः शास्त्रोपस्कृता बुद्धिः, तस्याश्चयः वृद्धिः । कान्तिः कमनीयता । प्रतापोन्नतिः प्रतापस्य वृद्धिः । माहात्म्योद्यम-मन्त्रनीतिनृपतिस्वाध्याययज्ञैर्धनं[2] भवति । माहात्म्यं महानुभावता, उद्यमो व्यवसायः, मन्त्राः शैववैष्णवाद्यागमप्रसिद्धाः, नीतिः कौट-ल्यकामन्दकीयादिशास्त्रोत्पादिता, नृपतिः राजा, स्वाध्यायः वेदादिः विद्याभ्यासः, यज्ञा अग्निष्टोमादयः, एतैर्धनं भवति । हेमाश्वात्मज-कुञ्जराम्बरचयः । हेम्नः सुवर्णस्य अश्वस्य आत्मजस्य पुत्रस्य कुञ्जरस्य अम्बरस्य वस्त्रस्य च, एतेषां चयः सञ्चयो भवति । सद्भूमिपैः प्रीतिश्च । पूर्वं राजनिमित्तं धनमुक्तम् । इदानीं सद्भूमिपैः प्रीतिः स-द्भिर्भूमिपालैः संमानेनानन्द उच्यते । सूक्ष्मोहागमनैपुणं सूक्ष्माणां दुरवगमानाम् ऊहेषु आगमेषु (च) नैपुणं भवति । शेषेणानिष्टफलम् । श्रवणरुक् कर्णरोगः । विधर्माश्रितैर्वैरं विरुद्धधर्माश्रितैर्विप्रतिपत्तिश्च भवति ॥ १६ ॥

अथ शुक्रदशाफलं शार्दूलविक्रीडितेनाह[3] —

**शौक्र्यां गीतरतिप्रमोदसुरभिद्रव्यान्नपानाम्बर-**
**स्त्रीरत्नद्युतिमन्मथोपकरणज्ञानेष्टमित्रागमाः ।**
**कौशल्यं क्रयविक्रये कृषिनिधिप्राप्तिर्धनस्यागमो**
**वृन्द्यव्याधनिषादधर्मरहितैर्वैरं[4] शुचैः स्नेहतः[5] ॥ १७ ॥**

इति । शुक्रदशायां[6] गीतरतिः गीते गान्धर्ववेदप्रयोगे रतिः प्रीतिः । आगमशब्दः प्रत्येकमभिसम्बध्यते । शौक्र्यां गीतरतिप्रमोद-स्यागमो भवति । गीतं च रतिश्च गीतरती । गीतशब्देन नृत्तवादित्र-योरप्युपलक्षणम् । गीतं गान्धर्ववेदप्रयोग इत्यर्थः । रतिः स्त्रीपुरुष-सम्प्रयोगः वात्स्यायनादिशास्त्रप्रसिद्धचतुष्षष्टिकलात्मकः । ताभ्यां प्रमोदः गीतरतिप्रमोदः । सुरभिद्रव्याणां कर्पूरकस्तूरिकादीनाम्, अन्न-

---

१. 'जीवस्येयं जैवी तस्यां दशा', २. 'हेतुभिर्धनं प्राप्नोति । 'हेमा' ग.पाठः. ३. 'लमाह —' ख. ग. पाठः. ४. 'वृन्दोर्वांशनि' ग. पाठः. ५. 'चिन्नेहिता', ६. 'क्रस्येयं शौक्री, तस्यां द' क. पाठः.

पानयोः रसनेन्द्रियास्वाद्ययोः, अम्बरस्य वस्त्रस्य च, स्त्रियाः कलत्रस्य च, रत्नानां स्वजातिश्रेष्ठानां, द्युतेः कान्तेः, मन्मथोपकरणानां शयनोपधानताम्बूलादीनां च, ज्ञानस्य काव्यनाटकादिज्ञानस्य, इष्टस्य मित्रस्य अभिलषितस्य बन्धोश्च, एतेषामागमः, सम्प्राप्तिः। पौनःपुन्यं द्योतयितुं बहुवचनप्रयोगः। क्रयविक्रये कौशल्यं वाणिज्ये निपुणता। कृषिनिधिप्राप्तिः कृषिकर्मणा निधेश्च धनस्यागमः, अर्थात् क्रयविक्रयाभ्यां कृषिकर्मणा निधिलाभेन च धनागमो भवेद् इत्युक्तं भवति। वन्यव्याधनिषादधर्मरहितैर्वैरम्। वन्या वनचराः, व्याधा लुब्धकाः, निषादा हीनजातयः, धर्मरहिताः पाषण्डादयः, एतैर्वैरं भवति। स्नेहनिमित्ताः शोकाश्च जायन्ते। मिश्रायामुभयमपि भवति॥ १७॥

अथ मन्ददशाफलं[1] शार्दूलविक्रीडितेनाह—

**सौरीं प्राप्य खरोष्ट्रपक्षिमहिषीवृद्धाङ्गनावाप्तयः**
**श्रेणीग्रामपुराधिकारजनिता पूजा कुधान्यागमः।**
**श्लेष्मेर्ष्यानिलकोपमोहमलिनव्यापत्तितन्द्रीश्रमा**
**भृत्यापत्यकलत्रभर्त्सनमपि प्राप्नोति च व्यङ्गताम्॥ १८॥**

इति। सौरीं[2] शनैश्वरसम्बन्धिनीं दशां प्राप्य खरोष्ट्रपक्षिमहिषीवृद्धाङ्गनावाप्तयो भवन्ति। खराणामुष्ट्राणां (पक्षिणां) महिषीणां वृद्धस्त्रीणां च प्राप्तयो भवन्ति। श्रेणीग्रामपुराधिकारजनिता पूजा। बहूनां समानजातीयानां सम्पातः श्रेणी। तस्यामधिकारो नियुज्यते ग्रामे पुरे वा। श्रेण्यधिकारेण ग्रामाधिकारेण पुराधिकारेण च जनिता पूजा। कुधान्यागमः वैरकङ्ग्यामाकादीनामागमः, एतैर्निमित्तभूतैर्धनमित्यर्थः। अनिष्टफलान्याह—श्लेष्मेर्ष्यानिलकोपमोहमलिनव्यापत्तितन्द्रीश्रमा भवन्ति। श्लेष्मणा कफेन ईर्ष्यया अक्षमया अनिलेन वातेन कोपेन अस्थानक्रोधेन मोहेन अज्ञानेन मलिनेन कुत्सितकर्मणा चौर्यादिना व्यापत्तिः उक्तैः कारणभूतैर्जनिता व्यापत्तिश्च। तन्द्री निद्रालस्ययोरन्तरे वर्तते। तस्या लक्षणं—

१. 'लमाह—' ख. ग. पाठः. २. 'रीं द' ख. पाठः. ३. 'माषमुद्गतिलादीना' क. पाठः,

"हृदये व्याकुलीभावो वाक्चेष्टेन्द्रियगौरवम् ।
मनोबुद्ध्यप्रसादश्च तन्द्राया लक्षणं विदुः ॥"

श्रमः देहसादः । एते[1] च सम्भवन्ति । भृत्यापत्यकलत्रभर्त्सनमपि[2] भृत्येभ्यः[3] अपत्येभ्यः कलत्रेभ्यश्च भर्त्सनं[4] तर्जनं[5] प्राप्नोति[6] । व्यङ्गतां[7] च व्याध्यादिनाङ्गच्छेदं च प्राप्नोति ॥ १८ ॥

[8]अथ दशाफलानां विषयविभागार्थं लग्नदशा(फला)र्थं च उपजातिकामाह —

**दशासु शस्तासु शुभानि कुर्व-**
**न्त्यनिष्टसंज्ञास्वशुभानि चैव ।**
**मिश्रासु मिश्राणि दशाफलानि**
**होराफलं लग्नपतेः समानम् ॥ १९ ॥**

इति । शस्तासु दशासु[9] शुभानि कुर्वन्ति इत्यन्वयः[10] । सम्पूर्णापूर्णारोहिणीसंज्ञास्वेव शुभानि कुर्वन्ति । अनिष्टसंज्ञास्वशुभानि कुर्वन्ति । अनिष्टसंज्ञासु रिक्तानिष्टफलावरोहिण्यधमासु । मिश्रासु मिश्राणि दशाफलानि कुर्वन्ति । मिश्रासु मध्यामिश्रफलासंज्ञासु । मिश्राणि शुभफलानि अशुभफलानि च सङ्कीर्यमाणानि कुर्वन्तीत्यर्थः । होराफलं लग्नपतेः समानम् । होरा[11] लग्नं तत्फलं तद्दशाफलं लग्नपतेर्दशाफलेन समानम् । लग्नपतेः लग्नाधिपग्रहोक्तफलवत् शुभमशुभं मिश्रं वा । एतदुक्तं भवति — लग्नाधिपदशाफलवत् लग्नदशाफलमिति । एवं योगारिष्टा उक्ताः । तेषां भङ्गा अमी प्रोक्ताः । तथाच सारावल्याम् —

"प्रवेशे बलवान् खेटः शुभैर्वा स[12]न्निरीक्षितः * ।
†सौम्यादिमित्रवर्गस्थो मृत्युकृन्न भवेत् तदा ॥
अन्तर्दशाधिनाथस्य विबलस्य दशा यदा ।
बलिनः स्यात् तदा भङ्गो दशारिष्टस्य तद् ध्रुवम् ॥

१. 'एतान् प्राप्नोति । भृ' क. पाठः. २., ३. 'न', ४. 'ण भ', ५. 'कुत्सनं', ६. 'ति च । ', ७. 'ताम् अङ्गवैकल्यं च', ८. 'एवं पृथक् पृथगुक्तानामिष्टफलानामनिष्टफलानां च निर्देशं प्रति विषय(वि)भागं दर्शयति — द' ख. पाठः. ९. 'सु सर्वे ग्रहाः शुभानि फलान्येव कु', १०. 'यः । श्लोके यानि शुभान्यभिहितानि तान्येव कुर्वन्ति, नेतराणि । अनिष्टसंज्ञासु अशुभान्येव, नेतराणि । मिश्रासु दशाफलानि मिश्राणि कुर्वन्ति शुभान्यशुभानि च । एतच्च प्रतिसूत्रं व्याख्यातम् । होरा', ११. 'राफलं लग्नदशाफलं लग्नपतेः लग्ना', १२. 'नि' क. पाठः.

* 'सुनिरीक्षतः' इति, † 'सौम्याधिमित्रवर्गस्थ' इति च मुद्रितसारावलीपाठः ।

युद्धे च विजितो योऽसौ खे[1]चरः स शुभो यदि ।
दशायां न भवेत् कष्टं * स्वोच्चादिशुभसंस्थिते ॥"

इत्यादि[2] । लग्नदशाफलस्य लग्नपतिदशाफलतुल्यत्वे विशेषः पूर्वं चरादिषु द्रेक्काणवशेन प्रदर्शितः । एवं ग्रहाणां लग्नस्य च दशाफलानि संक्षेपेणोक्तानि दशासु प्रदर्शितानि । अन्तर्दशानां पृथक् फलविशेषानुक्त्या "अर्धमपहृत्य ददाति तु स्वमि"त्यत्रापहारेऽपि स्वफलप्रदानस्योक्त्या च अन्तर्दशाफलमपि स्वस्वमूलदशाफलतुल्यमित्युक्तं भवति । तथापि मूलदशान्तर्दशयोराधाराधेयत्वसम्भवान्मूलदशाधिपस्य धातुत्वेऽन्तर्दशाधिपस्य जीव(ग्रह ?)त्वे च सति धातुकृतो जीवसम्भवो वक्तव्यः । विपर्यये जीवधातुर्वक्तव्यः । एवं मूलधातुर्वा धातुमूलं वा मूलजीवो जीवमूलं वा तेषां कर्म वा भोगो वा विनाशो वा भवतीति यथालक्षणं विमृश्य वक्तव्यम् ॥ १९ ॥

एतत्प्रदर्शनायाह —

‡संज्ञाध्याये यस्य यद् द्रव्यमुक्तं
कर्माजीवे यस्य यच्चोपदिष्टम् ।
भावस्थानालोकयोगोद्भवं य[3]त्
तत्तत् सर्वं तस्य योज्यं दशायाम् ॥ २० ॥

इति । संज्ञाध्याये यस्य यद् द्रव्यमुक्तं, यस्य ग्रहस्य यद् द्रव्यं ताम्रादि,

"चन्द्रारोरगसौरैर्धातुर्मूलं किलार्कशुक्राभ्याम् ।
जीवो जीवबुधाभ्यां मेषाश्विन्यादि धा(त्वम ? त्वा) द्याः ॥"

इत्याद्यन्यशास्त्रेषु विस्तरेणोक्तं च अत्र यस्य यद् द्रव्यमित्यनेन विवक्षितम् । तत्सर्वं तस्य दशायां योज्यं योजनीयम् । तथा कर्माजीवे च यस्य यदुपदिष्टं, कर्मेति शेषः । भावस्थानालोकयोगोद्भवं च भावैर्लग्नादिभिः स्थानैर्मेषादिभिरालोकेन दृष्ट्या योगेन ग्रहयोगेन उद्भूतानि च फलानि तत्तत् सर्वं तस्य दशायां योज्यमिति सम्बन्धः । तथा

१. 'ख' ख. पाठः. २. 'दि । अथ दशाचिन्तने विशेषं दर्शयति — सं' क. पाठः. ३. 'च त' ख. पाठः.

* 'स्वोच्चादिषु च संस्थितः' इति मुद्रितसारावलीपाठः. ‡ क. पाठे अस्य श्लोकस्य समनन्तरश्लोकानां चाध्यायपरिसमाप्तिपर्यन्तं व्याख्यानं सर्वं भिन्नप्रस्थानं दृश्यते ।

भावोद्भवं "शूरः स्तब्धो विकलनयनः" इत्येवमादि च, तथा स्थानोद्भवं "कुलसमकुलमुख्य" इत्येवमादि "प्रथितश्चतुरोऽटन" इत्यादि च, य(च?चा)लोकोद्भवं फलं "चन्द्रे भूपबुधावि"त्यादि, तथा योगोद्भवानि "एकस्थैश्चतुरादिभिः" इत्यादिवक्ष्यमाणानि च दशासु योजनीयानीत्यर्थः। योगकर्तृग्रहाणां बहुत्वे तेषां मध्ये यो बलवान् तस्य दशायां योज्यमिति भावः। नाभसयोगास्तु सकलदशास्वपि फलप्रदाः। वक्ष्यति च — "इति निगदिता योगाः सार्धं फलैरिह नाभसा नियतफलदाश्चिन्त्याश्चैते समस्तदशास्वपी"ति ॥ २० ॥

देशाकालोपभोग्यानां कर्मभोगविनाशविषयाणां वस्तुविशेषाणां पाञ्चभौतिकानाम् इयत्तानिर्णयाय ग्रहाणां स्वस्वभूतगुणव्यञ्जकत्वं दर्शयति —

**छायां महाभूतकृतां च सर्वे-**
**ऽभिव्यञ्जयन्ति स्वदशामवाप्य।**
**कम्ब्वग्निवाय्वम्बरजान् गुणांश्च**
**नासास्यदृक्त्वक्छ्रवणानुमेयान् ॥ २१ ॥**

इति। सर्वे ग्रहाः स्वदशामवाप्य[1] स्वां महाभूतकृतां छायां च अभिव्यञ्जयन्ति इत्यन्वयः। स्वामिति "शिखिभूखपयोमरुद्गणानां वशिनो भूमिसुतादयः" इति ह्युक्तं कुज आग्नेयीं बुधः पार्थिवीं गुरुर्नाभसीं भृगुराप्यां शनिर्वायवीं च छायां स्वदशाकाले पुरुषस्य अभिव्यञ्जयन्ति अभिमुखेन यथावद् व्यञ्जयन्ति। अत्र सर्वशब्दादादित्यचन्द्रावपि गृह्येते। ननु तयोर्महाभूताधिपतित्वं नोक्तम्। नैष दोषः। आदित्यचन्द्रौ वह्न्यम्ब्वात्मकौ प्रसिद्धावेव। अतस्तावपि वह्न्यम्भसोरधिपती, न केवलं भौमसितावेव। ततश्चाग्नेयीं छायां रविकुजावभिव्यञ्जयतः। छायामिति। छाया कान्तिविशेषः। "वर्णमाक्रामतिच्छाया" इत्युक्तलक्षणा छायात्र गृह्यते। तथाचोक्तं वाहटेन—

"खादीनां पञ्च पञ्चानां छाया विविधलक्षणाः।
नाभसी निर्मला नीला सस्नेहा सप्रभेव च ॥
वातजा रुचिरा श्यामा भस्मरूक्षा हतप्रभा।
विशुद्धरक्ता त्वाग्नेयी दीप्ताभा दर्शनप्रिया ॥

१. 'ह्ये', २. 'अथ शरीरच्छायादर्शनेन ग्रहदशाज्ञानार्थमिन्द्रवज्रामाह — छा',
३. 'प्य म' क. पाठः.

शुद्धवैडूर्यविमला सुस्निग्धा तोयजा शुभा ।
स्थिरा स्निग्धा घनश्यामा शुद्धा श्वेता च पार्थिवी ॥"

इति । छायालक्षणम् आचार्येणापि संहितायामुक्तं —

"छाया शुभाशुभफलानि निवेदयन्ती
लक्ष्या मनुष्यपशुपक्षिषु लक्षणज्ञैः ।
तेजोगुणान् बहिरपि प्रतिभासयन्ती
दीपप्रभा स्फटिकरत्नघटस्थितेव ॥"

स्निग्धद्विजत्वङ्नखरोम*केशच्छाया सुगन्धाथ महीसमुत्था ।
तुष्ट्यर्थलाभाभ्युदयान् करोति धर्मस्य चाहन्यहनि प्रवृद्धिम् ॥

स्निग्धा सिता सहरिता नयनाभिरामा
सौभाग्यमार्दवसुखाभ्युदयान् करोति ।
सर्वार्थसिद्धिजननी जननीव चाप्या
छाया शुभा तनुभृतां फलमादधाति ॥

चण्डा §धृष्टा पद्महेमाग्निवर्णा युक्ता तेजोविक्रमैः सप्रतापैः ।
आग्नेयी च प्राणिनां स्याज्जयाय क्षिप्रं सिद्धिं वाञ्छितार्थस्य धत्ते ॥

मलिनपरुषकृष्णा पापगन्धानिलोत्था
जनयति वधबन्धव्याध्यनर्थार्थनाशान् ।
स्फटिकसदृशरूपा भाग्ययुक्ताप्युदारा
निधिरिव गगनोत्था ‡श्रेयसे स्वच्छवर्णा ॥"

क्ष्म्बग्निवाय्वम्बरजान् गुणान् गन्धरसरूपस्पर्शशब्दलक्षणांश्च यथाक्रमं नासास्यदृक्त्वक्छ्रवणानुमेयान् अभिव्यञ्जयन्ति । अत्रास्यशब्देन जिह्वेन्द्रियं विवक्ष्यते । बुधस्य दशायां बलवद्बुधराशिगतस्यान्यस्य दशायां वा बलवद्बुधयुक्तेक्षितस्य दशायां वा नासानुमेयद्रव्यलब्धिः । तथा शुक्रस्य दशायां जिह्वानुमेयगुणानां सम्भवो निर्देश्यः । इत्यादि द्रष्टव्यम् । यस्य जातकमगणितं, तस्य शरीरच्छायां दृष्ट्वा वर्तमानग्रहदशा ज्ञातव्येत्येतदाह — यदा स्वयं सुगन्धः पुरुषो भवति स्रक्चन्दनानुलेपनसुरभिद्रव्यवांश्च, तदा तस्य पार्थिवी बुधकृता छाया ज्ञेया । यदा मधुराम्लादिमृष्टरसभोजी, तदा तस्य चन्द्र-

* 'केशाश्छाया' इति, § 'धृष्या' इति, ‡ 'श्रेयसां' इति च मुद्रितसंहितापाठः ।

शुक्रकृताप्या ज्ञेया छाया । यदा च रूपवान् दर्शनीयो भवति तदादित्याङ्गारकयोरन्यतरकृताग्नेयी छाया ज्ञेया । यदा स्पर्शने मृदुर्भवति स्त्रीस्तनस्पर्शनाद्यभिरतश्च, तदा शनैश्चरकृता वायवी छाया । यदा च वचनं पुरुषस्य कर्णसुखकरं भवति स्वयं गीतवादित्रश्रोत्रसुखकाव्यकथाव्याख्यानाद्यभिरतश्च, तदा तस्य जीवकृता नाभसी छाया ज्ञेयेति । एवं सर्वे ग्रहाः स्वां स्वां दशां शुभामशुभां वावाप्य छायां स्वस्वामिकपृथिव्यम्ब्वादिमहाभूतसमुत्थां घ्राणरसनाद्यवगतगन्धरसाद्यनुमेयां यथोक्तलक्षणां पुरुषेऽभिव्यञ्जयन्ति । तया तद्ग्रहदशा वर्तत इत्यवगन्तव्यम् ॥ २१ ॥

दशाकाले फलभोक्तुः पुरुषस्यावस्थां दर्शयति[2] —

**शुभफलददशायां तादृगेवान्तरात्मा**
**बहु जनयति पुंसां सौख्यमर्थागमं च ।**
**कथितफलविपाकैस्तर्कयेद् वर्तमानां**
**परिणमति फलोक्तिः स्वप्नचिन्तास्ववीर्यैः ॥ २२ ॥**

इति । शुभफलददशायां पुंसामन्तरात्मा तादृगेवेत्यन्वयः । शुभफलदस्य ग्रहस्य दशायां तद्वत्पुरुषस्यान्तरात्मा तादृक्, यादृशो ग्रहः शुभफलं ददाति तादृशः । रविशीतगू चेद् राजसदृशः, क्षितिसुतश्चेन्नेतृसदृशः, इत्यादि । बहु सौख्यमर्थागमं च जनयति । तत्सदृशं सौख्यं तत्सदृशमर्थागमं च बहु भूरि जनयति । पौरुषमुत्पादयतीत्यर्थः । अर्थादेवाशुभफलददशायां तदधमैः सादृश्यं दुःखमर्थक्षयं बहु जनयतीत्युक्तं भवति । अतएव कथितफलविपाकैर्नखदन्तादिनिमित्तधनागमादिभिः कथितैः शुभफलविपाकैः तथा भार्यापुत्रनिमित्तव्यापदुद्भवादिभिरनिष्टफलविपाकैर्हेतुभिः सूर्यस्य दशां वर्तमानां तर्कयेत् धूमवत्त्वेन हेतुनाग्निमत्त्वमिवानुमानेन तर्कयेत् कल्पयेदित्यर्थः । किं धूमाग्न्योरिव दशाफलदशयोर्नियता व्याप्तिरित्यत्राह — परिणमति फलोक्तिरिति । उक्तानां फलानामवश्यभावित्वमस्तीति सर्वीर्यैः

१. 'नू नटनर्तकगणकं व्येक्षमाणाभ्यासी च (?) तदा सूर्यभौमकृताग्नेयी छाया । य' ख. पाठः. २. 'अथ दशायामन्तरात्मनः स्वरूपं(शा ? मा)लिन्याह' क. पाठः.

वीर्यशालिभिः ग्रहैरुक्तानि फलानि परिणमन्त्येव, अवीर्यैः वीर्यशून्यैः ग्रहैरुक्तानि फलानि स्वप्नेषु वा चिन्तासु वा परिणमन्तीत्यत्र विशेषो द्रष्टव्यः । बलवद्भिर्ग्रहैः फलानां साक्षादनुभवः परिणमति । बलशून्यैः स्वप्नेन वा मनोराज्येन वा अनुभवः परिणमतीति नियमात् फलानुभवेन ग्रहदशानुमानं सम्भवत्येव ॥ २२ ॥

[1] यद्येवं फलानामवश्यानुभवनीयत्वं नियतं, तर्हि महान् सङ्कटः । मेषलग्नजातस्य वृषभस्थे कुजे लग्नाधिपत्वेन धनवृद्धिकरत्वमष्टमाधिपत्वेन धनहानिकरत्वं च युगपत् सम्भवतः इत्यादिषु कथं निर्वाह इत्यत्राह—

> एकग्रहस्य सदृशे फलयोर्विरोधे
> नाशं वदेद् यदधिकं परिपच्यते तत् ।
> नान्यो ग्रहः सदृशमन्यफलं हिनस्ति
> स्वां स्वां दशामुपगताः स्वफलप्रदाः स्युः ॥ २३ ॥

इति । एकग्रहस्य सदृशे फलयोर्विरोधे नाशं वदेदित्यन्वयः । एकस्य ग्रहस्य केनापि निमित्तेन वृद्धिकरत्वम् अन्येन निमित्तेन हानिकरत्वं च सम्भवति चेत्, सदृशो विरोधः । तत्र तयोः फलयोर्नाशं वदेत् । तस्य भावस्य वृद्धेर्हानेर्वा नाशम् अदर्शनं वदेदित्यर्थः । तेन ग्रहेण तस्य भावस्य वृद्धिर्वा हानिर्वा न वक्तव्येति यावत् । एवं परस्परबाधया फलसम्भवाभावे वक्तव्येऽपि विशेषमाह—यदधिकं तत् परिपच्यते इति । तयोरेकं प्रति राश्यंशकयोगेक्षणादिभिः कारणैराधिक्यमस्ति चेत् तत्फलं परिपच्यते दृश्यते इति यावत् । आधिक्येन परि[illegible] । तत्र [illegible]ऽपि तारतम्यं वक्तव्यमिति द्योत्यते । एकग्रहस्य [illegible]ह्माण्डकटाहभित्तिव्याप्तत्वनिर्देशेन कुत्र लग्नकक्ष्येति ज्ञानासम्भवः । फलकथनाय लग्नकक्ष्यास्थानमवश्यं वेदितव्यं च । अतस्तन्निर्धारणाय लग्नस्यान्ते निर्देशः कृत इति वेदितव्यम् । अतो राशीनामष्टधा विभागे पादोनचतुर्भागात्मके प्रथमो भागः शनैश्चरकक्ष्या । द्वितीयः सुरगुरुकक्ष्या । तृतीयो भौमकक्ष्या । चतुर्थः सूर्यकक्ष्या । पञ्चमः शुक्रकक्ष्या । षष्ठो बुधकक्ष्या । सप्तमश्चन्द्रकक्ष्या । अष्टमः पादोनचतुर्भागात्मको राशिभागो लग्नकक्ष्येति सर्वेषु राशिषु द्रष्टव्यम् । एवं द्वादशसु राशिषु अष्टधा विभक्तेषु षण्णवतिप्रमाणाः कक्ष्या भवन्ति । तत्रार्कः

स्वदशायामधर्मनिरतेषु प्रीतिं जनयति । गुरुः स्वदशायामधर्मनिरतेषु वैरं जनयति इत्यादि स्वस्वदशाकालभोग्यत्ववशात् सदृशग्रहविरोधेऽपि अविरोधेन फलं वक्तव्यमित्यर्थः । एष न्यायः वस्तुनिर्देशप्रकरणेऽपि । राश्यंशकयोगेक्षणादिभिः वस्तूनां विशेषनिरूपणे स्वरूपवर्णगुणादिषु परस्परविरोधप्राप्तावेवमेव न्याय इति सूच्यते ॥ २३ ॥

इति होराविवरणेऽष्टमोऽध्यायः ॥

---

## अथ नवमोऽध्यायः ।

दृढकर्मोपार्जितस्य दशान्तर्दशादिविषयस्य शुभाशुभविशेषस्य कालविशेषानुपदिश्येदानीमदृढकर्मनिबन्धनस्य गोचरफलस्वरूपस्य शुभाशुभविपाकस्य कालविशेषान् प्रदर्शयितुमष्टकवर्गमाह—'स्वादर्क' इत्यादिभिः सप्तभिः श्लोकैः । शनैश्चरसुरगुरुभौमार्कशुक्रबुधचन्द्रलग्नात्मकस्याष्टकस्य जननकाले येषु राशिषु स्थितिः, तेभ्योऽष्टभ्योऽप्यारभ्य राशिद्वादशके चरतां ग्रहाणां सप्तानां यत्र यत्र राशौ चारकाले शुभप्रदत्वं भवति, तेषां स्थानानां वर्गः समुच्चयोऽष्टकवर्गशब्देनोच्यते । अर्थादेव चारकालेऽनुक्तराशिषु स्थितानामशुभप्रदत्वं चोक्तं भवति । वक्ष्यति च — "इति निगदितमिष्टं नेष्टमन्यदि"ति । तत्र प्रथममादित्यस्याष्टकवर्गं शार्दूलविक्रीडितेनाह —

**स्वादर्कः प्रथमायबन्धुनिधनद्व्याज्ञातपोद्यूनगो**
**वक्रात् स्वादिव तद्वदेव रविजाच्छुक्रात् स्मरान्त्यारिषु ।**
**जीवाद् धर्मसुतायशत्रुषु दशत्र्यायारिगः शीतगो-**
**स्तेष्वेवान्त्यतपस्सुतेषु च बुधाल्लग्नात [illegible] ॥**

[illegible] । तिर्यङ्नन्दोर्ध्वविश्वं तिर्यग्रूपा रेखा नव ऊर्ध्वरूपा रेखास्त्रयोदश च यथा भवन्ति तथा । गिरिगिरिशपदं चक्रं, पदशब्देन तिर्यगूर्ध्वयो रेखयोः सम्पात उच्यते । गिरयः सप्त गिरिशा एकादश । अक्षरसंख्यया सङ्कटप्रमाणानि पदानि यस्य तद् गिरिगिरिशपदं चक्रम् एवं कृते षण्णवतिकोष्ठानि भवन्ति । तदूर्ध्वे चक्रस्योपरितनकोष्ठपङ्क्तयाम् । लग्नाद्या राशयो ज्ञेयाः स्युः । मेषादित्वनिषेधार्थं लग्नाद्या इत्युक्तम् । तेषु केषुचिद् ग्रहयुक्तेषु ग्रहाः फलदाः । शिष्टम् इष्टस्य सद्म शिष्टं स्थानम् इष्टस्य ग्रहस्य भवनम् । अतस्तेषु राश्यधिपाः फलदा इत्यर्थः ।

भावाश्रितफलं पूर्वं भावाधिपफलं पुनः ।
ग्रहयुक्तेषु वक्तव्यं शिष्टे भावाधिपात् फलम् ॥

स्वाधिष्ठितराशेरारभ्य यथोक्तराशिषु स्वकीयकक्ष्याचारकाले शुभं द-दाति, अनुक्तराशिषु स्वकीयकक्ष्याचारकालेऽशुभं च ददाति । तथा वक्राधिष्ठितराशेरारभ्य यथोक्तराशिष्वात्मनो वक्रकक्ष्याचारकाले शुभं ददाति, अनुक्तराशिष्वशुभं च ददाति । एवमष्टास्वपि कक्ष्यासु तत्तत्कक्ष्याधिपस्थितराशेरारभ्य यथोक्तराशिषु तत्तत्कक्ष्यायां चरन् शुभं ददाति, अनुक्तकक्ष्यास्वशुभं च ददाति । एवं[1] द्वादशसु मासेषु षण्णवतिफलानि कक्ष्याचारवशाद् निर्देश्यानि । तथा चन्द्राष्टकवर्गेण सप्तविंशतिनक्षत्रात्मके चन्द्रपर्यये[2] किञ्चिदूनसप्तदशनाडिकात्मकचन्द्र-कक्ष्याचारवशात् षण्णवतिफलानि निर्देश्यानि । एवमर्कचारवशाच्चन्द्र-चारवशाच्च गोचरफलानि कुशाग्रीयधिया यथास्वकालं तत्र तत्र व-क्तव्यानि । अत्राष्टकवर्गे कक्ष्याचारफलसुखावबोधाय तत्प्रस्तारोऽव-गन्तव्यः । तद्यथा —

"तिर्यग्[3]विश्वोर्ध्वनन्दं गिरिगिरिशपदं न्यस्य चक्रं तदूर्ध्वे
लग्नाद्या राशयः स्युर्ग्रहगणसहिताः शिष्टमिष्टस्य सद्म ।
तस्याधः सौरिमुख्यं ग्रहगणमु[4]दयं चापि कक्ष्याक्रमेण
प्रस्तार्ये[5] स्व[6]स्वचक्रे[7] लिख फलपदभागाष्टके बिन्दुरेखाः ॥"

अस्यार्थः[8] — तिर्यग्विश्वोर्ध्वनन्दं चक्रं न्यस्य इत्यन्वयः । न्यस्येति

---

१. 'वं च द्वा' ग. पाठः. २. 'र्या' ख. ग. पाठः. ३. 'र्यङ्नन्दोर्ध्वविश्वं गि', ४. 'मुपरि न्यस्य क', ५. 'र्यां:', ६. 'स', ७. 'के सदहितफलभा', ८. 'र्थः — तिर्यङ्नन्दोर्ध्वविश्वं गिरिगिरिशपदं चक्रं न्यस्य । न्यस्येति ल्यबन्तं वा लोटि परस्मैपदमध्यमपुरुषैकवचनं वा भवतु । ल्यबन्तत्वे राशयो ज्ञेयाः स्युरित्यध्याहार्येण ज्ञेय-शब्देन सम्बन्धः । लोट्पक्षे शिष्यं प्रति विधिः । तिर्यङ्नन्दोर्ध्वविश्वं तिर्यग्रूपा रेखा नव ऊर्ध्वरूपा रेखास्त्रयोदश च यथा भवन्ति तथा । गिरिगिरिशपदं चक्रं, पद-शब्देन तिर्यगूर्ध्वयो रेखयोः सम्पात उच्यते । गिरयः सप्त गिरिशा एकादश । अक्षरसंख्यया सङ्कटप्रमाणानि पदानि यस्य तद् गिरिगिरिशपदं चक्रम् एवं कृते षण्णवतिकोष्ठानि भवन्ति । तदूर्ध्वे चक्रस्योपरितनकोष्ठपङ्क्तयाम् । लग्नाद्या राशयो ज्ञेयाः स्युः । मेषादित्वनिषेधार्थं लग्नाद्या इत्युक्तम् । तेषु केषुचिद् ग्रहयुक्तेषु ग्रहाः फलदाः । शिष्टम् इष्टस्य सद्म शिष्टं स्थानम् इष्टस्य ग्रहस्य भवनम् । अतस्तेषु राश्यधिपाः फलदा इत्यर्थः ।

भावाश्रितफलं पूर्वं भावाधिपफलं पुनः ।
ग्रहयुक्तेषु वक्तव्यं शिष्टे भावाधिपात् फलम् ॥

निपूर्वादस्यतेः लोटि मध्यमपुरुषैकवचनं, निधेहीत्यर्थः। तिर्यग्विश्वे तिर्यग्विश्वीनास्त्रयोदश रेखा ऊर्ध्वनन्दा अध ऊर्ध्वा नव रेखा यथा भवन्ति, तथा चक्रं निधेहीति शिष्यं प्रति गुरोरुक्तिः । गिरिगिरिशपदमिति चक्रस्य विशेषणम् । गिरयः सप्त । गिरिशा एकादश । पदशब्देन तिर्यगूर्ध्वयो रेखयोः सम्पात उच्यते। गिरिगिरिशसङ्ख्यानि पदानि यस्येति बहुव्रीहिः । सप्तदशाधिकशतसङ्ख्यैस्तिर्यगूर्ध्वरेखासम्पातैर्युक्तमित्यर्थः। (तथाकृते चक्रे?)। तथाकृतस्य चक्रस्योर्ध्वे तदूर्ध्वे। लग्नाद्या राशयः स्युः। अध ऊर्ध्वाः लग्नादयो द्वादश राशयो भवेयुः। कीदृश राशयः । ग्रहगणेन सहिताः चारवशात् सम्प्राप्तैः सूर्यादिभिर्ग्रहैः सहिताः । शिष्टमिष्टस्य सद्म । शिष्टं ग्रहगणरहितमित्यर्थः । तदिष्टस्य ग्रहस्य सद्म, क्षेत्रमिति वेदितव्यम् । फलनिरूपणे राशीनां ग्रहयोगे सति ग्रहेण फलं वक्तव्यं, ग्रहाभावे राश्यधिपेन फलं वक्तव्यमित्यर्थः । इति पूर्वार्धेन चक्रविन्यासः प्रदर्शितः । तत्र चक्रे अध

---

इति वचनादत्र चक्रे उपरि कोष्ठद्वादशकं लग्नकक्ष्येत्युक्तं भवति । तस्याधः सौरि मुख्यं शनैश्चरादिकं ग्रहगणं कक्ष्याक्रमेणोपरि न्यस्य तस्य लग्नकक्ष्याकोष्ठद्वादशकस्याधः सप्त कोष्ठद्वादशकानि सन्ति । तेषामधस्तने कोष्ठे सौरिं तत उपरितने गुरुं तत उपरितने भौमं तस्मादर्कं ततः शुक्रं ततो बुधं तत उपरितने चन्द्रं च न्यस्येत्यर्थः । एवं कृत्वाष्टकवर्गोदितसदहितफलभागाष्टके बिन्दुरेखाः प्रस्तार्या इत्यन्वयः । सदहितफलभागाष्टके सत्फलान्युक्तस्थानानि अहितफलानि अनुक्तस्थानानि एवंरूपाणामुक्तानुक्तानां भागानामष्टके सस्वचक्रे स्वचक्रेण सहिते स्वस्वकक्ष्याचक्रसहिते । लग्नादिद्वादशराशिषु पादोनचतुर्भागात्मका आदिमा अक्षरसंख्यया शुभाङ्कप्रमाणा अष्टमभागाः सौरिकक्ष्या । तथा द्वितीयाष्टमभागाः सुरगुरुकक्ष्या इत्यादि द्रष्टव्यम् । अतः सस्वचक्रे भागाष्टके इत्युक्तम् । बिन्दुरेखाः, यत्र सत्फलं तत्र बिन्दुर्निक्षेप्यः । यत्राहितफलं तत्र रेखा च निक्षेप्या । अत्र प्रस्तारे अर्कस्य स्वकक्ष्यायां स्वाधिष्ठिताद् राशेरारभ्य प्रथमायबन्धुनिधनद्व्याज्ञातपोयूनेषु बिन्दुर्निधातव्यः । तृतीयपञ्चमषष्ठव्ययेषु रेखा निधातव्या । वक्रात् स्वादिवेति । वक्रकक्ष्यायां वक्राधिष्ठितराशेरारभ्य यथोक्तानुक्तस्थानेषु बिन्दुरेखाः कर्तव्याः । एवमन्यास्वपि कक्ष्यासु यथोक्तबिन्दुरेखाविन्यासः कर्तव्यः एवं प्रस्तारविधिः । एवं सप्तानां ग्रहाणामपि प्रस्तारः कर्तव्यः । अत्र पृथक् पृथक् कक्ष्यासु ग्रहचारेण फले वक्तव्ये कक्ष्याधिपवशात् कक्ष्यास्थग्रहवशाच्च तत्रस्थषड्वर्गवशाच्च निरीक्षकग्रहवशाच्च फलविशेषा वक्तव्याः । बलाबलविशेषाद् ऊहापोहपटुभिरनवरतमाराधितनिजेष्टदेवतागुरुभिरवधानपरैर्दैवज्ञैरेवमष्टकवर्गविधानेन गोचरफलानि नियतविषयैर्दशान्तर्दशाफलैः सह यथोक्तकालविशेषेषु निर्देष्टव्यानि ॥ १ ॥ च' क. ग. पाठः,

ऊर्ध्वस्थिताः लग्नात् प्रभृति द्वादश राशयः कल्प्याः । पुनरेकैकत्र राशौ तिर्यक्स्थिताः पादोनभचतुष्कप्रमाणाः शुभाङ्गादिवाक्यैरवगन्तव्या अष्टावष्टौ कोष्ठाः सम्भवन्ति । अत्राह — तत्राधः सौरिमुख्यं ग्रहगण-मुदयमपि च कक्ष्याक्रमेण प्रस्तार्य स्वस्वचक्रे फलपदभागाष्टके बि-न्दुरेखा लिख इत्यन्वयः । सौरिमुख्यं ग्रहगणं शनैश्चरसुरगुरुभौमार्क-शुक्रबुधचन्द्रानित्यर्थः । उदयं लग्नराशिं च । तस्य चक्रस्याधः लग्न-राशिस्थेषु अष्टसु कोष्ठेष्वित्यर्थः । कक्ष्याक्रमेण नतु वारक्रमेणेत्यर्थः । कक्ष्याक्रमः खलु कालहोराक्रमः । यथोक्तमार्यभटेन —

"सप्तैते होरेशाः शनैश्चराद्या यथाक्रमं शीघ्राः ।
शीघ्रक्रमाच्चतुर्था भवन्ति सूर्योदयाद् दिनपाः ॥"

इति । तस्मादत्र प्रथमकोष्ठः शनिकक्ष्या इत्यादि । अष्टमकोष्ठो लग्न-कक्ष्या । एवं कक्ष्याक्रमः सर्वराशिषु ज्ञेयः । त(ल ? द्व)शात् प्रस्तार्य, यथोक्तक्रमेण लग्नादिराशिकोष्ठाष्टकेषु शनैश्चरादीन् कल्पयित्वेत्यर्थः । फलपदभागाष्टके इति । फलानां 'स्वादर्कः' इत्यादिभिरुक्तानां पदे स्थानभूते कोष्ठाष्टके । बिन्दुरेखाः बिन्दवो रेखाश्च बिन्दुरेखाः ता लिख, यथोद्दिष्टेषु स्थानेषु बिन्दून् लिख, अनुक्तस्थानेषु रेखाश्च लिख । एवं बिन्दुरेखालेखने कृते चक्रस्थिताः षण्णवतिकोष्ठाः पूरिता भ-वन्ति । तद्यथा — स्वादर्क इत्यस्य प्रस्तारः प्रदर्श्यते — प्रथमाय-बन्धुनिधनद्व्याज्ञातपोद्यूनग इति । उक्तेषु स्थानेषु अर्ककक्ष्यायाम् अर्काक्रान्तराशिमारभ्य बिन्दवः स्थाप्याः । अनुक्तेषु तृतीयपञ्चम-षष्ठद्वादशेषु चतुर्षु कोष्ठेषु रेखाश्च कर्तव्याः । वक्रात् स्वादिवेति । वक्र-कक्ष्यायां यथादर्शितायां वक्रस्थितराशिमारभ्य उक्तेषु स्थानेषु बि-न्दवः अनुक्तेषु रेखाश्च कर्तव्याः । तद्वदेव रविजादिति । रविजकक्ष्यायां तथा रविजस्थितराशिमारभ्य उक्तानुक्तस्थानेषु बिन्दुरेखा लेख-नीयाः । शुक्रात् स्मरान्त्यारिषु इति । यथोक्तायां शुक्रकक्ष्यायां शुक्र-स्थितराशिमारभ्य सप्तमव्ययषष्ठेषु बिन्दवः अनुक्तेषु नवसु रेखाश्च नि-धातव्याः । जीवाद्धर्मसुतायशत्रुषु इति । जीवस्थितराशिमारभ्य यथो-क्तेषु चतुर्षु बिन्दवः अनुक्तेष्वष्टासु रेखाश्च लेख्याः । दशत्र्यायारिगः शीतगोरिति । चन्द्राक्रान्तराशिमारभ्य यथोक्तेषु चतुर्षु बिन्दवः अनु-

क्तेष्वष्टासु रेखाश्च स्थाप्याः । तेष्वेवान्त्यतपस्सुतेषु च बुधादिति । बुधस्योक्तेषु सप्तसु स्थानेषु बिन्दुन्यासः, अनुक्तेषु पञ्चसु रेखान्यासश्च कर्तव्यः । लग्नात् सबन्ध्वन्त्यग इति । अत्र द्वादशराश्यात्मकपङ्क्त्यष्टकयुक्ते चक्रेऽन्त्यायां लग्नकक्ष्यायां लग्नादारभ्य यथोक्तेषु षट्सु कोष्ठेषु बिन्दवो निक्षेप्याः, अनुक्तेषु कोष्ठेषु रेखाश्च निक्षेप्याः । इत्यादित्यस्य यथोक्ताष्टकवर्गप्रस्तारे कृतेऽष्टाचत्वारिंशत्कोष्ठेषु बिन्दवो भवन्ति, अनुक्तेष्वष्टाचत्वारिंशत्स्थानेषु रेखाश्च भवन्ति । इति षण्णवतिकोष्ठा अपि बिन्दुरेखान्यत(म ? र)योगेन अशून्या भवन्ति । एवं चन्द्रादीनामप्यष्टकवर्गप्रस्तारः कर्तव्यः ॥ १ ॥

चन्द्राष्टकवर्गं[1] शार्दूलविक्रीडितेनाह —

**लग्नात् षट्त्रिदशायगः सधनधीधर्मेषु चाराच्छशी**
**स्वात् सास्तादिषु साष्टसप्तसु रवेः षट्त्र्यायधीस्थो [यमात् ।**
**धीत्र्यायाष्टमकण्टकेषु च बुधाज्जीवाद्धनायाष्टगः***
**केन्द्रस्थश्च सितात्तु धर्मसुखधीत्र्यायास्पदानङ्गगः ॥ २ ॥**

इति । शशी लग्नात् षट्त्रिदशायगः शुभ इत्यन्वयः । चन्द्रः लग्नकक्ष्यायां[2] षट्त्रिदशायेषु शुभः, शिष्टेष्वष्टास्वशुभः । आराद् भौमात् सधनधीधर्मेषु षट्त्रिदशायेषु शुभः, शिष्टेषु पञ्चस्वशुभः । स्वात् सास्तादिषु षट्त्रिदशायेषु शुभः, शिष्टेषु षट्स्वशुभः । रवेः साष्टसप्तसु षट्त्रिदशायेषु शुभः शिष्टेषु षट्स्वशुभः । यमात् षट्त्र्यायधीस्थः शुभः, अष्टस्वशुभः । बुधाद् धीत्र्यायाष्टमकण्टकेषु शुभः[3], चतुर्ष्वशुभः । जीवाद् धनायाष्टगः केन्द्रस्थश्च शुभः, शिष्टेषु पञ्चस्वशुभः । सितात्

---

१. 'र्गमाह—' ख. ग. पाठः. २. 'या लग्नात् चतुर्षु स्थानेषु शुभः एवमुत्तरत्रापि योजनीयम् । आ', ३. 'भः, शिष्टेषु च' क. ग. पाठः.

---

* 'जीवाद् व्ययायाष्टग' इति मुद्रितपाठः । (Vide page 177 Brihadjatakam translated by Swami Vijnanananda. "The sacred books of the Hindus" series Vol. XII).

तु धर्मसुखधीव्ययास्पदानङ्गगः शुभः शिष्टेषु पञ्चस्वशुभः । एवमेकोनपञ्चाशत्सु शुभः सप्तचत्वारिंशत्स्वशुभः ॥ २ ॥

कुजाष्टकवर्गं[1] शार्दूलविक्रीडितेनाह —

वक्रस्तूपचयेष्विनात् सतनयेष्वाद्याधिकेषूदया-
चन्द्राद्विद्त्रिफलेषु केन्द्रनिधनप्राप्त्यर्थगः स्वाच्छुभः ।
धर्मायाष्टमकेन्द्रगोऽर्कतनयाज्ज्ञात् षट्त्रिधीलाभगः
शुक्रात् षड्व्ययलाभमृत्युषु गुरोः कर्मान्त्यलाभारिषु ॥

इति । वक्रस्तु इनादारभ्य सतनयेषु उपचयेषु शुभः, शिष्टेषु सप्तस्वशुभः । उदयाद् आद्याधिकेषु उपचयेषु शुभः, शिष्टेषु सप्तस्वशुभः । चन्द्राद् द्विद्त्रिफलेषु शुभः, अन्येषु नवस्वशुभः । स्वात् केन्द्रनिधनप्राप्त्यर्थगः शुभः, अन्येषु पञ्चस्वशुभः । अर्कतनयाद् धर्मायाष्टमकेन्द्रगः शुभः, अनुक्तेषु पञ्चस्वशुभः । ज्ञात् षट्त्रिधीलाभगः शुभः, अनुक्तेष्वष्टस्वशुभः । शुक्रात् षड्व्ययलाभमृत्युषु शुभः, अनुक्तेष्वष्टास्वशुभः । गुरोः कर्मान्त्यलाभारिषु शुभः, अन्येष्वष्टास्वशुभः । एवमेकोनचत्वारिंशत्सु शुभः, सप्तपञ्चाशत्स्वशुभः ॥ ३ ॥

बुधाष्टकवर्गं[2] शार्दूलविक्रीडितेनाह —

द्व्याद्यायाष्टतपस्सुखेषु भृगुजात् सत्र्यात्मजेष्विन्दुजः
साज्ञास्तेषु यमारयोर्व्ययरिपुप्राप्त्यष्टगो वाक्पतेः ।
धर्मायारिसुतव्ययेषु सवितुः स्वात् साद्यकर्मत्रिगः
षट्स्वायाष्टसुखास्पदेषु हिमगोः साद्येषु लग्नाच्छुभः ॥

इति । इन्दुजः भृगुजात् सत्र्यात्मजेषु द्व्याद्यायाष्टतपस्सुखेषु शुभ इत्यन्वयः, शिष्टेषु चतुर्ष्वशुभः । यमारयोः साज्ञास्तेषु द्व्याद्यायाष्टतपस्सुखेषु शुभः[3], अनुक्तेषु चतुर्ष्वशुभः । वाक्पतेः व्ययरिपुप्राप्त्यष्टगः शुभः अनुक्तेष्वष्टास्वशुभः[4] । सवितुर्धर्मायारिसुतव्ययेषु शुभः, अन्येषु सप्तस्वशुभः । स्वात् साद्यकर्मत्रिकेषु धर्मायारिसुतव्ययेषु शुभः, अन्येषु

१., २. 'र्गमाह —' ख. ग. पाठः. ३. 'भः यमादारा[illegible] उक्तेषु स्थानेषु शुभः अ', ४. 'ष्वन्यराशिष्व' क. ग. पाठः.

चतुर्ष्वशुभः । हिमगोः षट्स्वायाष्टसुखास्पदेषु शुभः, अन्येषु षट्स्व-शुभः । लग्नाद् आद्यसहितेषु षट्स्वायाष्टसुखास्पदेषु शुभः, अन्येषु प-ञ्चस्वशुभः । एवं चतुष्पञ्चाशत्स्थानेषु शुभः । द्विचत्वारिंशत्स्थाने-ष्वशुभः ॥ ४ ॥

जीवाष्टकवर्गं[1] शार्दूलविक्रीडितेनाह —

**दिक्स्वाद्याष्टमदायबन्धुषु कुजात् स्वात् सत्रिकेष्वङ्गिराः**
**सूर्यात् सत्रितपस्सु धीस्वनवदिग्लाभारिगो भार्गवात् ।**
**जायायार्थनवात्मजेषु हिमगोर्मन्दात् त्रिषड्धीव्यये**
**दिग्धीषट्स्वसुखायपूर्वनवगो ज्ञात् सस्मरश्चोदयात् ॥**

इति । अङ्गिराः कुजाद् दिक्स्वाद्याष्टमदायबन्धुषु शुभः । तथा स्वात् सत्रिकेषु दिक्स्वाद्याष्टमदायबन्धुषु शुभः । सूर्यात् सत्रितपस्सु दिक्स्वाद्याष्टमदायबन्धुषु शुभः । भार्गवाद् धीस्वनवदिग्लाभारिगः शुभः । हिमगोर्जायायार्थनवात्मजेषु शुभः । मन्दात् त्रिषड्धीव्यये शुभः । ज्ञाद् दिग्धीषट्स्वसुखायपूर्वनवगः शुभः । उदयाद् दिग्धीषट्-स्वसुखायपूर्वनवगः सस्मरश्च शुभः ॥ ५ ॥

शुक्राष्टकवर्गं[2] शार्दूलविक्रीडितेनाह —

**लग्नादासुतलाभरन्ध्रनवगः सान्त्यः शशाङ्कात् सितः**
**स्वात् साज्ञेषु सुखत्रिधीनवदशच्छिद्रारिगः सूर्यजात् ।**
**रन्ध्रायव्ययगो रवेर्नवदशप्राप्त्यष्टधीस्थो गुरोः**
**ज्ञाद्धीत्र्यायनवारिगस्त्रिनवषड्*बन्ध्वागमान्त्यः कुजात् ॥**

इति । शुक्रः लग्नाद् आसुतलाभरन्ध्रनवगः शुभः । शशाङ्काद् आसुतलाभरन्ध्रनवगः सान्त्यश्च शुभः । स्वात् साज्ञेषु आसुतलाभरन्ध्र-नवसु शुभः । सूर्यजात् सुखत्रिधीनवदशच्छिद्रारिगः शुभः । रवेः रन्ध्रायव्ययगः शुभः । गुरोः नवदशप्राप्त्यष्टधीस्थः शुभः । ज्ञाद्

[1], [2]. 'र्गमाह—' ख. ग. पाठः.

* 'पुत्रायसान्त्य' इति मुद्रितपाठः । (Vide page 181 Brihadjatakām translated by Swami Vijnanananda:—"The sacred books of the Hindus" Series, Vol. XII).

धीत्र्यायनवारिगः शुभः । कुजात् त्रिनवषड्बन्ध्वागमान्त्यः शुभः । एवं द्विपञ्चाशत्स्थानेषु शुभः । चतुश्चत्वारिंशत्स्थानेष्वशुभः ॥ ६ ॥

मन्दाष्टकवर्गं शार्दूलविक्रीडितेनाह --

**मन्दः स्वात् त्रिसुतायिशत्रुषु शुभः साज्ञान्त्यगो भूमिजात्**
**केन्द्रायाष्टधनेष्विनादुपचयेष्वाद्ये सुखे चोदयात् ।**
**धर्मायारिदशान्त्यमृत्युषु बुधाच्चन्द्रात् त्रिषड्लाभगः**
**षष्ठान्त्यायगतः सितात् सुरगुरोः प्राप्त्यन्त्यधीशत्रुगः ॥**

इति । मन्दः स्वात् त्रिसुतायिशत्रुषु शुभः, भूमिजात् साज्ञान्त्यगः त्रिसुतायिशत्रुषु च शुभः । इनात् केन्द्रायाष्टधनेषु शुभः, उदयादुपचये-ष्वाद्ये सुखे च शुभः । बुधाद् धर्मायारिदशान्त्यमृत्युषु शुभः । च-न्द्रात् त्रिषड्लाभगः शुभः । सितात् षष्ठान्त्यायगतः शुभः । सुरगुरोः प्राप्त्यन्त्यधीशत्रुगः शुभः । अनुक्तेष्वन्यराशिष्वशुभः । एवमेकोनचत्वा-रिंशत्सु शुभः, सप्तपञ्चाशत्स्वशुभश्च भवतीति द्रष्टव्यम् ॥ ७ ॥

एवं ग्रहाणामष्टकवर्गप्रकारमुक्त्वा तत्फलनिर्णयार्थं मालिनीमाह—

**इति निगदितमिष्टं नेष्टमन्यद् विशेषा-**
**दधिकफलविपाकं जन्मिनां तत्र दद्युः ।**
**उपचयगृहमित्रस्वोच्चगाः पुष्टमिष्टं**
**त्वपचयगृहनीचारातिगैर्नेष्टसम्पत् ॥ ८ ॥**

(इति ।) इति निगदितमिष्टम्, अन्यन्नेष्टमित्यन्वयः । इतिशब्देन 'स्वादर्क' इत्यादिभिः सप्तभिः श्लोकैरुक्तः प्रकारो निगद्यते । निगदित-मुक्तम्, इष्टं प्रथमायबन्धुनिधनादि । स्थानमिति शेषः । तदिष्टम् इष्ट-फलम् । अन्यद् अनुक्तं तृतीयपञ्चमादिस्थानं, नेष्टम् अनिष्टफल-मित्यर्थः । राशिषु द्वादशस्वपि कक्ष्यावशादष्टधा विभागे(न ? ना)गतेषु

---

१. 'भः ॥ मन्दा', २. 'षु शु', ३. 'ष्वष्टस्वशु' क. ग. पाठः. ४. 'सचत्वा-रिंश', ५. 'र्गविन्यासमु' ख. पाठः. ६. 'क्त्वा विशेषकथनाय तदेवानुवदति—', ७. 'ति स्वा', ८. 'कैरित्यर्थः । निगदि', ९. 'लस्थानम् ।', १०. 'लस्थानमिति' ग., 'सम्बन्धः । ननु' क. ग. पाठः.

षण्णवतिखण्डेषु ग्रहाणामष्टकवर्गस्थानेषु 'स्वादर्क' इत्यादिना यथोक्तानि अष्टचत्वारिंशत् स्थानानि सूर्यस्य शुभफलप्रदानीत्युक्तं भवति। एवमन्येषामपि ग्रहाणां स्वैः स्वैः श्लोकैरुक्तानि स्थानानि शुभानि। तत्र प्रत्येकं शुभस्थानसङ्ख्या —

"देवो धवो धिगो विष्णुः क्षमी रामो धिगः क्रमात्"

इति। अशुभस्थानसङ्ख्या च —

"देवः सुम्भः समा रम्भा नाभिर्विद्वान् समा क्रमात्।"

इति। ननु सप्तमाध्यायेन जीवितकालो[1] दर्शितः[2]। अष्टमाध्यायेन दशान्तर्दशादिभेदजनितेषु जीवितकालविभागेषु ग्रहाणां फलविशेषा दर्शिताः। तेषामिष्टानिष्टता च तत्र दशानां सम्पूर्णारिक्तादिसंज्ञा[3]भेदेन प्रदर्शिता[4]। तदनेनाष्टकवर्गेण[5] पुनः कुत्रत्यानीष्टानिष्टानि कथ्यन्ते। सत्यम्। अनेनाष्टकवर्गेणापि जीवितकालभवान्येवेष्टानिष्टानि कथ्यन्ते। किन्तु दृढकर्मनिमित्तानि फलानि दशान्तर्दशादिभिर्निर्देश्यानि। अदृढकर्मनिमित्तानि अष्टकवर्गगोचरफलानि तदविरोधेन तत्र तत्र निर्देश्यानि। परस्पराविरोधे[6] द्विविधान्यपि सम्भवन्ति। परस्परविरोधे तु दशाफलान्येव प्रबलानि। अपिच काल एव खलु फलानि सर्वाण्यपि पाचयति। स च

"कालो बलीयान् विविधानुभावषड्भावनेताद्यवसानशून्यः।
तस्यानुमेयत्वमुपक्रमान्तभाजो विभागाश्च खगर्क्षचारैः॥"

अतोऽत्र जननकालग्रहस्थितिविशेषावगन्तव्यानां दशादिफलानां पाककालस्य तात्कालिकग्रहर्क्षचारावगम्यत्वेन दशाफलस्य गोचरफलस्य च सदासङ्कीर्णता भवत्येव। तत्र दशाफलान्यष्टमाध्याये दर्शितानि। गोचरफलानि तु मुहूर्तशास्त्रप्रसिद्धान्यत्र संक्षिप्य लिख्यन्ते। तथाचोक्तं विद्यामाधवेन —

"पुंसां जन्मादिभावेषु यत् फलं ग्रहचारतः।
वराहमिहिरेणोक्तं[7] संक्षेपात् तदिहोच्यते॥

१. 'लप्रमाणं द', २. 'तम्।', ३. 'ज्ञानिर्देशद्वारेण द', ४. 'तानि (?)। अने' क. ग. पाठः. ५. 'ण कुत्रेष्टमनिष्टं वा कथ्यते। स' ख. पाठः. ६. 'नि सम्भवन्तीति विशेषः। अ', ७. रोक्तानि सं' क. ग. पाठः.

आयभ्रातृद्विषदुपगतौ स्थानमानादिलाभं
वित्ते वित्तक्षयमथ सुहृत्पुत्रगौ क्लेशभीतिम् ।
कामे रोगान् व्यसनमतुलं धर्मगौ सूर्यभौमौ
भौमो भङ्गं दिशति दशमे कर्मसिद्धिं दिनेशः ॥
क्रमेण भोगोदयमर्थहानिं
जयं भयं शोकमरातिभङ्गम् ।
सुखान्यनिष्टं गदमिष्टसिद्धिं
मोदं व्ययं च प्रददाति चन्द्रः ॥
अर्थक्षयं श्रियमरातिभयं धनाप्तिं
भार्यासुतादिकलहं विजयं विरोधम् ।
पुत्रार्थलाभमथ विघ्नमशेषसौख्यं
पुष्टिं पराभवभयं च करोति चान्द्रिः ॥
नानादुःखं वित्तसमृद्धिं स्थितिनाशं
बन्धुक्लेशं पुत्रधनाप्तिं रिपुबाधाम् ।
भोगान् रोगान् वित्तसुताप्तिं धनहानिं
स्थानप्राप्तिं दुःखभयं यच्छति जीवः ॥
अखिलविषयभोगं वित्तसिद्धिं विभूतिं
सुखसुहृदभिवृद्धिं पुत्रलब्धिं विपत्तिम् ।
युवतिजनितबाधां सम्पदं स्त्रीसुखाप्तिं
कलहमुदयमाप्तिं दैत्यमन्त्री विधत्ते ॥
नानारोगशुचं सुखार्थविहतिं स्थानार्थभृत्यादिकं
स्त्रीबन्ध्वर्थसुखच्युतिं धनसुखभ्रंशं सपत्नक्षयम् ।
मार्गासक्तिमनल्पदुःखनिचयं धर्मप्रणाशामयान्
दारिद्र्यं धनलाभमर्थविहतिं धत्ते क्रमादर्कजः ॥
द्वादशजन्माष्टमगाः पुंसां दिननाथभौमशनिजीवाः ।
वित्तक्षयं प्रवासं रोगान् जनयन्ति मरणभीतिं वा ॥
इत्थं समस्तजगतामशुभं शुभं च
सञ्जायते हि निखिलं ग्रहचारशक्त्या ।

---

१. 'भ' ख, 'ज' ग. पाठः. २. 'वृ' ख. पाठः. ३. 'र्तिं' ग. पाठः. ४. 'वा' ख. पाठः.

पूजास्तुतिप्रणतिभिर्मुदिता ग्रहास्ते
कुर्वन्त्यनिष्टगतयोऽपि जनस्य लक्ष्मीम् ॥"

एवमुक्तानि गोचरफलानि कीदृग्विधजातकस्य पुरुषस्य कीदृशे काले कीदृग्रूपाणि सम्भवन्तीति ज्ञानार्थमत्राष्टकवर्गप्रदर्शनं कृतम् । तथाहि— मातुलसंख्यादिवसात्मके सौरसंवत्सरे सूर्यस्य राशिचारात्मका द्वादश मासा[1] । एकत्र मासे पादोनभागचतुष्टयप्रमाणान्यष्टौ खण्डानि । तानि च शनैश्चरादिलग्नान्तानामष्टानां कक्ष्या भवन्तीति पूर्वं प्रदर्शितम् । तत[2] एकस्य मेषादिमासस्यादौ पादोनभागचतुष्टयात्मकं खण्डं शनैश्चरस्य कक्ष्या । तस्यामादित्याष्टकवर्गप्रस्तारे बिन्दुश्चेदिष्टफलं[3] भवति । रेखा चेदनिष्टफलं[4] भवति । एवमेव जीवादीनां कक्ष्यास्वपी[5]ष्टानिष्टफलनिर्देशः । तस्मादष्टास्वपि बिन्दवः संभवन्ति चेत् तस्मिन् मासेऽर्कचारः शोभनफल एव । अष्टास्वपि कक्ष्यासु रेखासम्भवश्चेत्, सोऽर्कमासः (शून्यः ?) कष्टफलो भवति । फलविशेषाश्चार्ककक्ष्याधिपयोर्यथोक्तगुणतारतम्येन वक्तव्याः । अर्कस्य रूपप्रधानं कटुरसप्रधानं वा द्रव्यं, शनेस्तु कक्ष्याधिपस्य स्पर्शप्रधानं कषायरस-

१. 'साः । तेष्वेकत्र शुभाङ्कप्रमा', २. 'तः सर्वैष्वपि सौरमासेषु प्रथमं पा', ३. 'लं रे', ४. 'लमर्कचारे वक्तव्यम् । ए', ५. 'पि द्रष्टव्यम् । ततो यत्र राशावष्टास्वपि कक्ष्यासु बिन्दवस्तत्र चारः शोभनः यत्राष्टास्वपि रेखाः स्युः तत्र चारः कष्टफल इत्युक्तं भवति । फलविशेषनिर्णयस्तु कक्ष्याचारिणो ग्रहस्य कक्ष्याधिपस्य च षड्वर्गयोगेक्षणसम्बन्धवशेन सञ्जायते । फलानि च त्रिविधानि कर्मात्मकानि भोगात्मकानि विनाशात्मकानि चेति । तत्र कर्मात्मकानि कृषिगोरक्षवाणिज्यादिसम्पादनविषयाणि । भोगात्मकानि च विविधान्नपाननृत्तगीतस्रक्चन्दनवनिताद्यनुभवरूपाणि । विनाशात्मकानि च वाक्पारुष्यताडनच्छेदनभेदनोत्सादनादीनि । एषां त्रिविधानामपि फलानामुपयोगीनि वस्तूनि च त्रिविधानि धातुमूलजीवभेदेन । तत्र धातवो धाम्याधाम्यलोहास्थितैलादिभेदेन बहुविधाः । मूलानि च तृणोलपगुल्मलतावनस्पतिवानस्पत्यादिभेदेन बहुविधानि । जीवाश्च जरायुजाण्डजस्वेदजादिभेदेन बहुविधाः । अत्र राशिषु द्रेक्काणैः क्रमेण कर्मभोगविनाशभेदावगतिः । द्रेक्काणेषु स्थितैस्त्रिभिस्त्रिभिर्नवांशैश्चरस्थिरोभयात्मकैर्धातुमूलजीवावगतिः । तेषां च प्रत्येकं नवग्रहयोगेक्षणवशान्नव नव भेदा भवन्ति । एवमेकाशीतिभेदा वस्तुजातय एकस्मिन् राशौ सम्भवन्ति । तद्विशेषनिर्णयश्च तत्कालपञ्चभूतोदयसंबन्धिशब्दस्पर्शरूपरसगन्धरूपगुणसम्बन्धवशेन नासास्यदृक्छ्रवणानुमेयत्वादिना वस्तुनामभिश्च राशिग्रहसंबन्धाक्षरप्रधानैः सेत्स्यति । ग्रहाणामुच्चनीचादिवशेन वस्तूनामुत्तममध्यमाधमता च द्रष्टव्या । एवंप्रकारावगन्तव्यानां' क. ग. पाठः.

प्रधानं वा द्रव्यम् । तस्मादर्कस्य शनैश्चरकक्ष्यायां तयोर्बलाधिक्ये दर्शनीयं स्पर्शसुखप्रदं च पट्टवस्त्रादि भवति । बलवैकल्ये कम्बलादि भवति । एवं च बलविशेषेण वस्तुनिर्देशः । 'चन्द्रारोरगसौरैरि'त्यादिनिर्दिष्टा धातुमूलजीवाश्च ग्रहै राशिभिर्नक्षत्रैश्चावगन्तव्याः । तत्र राशिषु त्रयो द्रेक्काणाः कर्मभोगविनाशात्मकाः क्रमेणावगन्तव्याः । तेषु त्रिष्वपि द्रेक्काणेषु त्रयस्त्रयो नवांशकाः चरस्थिरोभयात्मकाः धातुमूलजीवा भवन्ति । तस्मादेकस्मिन् राशौ कर्मधातुः कर्ममूलं कर्मजीवः, तथा भोगधातुः भोगमूलं भोगजीवश्च, तथैव नाशधातुः नाशमूलं नाशजीवश्चेति नव भेदाः सम्भवन्ति । तेषां च भेदानां नवग्रहयोगेक्षणादिवशात् प्रत्येकं नव भेदाः सम्भवेयुः । एवमेकाशीतिभेदा वस्तुजातयः । पुनरपि तात्कालिकपञ्चभूतगुणसम्बन्धवशेन विशेषनिर्णयः । ग्रहाणां बलवशेन तत्र तत्रोत्तममध्यमाधमत्वानि च वक्तव्यानि । ग्रहराशिद्रेक्काणादिवर्णैश्चोरादिनामधेयप्रकारेणोपदिष्टैर्वस्तुविशेषाणां नामान्तराणि च विचिन्त्यानि । एवंप्रकारावगन्तव्यानां वस्तुविशेषाणां सम्पत्तिरिष्टफलं विपत्तिरनिष्टफलम् । *पुनरपि इष्टानिष्टफलनिर्देशविशेषमाह — जन्मिनां तत्र विशेषादधिकफलविपाकं दद्युरिति । "प्रथमायबन्धुनिधनध्याज्ञातपोद्यूनग" इति निर्दिष्टानां फलानां सम्भवे तत्तद्भावगता विशेषा वक्तव्याः । प्रथमफले मूर्तिगतानीष्टानि, आयफले लाभगतानीष्टानि इत्यादि तत्तद्भावफलवशेन फलपाकं दद्युरित्यर्थः । तथानुक्तस्थानेषु तत्तद्भावगतान्यनिष्टफलानि च दद्युः । तथा अर्कस्य फलनिरूपणे आत्मप्रभावपितृचिन्ताविषयाणि इष्टानिष्टानि वक्तव्यानि । चन्द्रस्य मनोजनन्यादिविषयाणि, कुजस्य सत्त्वसहजादिविषयाणि, बुधस्य वचनविषयाणि, गुरोः ज्ञानसुखसन्ततिविषयाणि, शुक्रस्य कलत्रभोगविषयाणि, शनैश्चरस्य दुःखदास्यादिविषयाणि, इष्टानिष्टफलानि निर्देष्टव्यानीत्यर्थः । पुनरपीष्टानिष्टफलानां पुष्ट्यपुष्टिचिन्ताविषयं दर्शयति— उपचयगृहमित्रस्वोच्चगा ग्रहा इष्टं पुष्टं दद्युः । तथा अ(नु ?)पचयगृहनीचारातिगैर्ग्रहैर्नेष्टसम्पत् । अनिष्टानां प्राचुर्यं भवतीत्यर्थः ।

* इत उत्तरं 'ननु श्रीपतिने'ति पूर्वपक्षावधि क. ग. पाठवाक्यानि भिन्नानि एतत्समानार्थकानि च दृश्यन्ते ।

अत्राष्टकवर्गेण फलपाकसमयनिरूपणे संवत्सरस्य षण्णवत्यंशे पादोन-भागचतुष्टयप्रमाणे समये सूर्यस्य कक्ष्यावशादेकं फलं परिपच्यते। तत्रैव संवत्सरषण्णवत्यंशसमये चन्द्रस्याष्टकवर्गेण सप्तविंशतिदिनात्मकचन्द्रभगणस्य षण्णवत्यंशाः प्रायः सप्तदशनाडिकाप्रमाणास्त्रयोदश सम्भवेयुः। ततः सूर्यस्य हि कक्ष्याफलभागकाले चन्द्रस्य त्रयोदश फलानि जायन्ते। तथा चन्द्रस्य एकफलपाककाले सप्तदशनाडिकाप्रमाणे चत्वारो राशयः सप्त च कालहोराः सम्भवन्ति। एभिः कालविशेषैः सविता दशाफलानां पाचयिता चन्द्रमास्तु पोषयिता। 'इष्टान्युदयोच्चादौ क्षेत्रे कष्टानि चास्तनीचादौ' इत्यादिवचनवशेन परस्परानुगुणैर्यथासम्भवं प्रत्यब्दमासद्युनिशाराशिकालहोरागतानि धनलाभधनहानिवस्त्रसिद्धिवस्त्रहानिसुखासनपतनभयभोजनमैथुनादिफलानि ग्रहगोचरसम्भवानि अष्टकवर्गेण सम्यग् विचिन्तनीयानि। तथा पूर्वमायुर्दायोक्तानि फलानि च वक्ष्यमाणेन 'भावाद् भवनभनाथगुणैर्विचिन्तनीयमि'ति श्लोकोत्तरार्धेन सूचितया नक्षत्रनाथदशया ग्रहाणां शुभाशुभानि दशाफलानि स्वदशायां स्वापहारे स्वच्छिद्रापहारे च तदन्तर्गतापहारेषु च यथोक्तानि योजयितव्यानि। तथा कर्माजीवाध्यायादिभिः प्रदर्शितानि कर्माजीवयोगफलस्थानफलभावफलस्वरूपाणि नैसर्गिकफलानि जन्मिनां पुरुषाणां जननादिमरणावधिकालोपभोग्यानि ग्रहविशेषबलावगम्यानि ग्रहाणां यथोक्तेषु कालेषु प्राधान्येन योजयितव्यानि। ग्रहाणां कालविशेषाश्च "स्वदिवससमहोरामासगैः कालवीर्यम्" इत्यादिषु सूत्रिता ग्राह्याः। एवमुक्तप्रकाराणि दशाफलानि दृढकर्मोपार्जितानि गोचरफलान्यदृढकर्मोपार्जितानि कादाचित्कानि नैसर्गिकफलानि दृढादृढकर्मोपार्जितानि प्रायिकाणि त्रिविधान्यपि फलानि सम्यग् विचार्य परस्पराविरोधेन संयोज्य यथाबलं यथानिर्दिष्टं यथासम्भवं यथाकालं च कुशाग्रधिया सांवत्सरेण सांवत्सरसूत्रोक्तगुणशालिना सम्यगाराधितगुरुचरणप्रसादाधिगतसकलसम्प्रदायरहस्येन सत्यवादिना कामक्रोधाद्यनभिभूतेन सूर्यभक्तेन सतताराधितविद्यावृद्धेन पृच्छकाय शुभदिवसतिथिनक्षत्रसमयारब्धप्रश्नाय साधुवृत्ताय शुभा-

शुभसमयजिज्ञासवे करतलामलकवत् सुव्यक्ततया निर्देष्टव्यानीति अध्यायान्तोपदिष्टेनानेन श्लोकेन द्योतितं भवति[1]। ननु श्रीपतिना जातकपद्धतौ

"पाकं द्वादशधा वदन्ति यवना दिग्भेदभिन्नं पुन-
र्माणिन्थाः खलु बादरायणमुनिस्तं चाष्टधा प्रोक्तवान् ।
षड्भेदं खलु सिद्धसेनविबुधास्तं देवलाद्याः पुन-
र्भेदैरब्धिमितैरुदारधिषणः श्रीविष्णुगुप्तस्त्रिभिः ॥
पाकं द्विभेदं पुनराह सत्यस्तच्छास्त्रदृष्ट्या कथयाम्यशेषान् ।"

इति पाको द्वादशधा प्रदर्शितः । तत् कथमत्र त्रिविधत्वेनोच्यते । सत्यम् । आचार्यस्तु फलपाकं त्रिविधमेव मन्यते तदन्तःपातित्वादन्येषां भेदानाम् ॥ ८ ॥

इति होराविवरणे[2] नवमोऽध्यायः ॥

---

## अथ दशमोऽध्यायः ।

[3]अथ सर्वपुरुषार्थानामर्थमूलत्वाद् अर्थार्जनसाधनं पुरुषस्य नैसर्गिकं स्वभावं दर्शयितुं कर्माजीवमाह । तथा दशान्तर्दशाभेदैर्दृढकर्मोपार्जितकर्मविपाकसमयम् अष्टकवर्गेणादृढकर्मोपार्जितकर्मविपाकसमयं च प्रदर्श्य तदधिकरणानां शुभाशुभफलानां पुरुषव्यापारसाध्येषु पुरुषार्थेष्वन्तर्भावात् पुरुषार्थेषु च धर्मकामयोरप्यर्थमूलत्वाद् अर्थपुरुषार्थस्य प्राधान्यादर्थो-

---

१. 'ति ॥ ८ ॥ इति हो' ख. पाठः. २. 'णेऽष्टकवर्गो न' क. पाठः. ३. 'सप्तमाष्टमाभ्यामध्यायाभ्यां दृढकर्मोपार्जितानि दशाफलानि, नवमेनाष्टकवर्गाध्यायेन अदृढकर्मोपार्जितानि गोचरफलानि च प्रदर्श्य, इदानीं दृढादृढकर्मोपार्जितानि नैसर्गिकफलानि प्रदर्शयितुमारभते । ननु

"नैसर्गिकः स्यात् प्रथमोऽत्र भेदो दशाक्रमाख्यस्तु पुनर्द्वितीयः ।
अन्तर्दशाख्यः कथितस्तृतीयः प्रोक्तश्चतुर्थोऽपि त्रिदशाभिधानः ॥
स्याद्राशिसंज्ञः खलु पञ्चमोऽत्र षष्ठस्तथा भावफलाख्यभेदः ।
योगाभिधानः खलु सप्तमोऽपि स्यादष्टमो दृष्टिफलाभिधानः ॥
प्रोक्तोऽष्टवर्गो नवमो मुनीन्द्रैर्होरादिवर्गो दशमो ग्रहाणाम् ।
प्रत्यब्दमासद्युनिशाफलैः स्यादेकादशो मैथुनभोजनाद्यैः ॥
स्याद् द्वादशः सत्त्वशरीरधातुः स्वरूपभेदैः कथितोऽत्र तज्ज्ञैः ।"

इति द्वादशधा फलपाकः, तत्कथमत्र त्रिविधत्वेनोच्यते । सत्यम्, आचार्यस्तु पाकं त्रिविधमेव मन्यते तदन्तःपातित्वादन्येषां भेदानाम् । तथा' ख. पाठः.

प्तिनिमित्तानां व्यापाराणां स्वरूपज्ञानं प्रति कर्माजीवाध्याय आरभ्यते । तत्र प्रथमं परवशादागन्तुकस्यार्थस्याप्तिं लक्षयति[1] —

**अर्थाप्तिः पितृजननीसपत्नमित्र-**
**भ्रातृस्त्रीभृतकजनाद् दिवाकराद्यैः ।**
**होरेन्द्वोर्दशमगतैर्विकल्पनीया**
**भेन्द्वर्कास्पदपतिगांशनाथवृत्त्या ॥ १ ॥**

इति । होरेन्द्वोः दशमगतैः दिवाकराद्यैः क्रमात् पितृजननीसपत्नमित्रभ्रातृस्त्रीभृतकजनाद् अर्थाप्तिर्विकल्पनीया इत्यन्वयः । होरेन्द्वोः लग्नाच्चन्द्राच्च दशमगतेन दिवाकरेण पितृतः अर्थाप्तिः । पितृधनं लभ्यत इत्यर्थः । लग्नाद् दशमस्थे चन्द्रे जननीधनलब्धिः । अत्रेन्दोरपि दशमभावस्य इन्दुषड्वर्गसम्बन्धे सति जननीधनलाभो भवतीति वक्तव्यम् । एवमन्येषामपि षड्वर्गसम्बन्धेनापि बलाधिकत्वे योगफलं द्रष्टव्यम् । तथा लग्नाच्चन्द्राच्च दशमस्थे भौमे सपत्नादर्थाप्तिः । सपत्नशब्देन सहजशत्रवः पितृव्यतत्पुत्रादय उच्यन्ते । बुधे दशमस्थे मित्रेभ्यः । अर्थान्मातुलादिभ्यः अर्थाप्तिः । गुरौ दशमस्थे भ्रातृभ्यः । शुक्रे दशमस्थे स्त्रीभ्यः भार्याभगिन्यादिभ्यः । मन्दे दशमस्थे भृतकजनाद् भृत्येभ्यो दासेभ्यो वा धनलाभो भवतीति वक्तव्यम् । चतुर्थपादेन[2] स्वव्यापारसम्भवस्यार्थस्याप्तिमाह — भेन्द्वर्कास्पदपतिगांशनाथवृत्त्येति । अर्थाप्तिरिति सम्बन्धः । भं च इन्दुश्च अर्कश्च भेन्द्वर्काः तेषामास्पदपतिगांशः स्वाधिष्ठितराशेर्दशमराशिनाथेनाधिष्ठितो नवांश इति यावत् । तस्य भेन्द्वर्कास्पदपतिगांशस्य यो नाथः तस्य वृत्त्या वक्ष्यमाणया अर्थाप्तिर्भवति । भेन्द्वर्काणां तदास्पदपतीनां तदंशनाथानां च बलाबल[3]निरूपणेन अर्थाप्तये पुरुषव्यापारः कर्माजीवो वक्तव्य इत्युक्तं भवति । अत्र केचित् — लग्नार्कशशाङ्कानां यो बलवांस्तस्यैवास्पदपतिगांशनाथवृत्त्या धनं वक्तव्यमितीच्छन्ति । तदयुक्तम् । यस्माच्छ्लोकेऽस्मिन् बलग्रहणं नास्ति । (तस्मादेव ज्ञायते ।?) तस्मात् सर्वेभ्य एव । पुरुषस्य बहुप्रकारं धनागमदर्शनादिति । तथाच गार्गिः —

---

१. 'प्तिं प्रहर्षिणीमाह — अ' क. पाठः. २. 'त्त्या अ' क. ग. पाठः. ३. 'ति ॥ १ ॥' ख. ग. पाठः.

"उदयादिन्दुतो वापि ये ग्रहा दशमस्थिताः ।
ते सर्वेऽर्थप्रदा ज्ञेयाः स्वदशासु यथोदिताः ॥
लग्नार्करात्रिनाथेभ्यो दशमाधिपतिर्ग्रहः ।
यस्मिन्नवांशे तत्काले वर्तते तस्य यः पतिः ॥
तद्वृत्त्या प्रवदेद् वित्तं जातस्य बहवो यदा ।
भवन्ति वित्तदास्तेऽपि स्वदशासु विनिश्चिताः ॥"

इति ॥ १ ॥

मेन्द्वर्कास्पदपतिगांशनाथवृत्तिविशेषानर्कादिक्रमेणाह[1][2] —

**अर्कांशे तृणकनकोर्णभेषजाद्यै-**
**श्चन्द्रांशे कृषिजलजाङ्गनाश्रयाच्च ।**
**धात्वग्निप्रहरणसाहसैः कुजांशे**
**सौम्यांशे लिपिगणिताादिकाव्यशिल्पैः ॥ २ ॥**

इति । अर्कांशे तृणकनकोर्णभेषजाद्यैरर्थाप्तिः । अर्थनिमित्तं कर्म भवति । तृणं होमसाधनगवादिभरणभवनाच्छादनाद्यौपयोगिकम् । कनकं मुख्यलोहोपलक्षणम् । ऊर्णं मृगादिलोमजनितवस्तु । भेषजं विविधौषधैर्द्रव्यविशेषः । आ(दि ? द्य)शब्देन यथोक्तोपकारकद्रव्यान्तराणि । एतैर्निमित्तभूतैः क्रयविक्रयादिकर्मभिरर्थसिद्धिकरं कर्म वक्तव्यमित्यर्थः । चन्द्रांशे कृषिजलजाङ्गनाश्रयाच्च । कृषिः नदीवर्षादिसलिलसम्पाद्यव्रीह्यादिजननं कर्म । जलजाः जलसम्भवमत्स्यशङ्खपद्मनौकादयः । अङ्गनाश्रयः अङ्गनानां पतित्वेन वा परिचारकत्वेन वा अन्येन वा येनकेनचिन्निमित्तेन संश्रयः । एतैर्निमित्तभूतैः कर्मभिरर्थसिद्धिर्भवति । धात्वग्निप्रहरणसाहसैः कुजांशे । धात्वग्निप्रहरणसाहसैः, धातवो द्विविधाः धाम्या अधाम्याश्च । तत्र धाम्याः कांस्यताम्रवङ्गसीसकनकरजतादयः । अधाम्या मृत्पाषाणहरितालमनश्शिलादयः । अग्निः धमनोपकरणाग्निरत्र गृह्यते । प्रहरणानि आयुधानि धनुर्वेदशिक्षाद्युपकरणानि । साहसं हिताहितानपेक्षं कर्म रज्जुचरणाकाशखेलनादि । एतद्विषयैः कर्मभिरर्थसिद्धिर्भवतीत्यर्थः । सौम्यांशे लिपि-

---

१. 'न् प्रदर्शयितुं प्रहर्षिणीद्वयमाह—' क. पाठः. २. 'ह श्लोकद्वयेन—' ग. पाठः. ३. 'धादिवि' ख. पाठः.

गणितादिकाव्यशिल्पैः। लिपिः पुस्तकलेखनादिविषया। गणितादि, गणितमष्टाधिकारिकं लौकिकगणितम्। आदिशब्देन ग्रहचारग्रहण-समागमगणितादयः। काव्यं लोकोत्तरवर्णननिपुणकविकर्म। शिल्पानि चित्रलेखनादीनि। एतन्निमित्तैः[1] कर्मभिरर्थसिद्धिर्भवतीत्यर्थः॥ २॥

जीवस्य द्विजविबुधागमादिधर्मैः
शुक्रांशे मणिरजतादिगोमहिष्यैः।
सौरांशे[2] श्रमवधभारनीचशिल्पैः
कर्मेशाध्युषितसमानकर्मसिद्धिः॥ ३॥

अंशे इत्यनुवर्तते। जीवस्यांशे द्विजविबुधागमादिधर्मैः। द्विजा-स्त्रैवर्णिकाः तेषां धर्माः, अध्ययनाध्यापनादयः। विबुधा देवाः, तद्विषया धर्माः मन्त्रजपार्चननमस्कारादयः। आगमाः मीमांसादयः। आदिशब्देन देवस्वाधिकारादयः। एतद्विषया धर्मा आगमादिधर्माः। एतन्निमित्तैः कर्मभिरर्थसिद्धिर्भवति। शुक्रांशे मणिरजतादिगोम-हिष्यैः। मणयो रत्नानि वैडूर्यादीनि। रजतादयः रूप्यम्। आदि-शब्देन अन्येऽपि सीसादयो गृह्यन्ते। गोशब्देन क्षीरघृतप्रधाना गवा-दय उक्ताः। महिष्यं महिषे साधु। युगशकटादिकृषीवलोपकरणमिति यावत्। एतन्निमित्तभूतैः कर्मभिरर्थसिद्धिर्भवति। सौरांशे[3] श्रमवध-भारनीचशिल्पैः। श्रमोऽध्वगमनशिलाभेदनादिविषयः। वधः कशा-भिघातः। कर्मकरणमान्द्ये कर्माध्यक्षप्रयोजित इति यावत्। भारो वीवधादिवहनम्। नीचशिल्पानि कटकरणदारुतक्षणादीनि। अनृतवच-नमोषणादिकौशलं च नीचशिल्पानि[4]। एतद्विषयैः कर्मभिरर्थसिद्धिर्भ-वति। चतुर्थपादेन उक्तानि निगमयति — कर्मेशाध्युषितसमानकर्म-सिद्धिः। कर्मेशाध्युषितः आस्पदपतिगांशः तत्समानेन तदुचितेन तत्राथोचितेनेति यावत्। कर्मणा तृणकनकोर्णेत्याद्युक्तस्वरूपेण। सि-द्धिरर्थसिद्धिः। अत्र कर्मेशाध्युषितेति विशेषणोक्तौ विशेष्यस्यांशक-स्यानुक्त्या 'विशेषणमात्रे प्रयोगे विशेष्यस्य[5] प्रतिपत्तिरि'ति न्यायेन

१. 'त्तभूतैः क' ग. पाठः. २., ३. 'रस्य श्र', ४. 'चानां शि' क. ग. पाठः. ५. 'ष्यप्र' ग. पाठः.

कर्मेशाध्युषितान्नवांशकाद् बलाधिक्ये[1] सति कर्मेशाध्युषितेन राशिनापि कर्माजीवो वक्तव्य इत्युक्तं भवति ॥ ३ ॥

कर्मेशाध्युषितनवांशनाथानां तत्कालस्थितिवशादपि विशेषमाह[2] —

मित्रारिस्वगृहगतैस्ततस्ततोऽर्था-
स्तुङ्गस्थे बलिनि च भास्करे स्ववीर्यात् ।
आयस्थैरुदयधनाश्रितैश्च सौम्यैः
सञ्चिन्त्यं बलसहितैरनेकधा स्वम् ॥ ४ ॥

इति । मित्रारिस्वगृहगतैः कर्माजीवकर्तृग्रहैः ततस्ततः अर्था भवन्ति । कर्मेशाध्युषितनवांशनाथे मित्रगृहस्थे यथोक्तकर्मभिः मित्रगृहादर्था भवन्ति, शत्रुगृहस्थे शत्रुगृहादर्था भवन्ति, स्वगृहगते स्वगृहादेवार्था भवन्ति । भास्करे तुङ्गस्थे बलिनि स्ववीर्यादर्था भवन्ति। तुङ्गगते बलवति च स्ववीर्यात्[3] स्वशक्त्या अर्था भवन्ति । तुङ्गशब्देन मध्यन्दिनस्थितिरपि भास्करस्य स्ववीर्यादर्थागमे हेतुरिति द्योत्यते । आयस्थैरुदयधनाश्रितैः सौम्यैश्च अनेकधा स्वं सञ्चिन्त्यमित्यन्वयः । लाभगतैरुदयगतैर्धनगतैश्च अनेकप्रकारेणार्थागमः सञ्चिन्त्यः[4] । शरीरिणामनशने मरणसम्भवाज्जीवनकाले शरीरवृत्तेरवश्यभावित्वमस्ति । तथाचोक्तं —

"समृगोरगसारङ्गं सपक्षिपशुमानुषम् ।
आ मध्याह्नात् कृताहारं भवतीह जगत्रयम् ॥
नातः पापीयसीं काञ्चिदवस्थां शम्बरोऽब्रवीत् ।
यत्र नैवोद्यमः प्रातर्भोजनं प्रति दृश्यते ॥"

इति । तस्मादाजीवस्यावश्यभाविनः केन कर्मणा निष्पत्तिरित्यस्मिन्-

१. 'ति । कर्मेशाध्युषितसमानकर्मसिद्धिरित्यत्र नवांशकग्रहण नास्ति । प्रकृतत्वान्नवांशकस्य नवांशो व्याख्यातः । तथाच गार्गिः — लग्नकर्माधिपो यस्मिन् नवांशे वर्तते ग्रहः । चारक्रमेण तत्तुल्यकर्मणां सिद्धिमादिशेत् ॥ ३ ॥', २. 'षं प्रहर्षिण्याह —' क. पाठः. ३. 'द् आत्मश' क. ग. पाठः. ४. 'न्त्यः । येन प्रकारेण धनार्जनमाकाङ्क्षति तेन प्रकारेणायत्नादेवाप्नोतीत्यर्थः । अत्र गार्गिः — धनदा जन्मसमये मित्रारिस्वगृहोपगाः । यस्य तस्य धनं दद्युर्मित्रारिस्वगृहोद्भवम् ॥ धनदो भास्करो यस्य तुङ्गे बलसमन्वितः । भवेज्जन्मनि (थ ? त)स्य स्याद् वित्तमात्मोद्यमार्जितम् ॥ लाभार्थलग्नगैः सौम्यैर्येन येनैव कर्मणा । धनार्जनं प्रार्थयते नायत्नात् स्वयमश्नुते ॥ इति । श' क. पाठः.

ध्याये निरूपितम्। तत् कर्म सम्यगवधार्य तदनुरूपेण प्रोक्तानि दशाफलानि गोचरफलानि च यथाकालं योजयितव्यानीति द्रष्टव्यम् ॥४॥

इति होराविवरणे[1] दशमोऽध्यायः ॥

## अथैकादशोऽध्यायः ।

अथ दृढकर्मोपार्जितफलविशेषप्रदर्शकान् योगान् दर्शयितुमारभमाणः प्रथमं[3] पापग्रहाणां स्वतुङ्गस्थितिफलविशेषमन्यमतेनाह —

प्राहुर्यवनाः स्वतुङ्गगैः
क्रूरैः क्रूरमतिर्महीपतिः ।
क्रूरैस्तु न जीवशर्मणः
पक्षे क्षित्यधिपः प्रजायते ॥ १ ॥

इति । यवनाः स्वतुङ्गगैः क्रूरैः क्रूरमतिः महीपतिः भवतीति प्राहुरित्यन्वयः । वक्ष्यमाणेषु राजयोगेषु ग्रहाणामुच्चादिबलाधिक्ये सति जातस्य राजभावः सम्भवति । तत्र क्रूरग्रहाणामुच्चगतत्वे क्रूरात्मा नृपतिर्जायते इति यवनाचार्या वदन्ति । अर्थाच्छुभग्रहाणामुच्चगतत्वे धर्मात्मा नृपतिरित्यपि यवनानां मतम् । मिश्रैरुच्चगतैर्मिश्रस्वभावश्च भवति । तथाच तद्वाक्यं —

"(पापैः पा)पमतिः स्यात् स्वोच्चगतैर्धर्मवित्तवान् सौम्यैः ।
व्यामिश्रैर्मिश्रमतिः पृथ्वीशो जायते मनुजः ॥"

इति । अत्र जीवशर्मणो मतमाह— जीवशर्मणः पक्षे तु क्रूरैः क्षित्यधिपः न प्रजायत इत्यन्वयः । क्रूरग्रहाणामुच्चगतत्वेन प्रकृष्टकार्यत्वं वा राजप्रतिरूपकत्वं वा भवत्येव, साक्षाद्राजत्वं न जायत इति जीवशर्मणो मतम् । पापफलसूचकानां क्रूराणां पुण्यफलभूतसकललोकवन्द्यत्वादिलक्षणराजत्वप्रतिपादनशक्तिः कथं घटत इति जीवशर्मणोमतम् । तथाच तद्वाक्यं —

१. 'णे कर्माजीवो द' क. पाठः. २. 'ढादढक' क. ग. पाठः. ३. 'मं यवनानां जीवशर्मणश्च मतप्रदर्शनार्थं वैतालीयमाह—' क. पाठः. ४. 'बलत्वे' ख. पाठः. ५. 'तं', ६. 'णं', ७. 'त्वं', ८. 'ति दान' क. ग. पाठः. ९. 'तम् । य' ख. ग. पाठः.

"पापैरुच्चगतैर्जाता न भवन्ति नरा नृपाः ।
किन्तु वित्ताधिकारस्ते स्युः क्रोधिनः कलहप्रियाः ॥"

इति । यवनाः पुनरेवं मन्यन्ते— द्विविधाः खलु राजानः क्रूरात्मानो धर्मात्मानश्चेति । तत्र शुभग्रहबलाधिक्ये जातानां क्रूरात्मत्वं न घटते । अतः क्रूरग्रहबलाधिक्यसम्भवे राजयोगे जाताः क्रूरात्मानो भवन्तीति । आचार्यस्याप्येतदेवाभिप्रेतमित्युत्तरत्र व्यज्यते । अनेनैव स्वल्पजातकेऽभिहितं च —

"त्रिप्रभृतिभिरुच्चस्थैर्नृपवंशभवा भवन्ति राजानः ।
पञ्चादिभिरन्य(तमो ? कुलो)द्भवाश्च तद्वत् त्रिकोणगतैः ॥"

इति ॥ १ ॥

अथ द्वात्रिंशद्राजयोगान् वसन्ततिलकेनाह[1] —

**वक्रार्कजार्कगुरुभिः सकलैस्त्रिभिश्च**
**स्वोच्चेषु षोडश नृपाः कथितैकलग्ने ।**
**द्व्येकाश्रितेषु च तथैकतमे विलग्ने**
**स्वक्षेत्रगे शशिनि षोडश भूमिपाः स्युः ॥ २ ॥**

इति । स्वोच्चेषु वक्रार्कजार्कगुरुभिः सकलैः त्रिभिश्च कथितैक[2]लग्ने षोडश नृपाः स्युरित्यन्वयः । नृपाः नृपयोगा इत्यर्थः । मेषरवौ कर्किगुरौ तुलामन्दे मकरभौमे च सति एषां चतुर्णामेकतमे लग्ने चत्वारो राजयोगाः । त्रिभिश्चेति । वक्रार्कजार्कैः, वक्रार्कजगुरुभिः, वक्रार्कगुरुभिः, अर्कार्कजगुरुभिश्च त्रिभिस्त्रिभिरुच्चगतैरेकतमस्योदये सति द्वादश राजयोगाः । एवं षोडश राजयोगाः सम्भवन्ति । तथा शशिनि स्वक्षेत्रगे सति द्व्येकाश्रितेषु च एकतमे विलग्ने षोडश भूमिपाः स्युरित्यन्वयः । द्व्येकाश्रितेषु द्वयोरुच्चगतयोः वक्रार्कजार्कगुरूणां मध्ये द्वयोरुच्चाश्रितयोः अथवैकस्मिन्नुच्चाश्रिते सति उच्चगतस्यैकस्योदये सति च षोडश राजयोगा भवन्ति । द्वयोर्द्वयोरुच्चगतयोरेकस्योदये सति द्वादश राजयोगाः, एकैकस्योच्चगतस्योदये चत्वारः । स्वक्षेत्रगे शशिनीति षोडशस्वपि योजनीय[3]म् ॥ २ ॥

१. 'ते ॥ अथ योगानाह' ख. ग. पाठः. २. 'कतमे विल' क. ग. पाठः. ३. 'यम् । ब' ख. ग. पाठः.

अधुना चतुश्चत्वारिंशद्राजयोगाननुष्टुभाह—

**वर्गोत्तमगते लग्ने चन्द्रे वा चन्द्रवर्जितैः।**
**चतुराद्यैर्ग्रहैर्दृष्टे नृपा द्वाविंशतिः स्मृताः ॥ ३ ॥**

लग्ने वर्गोत्तमगते चन्द्रे वा वर्गोत्तमगते चन्द्रवर्जितैः चतुराद्यैः ग्रहैः दृष्टे द्वाविंशतिः नृपाः स्मृता इत्यन्वयः। चतुराद्यैरिति चतुर्भिः पञ्चभिः षड्भिर्वा ग्रहैर्दृष्टे द्वाविंशती राजयोगा भवन्ति। तत्र षड्भिर्दृष्टे एकः, पञ्चभिर्दृष्टे षट्, चतुर्भिर्दृष्टे पञ्चदश। एवं द्वाविंशतिर्वर्गोत्तमगते लग्ने सति भवन्ति[1]। तत्र लग्ने चन्द्रेण दृश्यमाने न योगभङ्गः, किन्तु पश्यतां मध्ये[2] स न गण्यते। स तु पश्यतु वा न वा। अन्यैश्चतुरादिभिर्ग्रहैर्दृष्टे योगा भवन्ति। तथा चन्द्रे वर्गोत्तमगते चतुराद्यैर्दृष्टेऽपि द्वाविंशती राजयोगा भवन्ति। तस्मादत्र चतुश्चत्वारिंशद्राजयोगा उक्ताः[3] परमार्थेनैतद् योगद्वयमेव वर्गोत्तमगते चन्द्रे चतुराद्यैर्दृष्टे एकः लग्ने द्वितीयः। सङ्ख्यादर्शनं गणितप्रदर्शनार्थम्। अत्र वर्गोत्तमे गणितं क्रियते। तदेतेषामेव योगानां चतुष्षष्ट्यधिक(योग?)शतद्वयं भवति। एवं चन्द्रयोगानामेकीकृतेऽष्टाविंशत्यधिकपञ्चशतानि भवन्ति[4]। वर्गोत्तममात्रनिर्देशात् तदाश्रयराशिभेदकृता भेदा अत्र नापेक्ष्यन्ते[5] ॥३॥

अथ शिखरिण्या पञ्च राजयोगानाह—

**यमे कुम्भेऽर्केऽजे शशिनि गवि तैरेव तनुगै-**
**र्नृयुक्सिंहालिस्थैः शशिजगुरुवक्रैर्नृपतयः।**
**यमेन्दू तुङ्गेऽङ्गे सवितृशशिजौ षष्ठभवने**
**तुलाजेन्दुक्षेत्रैः ससितकुजजीवैश्च नरपौ ॥ ४ ॥**

यमे कुम्भे अर्के अजे शशिनि गवि च स्थिते सति तैरेव तनुगैस्तेष्वेवैकस्मिँल्लग्नस्थे सति इत्यर्थः। नृयुक्सिंहालिस्थैः मिथुनसिंहवृश्चिकस्थैः शशिजगुरुवक्रैः नृपतयः त्रयो राजयोगा भवन्ति। अत्र षड्भिर्ग्रहैर्यथोक्तराशिस्थितैर्योगः। तत्र मन्दरविचन्द्राणामुदयस्थितिभेदेन स त्रिविधो भवति। अतस्त्रयो राजयोगाः स्युः। अत्र *मेषस्थेऽर्के

1. 'न्ति। तथा' ग. पाठः. 2. 'ध्ये न' क. पाठः 3. 'क्ताः वर्गोत्तमग्रा' ख. ग. पाठः. 4. 'न्ति। अथ' क. पाठः. 5. 'न्ते ॥ य' ख ग. पाठः.

* 'परमोच्चगतेऽर्के' इत्याशयः.

बुधस्य मिथुनस्थित्यसंभवात् केचिदेवं व्याचक्षते — यमे कुम्भेऽर्केऽजे गवि शशिनि तैरेव तनुगैः तेषामेकस्मिन् लग्नगते सति त्रयो राजयोगाः । नृयुक्सिंहालिस्थैः शशिजगुरुवक्रैः तैरेव तनुगैः त्रयो योगा इति । यमेन्दू तुङ्गे, यमेन्दू मन्दचन्द्रौ तुङ्गे उच्चे अङ्गे लग्ने। यमेन्द्वोरुच्चगतयोरेक(तमे ? तरस्मिन्) लग्नगते सतीत्यर्थः । सवितृशशिजौ षष्ठभवने कन्यायां च यदि भवतः, तुलाजेन्दुक्षेत्रैः ससितकुजजीवैश्च नरपौ द्वौ राजयोगौ भवत इत्यर्थः । अयं योगः सप्तभिरपि ग्रहैर्यथोक्तराशिस्थितैः सम्भवति । स च लग्नभेदाद् द्विविधो भवतीति द्योतयितुं नरपावित्यत्र द्विवचनं कृतम् ॥ ४ ॥

अथ शिखरिण्या राजयोगत्रयमाह—

**कुजे तुङ्गेऽर्केन्द्वोर्धनुषि यमलग्ने च कुपतिः**
**पतिर्भूमेश्चान्यः क्षितिसुतविलग्ने सशशिनि ।**
**सचन्द्रे सौरेऽस्ते सुरपतिगुरौ चापधरगे**
**स्वतुङ्गस्थे भानावुदयमुपयाते क्षितिपतिः ॥ ५ ॥**

कुजे तुङ्गे मकरस्थे अर्केन्द्वोर्धनुषि स्थितयोः यमलग्ने यमस्य मन्दस्य उदये कुपतिः राजयोगो भवति । तथाच बादरायणः—

"लग्ने सौरस्तुङ्गे भौमश्चन्द्रादित्यौ चापं प्राप्तौ"

इति । अत्र केचित् —यमलग्न इत्यत्र राशिविशेषानुक्त्या मकरस्यापि यमलग्नत्वसम्भवादाचार्येण मन्दभौमसहितस्य मकरस्य लग्नत्वं विवक्षितमिति व्याचक्षते । तेषां माण्डव्यवचनं प्रमाणम् । तद्यथा —

"आदित्यश्च निशाकरश्च भवतो बाणासनार्धे यदा
साधं भास्करिणा स्ववीर्यसहितः प्राप्तो मृगं मङ्गलः ।
प्राप्नोति प्रभवं हि यः स सुकृती क्ष्मापालचूडामणि-
स्त्रस्यन्ति प्रतियोगिनो रणमुखे यस्मात् कृतान्तादिव ॥"

इति । अत्रैव चन्द्रे कुजेन सह मकरस्थिते लग्नगतेऽपि राजयोग इत्याह— सशशिनि क्षितिसुतविलग्ने अर्के धनुषि स्थिते अन्यश्च भूमेः पतिः अन्यो राजयोग इत्यर्थः । अत्र बादरायणः—

---

१. 'तम् । कु' ख. ग. पाठः.

"सूर्यश्चापे सेन्दुर्भौमस्तुङ्गं प्राप्तो लग्ने वा स्यात्"

इति। सचन्द्रे सौरे अस्तस्थिते सुरपतिगुरौ चापधरगे स्वतुङ्गस्थे भानौ उदयमुपयाते क्षितिपतिर्भवतीत्यन्वयः। मेषार्कोदये तुलास्थे[2] चन्द्रे मन्दे च, धनुःस्थिते सुरगुरौ च सति राजयोगो भवतीत्यर्थः ॥ ५ ॥

अथ शिखरिण्या राजयोगद्वयमाह—

**वृषे सेन्दौ लग्ने सवितृगुरुतीक्ष्णांशुतनयैः**
**सुहृज्जायाखस्थैर्भवति नियमान्मानवपतिः।**
**मृगे मन्दे लग्ने सहजरिपुधर्मव्ययगतैः**
**शशाङ्काद्यैर्जातः पृथुगुणयशाः पुङ्गलपतिः ॥ ६ ॥**

इति। सेन्दौ वृषे लग्ने सुहृज्जायाखस्थैः सवितृगुरुतीक्ष्णांशुतनयैः नियमान्मानवपतिर्भवतीत्यन्वयः। चन्द्रार्कमन्दैर्मूलत्रिकोणस्थैः चन्द्रोदये सप्तमस्थे गुरौ च सति नियमाद् असंशयेन राजा भवतीत्यर्थः। मन्दे मृगे लग्ने शशाङ्काद्यैः सहजरिपुधर्मव्ययगतैः जातः पृथुगुणयशाः पुङ्गलपतिर्भवति। मकरस्थमन्दोदये मीनचन्द्रे मिथुनकुजे कन्याबुधे चापगुरौ च सति प्रसूतः पुङ्गलपतिर्भवति पुङ्गला मनुष्याः तेषां पतिः राजेत्यर्थः। अत्र शशाङ्काद्यैरित्युक्तम्। शुक्रः क्व गच्छतु इत्युच्यते यथासङ्ख्यं पञ्चमस्थानस्याविद्यमानत्वात्। शुक्रस्य चन्द्रादेः[3] पञ्चमत्वादनवकाशः। तेन शुक्रार्कौ यत्रकुत्रापि स्थिताविति ॥ ६ ॥

अथ शिखरिण्या राजयोगत्रयमाह—

**हये सेन्दौ जीवे मृगमुखगते भूमितनये**
**स्वतुङ्गस्थौ लग्ने भृगुजशशिजावत्र नृपती।**
**सुतस्थौ वक्रार्की गुरुशशिसिताश्चापि हिबुके**
**बुधे कन्यालग्ने भवति हि नृपोऽन्योऽपि गुणवान् ॥**

सेन्दौ जीवे हये धनुषि स्थिते, भूमितनये मृगमुखगते, स्वतुङ्गस्थौ भृगुजशशिजौ स्वतुङ्गस्थे भृगुजे स्वतुङ्गस्थे शशिजे वा तयो-

---

१. 'रौ स' क. ग. पाठः. २. 'र्थः। वृ', ३. 'ति। हये' ख. ग. पाठः.

युगपत् तुङ्गस्थित्यभावाद् एकस्मिन्नुच्चगते लग्ने सतीत्यर्थः । अत एवाह — अत्र नृपती । अत्र द्वौ राजयोगाविति यावत् । बुधे कन्यालग्ने स्थिते सति वक्रार्की सुतस्थौ मकरस्थौ गुरुशशिसिताश्चापि हिबुके धनुषि स्थिताश्चेदन्योऽपि गुणवान् नृपो भवतीति सम्बन्धः ॥ ७ ॥

अथ शिखरिण्या राजयोगत्रयमाह—

**झषे सेन्दौ लग्ने घटमृगमृगेन्द्रेषु सहितै-**
**र्यमारार्कैर्योऽभूत् स खलु मनुजः शास्ति वसुधाम् ।**
**अजे भूजे मूर्तौ शशिगृहगते चामरगुरौ**
**सुरेड्ये वा लग्ने धरणिपतिरन्योऽपि गुणवान् ॥ ८ ॥**

सेन्दौ झषे लग्ने यमारार्कैः घटमृगमृगेन्द्रेषु सहितैः योऽभूत् स खलु मनुजः वसुधां शास्तीत्यन्वयः । मीनचन्द्रोदये कुम्भमन्दे मकरभौमे सिंहार्के च सति यो जातः स राजेत्यर्थः । खलुशब्दो वाक्यालङ्कारे । भूजे अजे मूर्तौ अमरगुरौ शशिगृहगते च सति धरणिपतिः भूपतिः, अथवा शशिगृहगते सुरेड्ये लग्ने भूजे अजे च अन्योऽपि गुणवान् धरणिपतिर्भवतीति अत्र द्वौ राजयोगौ ॥ ८ ॥

अधुना राजयोगं विद्युन्मालयाह —

**कर्किणि लग्ने तत्स्थे जीवे**
**चन्द्रसितज्ञैरायं प्राप्तैः ।**
**मेषगतेऽर्के जातं विद्याद्**
**विक्रमयुक्तं पृथ्वीनाथम् ॥ ९ ॥**

कर्किणि लग्ने जीवे तत्स्थे कर्कटकस्थे चन्द्रसितज्ञैरायं प्राप्तैः [वृ]षस्थैरिति यावत्, अर्के मेषगते च जातं विक्रमयुक्तं पृथ्वीनाथं विद्यादित्यर्थः ॥ ९ ॥

अथ स्वागतया (?) राजयोगमाह —

**मृगमुखेऽर्कतनये तनुसंस्थे**
**क्रियकुलीरहरयोऽधिपयुक्ताः ।**

---

१. 'अत्र' क. पाठः. २. 'न्धः । झ' ख. ग. पाठः. ३. 'तिर्भवति । अ', [४]. 'द्वौ यो' क. ग. पाठः. ५. 'गौ । क' ख. ग. पाठः. ६., ७. 'भूमेर्नाथम्' [ख]. ग. पाठः.

**मिथुनतौलिसहितौ बुधशुक्रौ**
**यदि ततः पृथुयशाः पृथिवीशः[2] ॥ १० ॥**

इति। अर्कतनये मृगमुखे तनुसंस्थे सति क्रियकुलीरहरयोऽधिपयुक्तौ[1] यदि ततः पृथुयशाः पृथिवीशो भवतीत्येको योगः। तथार्कतनये मृगमुखे तनुसंस्थे बुधशुक्रौ मिथुनतौलिसहितौ यदि मिथुनस्थौ तौलिस्थौ वा यदि ततोऽपि पृथिवीश इति योगद्वयम्। बुधशुक्रयोरेककाले मिथः पञ्चमनवमस्थित्यभावात्। अतो मृगमन्दोदये मिथुनस्थौ बुधशुक्रौ अथवा तौलिस्थाविति योगद्वयकल्पनात्र कर्तव्या। युवतितौलिसहितौ बुधशुक्राविति वा पाठः। तत्रार्कतनये मृगमुखगते तस्मिन्नेव तनुसंस्थे क्रियकुलीरहरयोऽधिपयुक्ता युवतितौलिसहितौ बुधशुक्रौ यदा (भवति?) तदा पृथिवीशो भवति पृथु(गुण?)यशाश्चेत्येको योगः॥ १० ॥

अथ राजयोगमनुष्टुभाह—

**स्वोच्चसंस्थे बुधे लग्ने**
**भृगौ मेषूरणाश्रिते।**
**सजीवेऽस्ते निशानाथे**
**राजा मन्दारयोः सुते ॥ ११ ॥**

बुधे स्वोच्चसंस्थे लग्ने, भृगौ मेषूरणाश्रिते मिथुनस्थे, निशानाथे सजीवे अस्ते, मन्दारयोः सुते स्थितयोर्जातो राजा भवति। अर्थात् सूर्यस्य सिंहस्थितिरप्युक्ता भवति॥ ११ ॥

उक्तेष्वेतेषु योगेष्वराजवंशजातोऽपि राजा भवति। वक्ष्यमाणेषु राजवंश्य एव। तद् वक्तुकामो मालिनीमाह —

**अपि खलकुलजाता मानवा राज्यभाजः**
**किमुत नृपकुलोत्थाः प्रोक्तभूपालयोगैः।**

---

१. 'युवतितौ', २. 'शः। अ', ३. 'क्ताः युवतितौलिसहितौ बुधशुक्रौ यदि ततः पृथुयशाः पृथिवीशो भवति। मिथुनतौलिसहिताविति वा पाठः। तत्पक्षे तु अर्कतनये मृगमुखे तनुसंस्थे बुधशुक्रौ मिथुनतौलिसहितौ यदि मिथुनस्थौ तौलिस्थौ वा यदि ततोऽपि पृथ्वीशौ इति योगद्वयम्' ख पाठः.

**नृपतिकुलसमुत्थाः पार्थिवा वक्ष्यमाणै-**
**र्भवति हि नृपतुल्यस्तेष्वभूपालपुत्रः ॥ १२ ॥**

प्रोक्तभूपालयोगैः खलकुलजाता मानवा अपि राज्यभाजो भवन्ति नृपकुलोत्थाः किमुत । नृपकुलोत्थानां राज्यप्राप्तिरवश्यम्भाविनीत्यर्थः । वक्ष्यमाणैः भूपालयोगैः नृपतिकुलसमुत्थाः पार्थिवा भवन्ति । राजकुलजाता एव राजानो भवन्ति । तेषु वक्ष्यमाणेषु योगेषु अभूपालपुत्रो नृपतुल्यो भवति ॥ १२ ॥

अथान्यान् राजयोगान् औपच्छन्दसिकेनाह —

***उच्चत्रिकोणगैर्बलसंस्थै-**
**स्त्र्याद्यैर्भूपतिवंशजा नरेन्द्राः ।**
**पञ्चादिभिरन्यवंशजाता**
**हीनैर्वित्तयुता न भूमिपाः स्युः ॥ १३ ॥**

इति । त्र्याद्यैः बलसंस्थैः उच्चत्रिकोणगैः भूपतिवंशजा नरेन्द्रा भवन्ति । त्रिभिश्चतुर्भिर्वा उच्चगैस्त्रिकोणगैर्वा । पञ्चादिभिरन्यवंशजाता अपि नरेन्द्रा भवन्ति । हीनैस्त्रिभ्यो हीनैः भूपतिवंशजाः, पञ्चभ्यो हीनैरन्यवंशजा अपि वित्तयुता भवन्त्येव । न भूमिपा भवन्तीत्यर्थः ॥ १३ ॥

अथान्यान् राजयोगान् विद्युन्मालयाह —

**लेखास्थेऽर्केऽजेन्दौ लग्ने**
**भौमे स्वोच्चे कुम्भे मन्दे ।**
**चापं प्राप्ते जीवे राज्ञः**
**पुत्रं विद्याद् भूमेर्नाथम् ॥ १४ ॥**

इति । अजेन्दौ लग्ने अर्के लेखास्थ इति । अजस्थ इन्दुरजेन्दुः तत्र लग्नस्थिते सति लग्नराशौ यत्रकुत्र स्थित इत्यर्थः । अर्के लेखास्थे उदय-

१, २. 'स्वो' ख. पाठः. ३. 'न्ति । त्र्याद्यैः त्रि', ४. 'भिः भूपतिवंशजाता अन्य', ५. 'ति लग्नराशिस्थित इत्यर्थः ल' क. ग. पाठः.

* 'स्वोच्चस्वगृहत्रिकोणसंस्थैः' इति मुद्रितपुस्तकपाठाङ्गीकारे वृत्तमुपपन्नं भवति ।

लेखास्थिते, अर्धोदयकाल इति यावत् । अत्र मेषस्थेऽर्के चन्द्रे च सति मेषलग्ने अर्कस्यार्धोदयकाले जात इत्युक्तं भवति । भौमे स्वोच्चे मकरस्थे, मन्दे कुम्भे, जीवे चापं प्राप्ते च सति जातं राज्ञः पुत्रं भूमेर्नाथं विद्यादित्यन्वयः ॥ १४ ॥

अन्यं राजयोगं विद्युन्मालयाह —

स्वर्क्षे शुक्रे पातालस्थे
धर्मस्थानं प्राप्ते चन्द्रे ।
दुश्चित्काङ्गप्राप्तिप्राप्तैः
शेषैर्जातः स्वामी भूमेः ॥ १५ ॥

इति । स्वर्क्षे पातालस्थे शुक्रे, वृषभे तुलायां वा चतुर्थस्थान इति यावत् । चन्द्रे धर्मस्थानं प्राप्ते शेषैर्दुश्चित्काङ्गप्राप्तिप्राप्तैः यथायोगं तृतीयलग्नलाभस्थैर्जातः भूमेः स्वामी भवतीति सम्बन्धः। अन्यकुलजो धनवान् भवति ॥ १५ ॥

सौम्ये वीर्ययुते तनुसंस्थे
वीर्याढ्ये च शुभे शुभयाते ।
धर्मार्थोपचयेष्वथ शेषै-
र्धर्मात्मा नृपजः पृथिवीशः ॥ १६ ॥

स्पष्टार्थः श्लोकः ॥ १६ ॥

अन्यं राजयोगं वंशस्थेनाह —

वृषोदये मूर्तिधनारिलाभगैः
शशाङ्कजीवार्किसितैर्नृपोऽपरः ।
सुखे गुरौ खे शशितिग्मदीधिती-
यमोदये लाभगतैर्नृपोऽपरैः ॥ १७ ॥

इति। वृषोदये वृषलग्ने मूर्तिधनारिलाभगैः क्रमेण शशाङ्कजीवार्किसितैरपरो नृपो भवति । 'उच्चत्रिकोणगैस्त्र्याद्यैरि'ति पूर्वमुक्तस्याप्यस्य योगस्य गोबलीवर्दन्यायेन पुनरुपादानं पूजार्थमिति द्रष्टव्यम् ।

१. 'न्धः ॥' ख. पाठः. २. 'सौम्ये वीर्ययुते तनुसंस्थे वीर्याढ्ये शुभे शुभयाते च सति शेषैर्धर्मार्थोपचयेषु स्थितैश्च जातो नृपजः नृपतिकुलजो धर्मात्मा पृथिवीशो भवतीत्यन्वयः । अन्यकुलजो धनवांश्च भवतीत्यर्थः ॥' क. पाठः. ३. 'व्यम् । यत्र' ख. ग. पाठः.

शशाङ्कजीवार्कसुतापरैर्नृपं इति वा पाठः। तत्रापरैरादित्याङ्गारकबुधशुक्रैर्लाभस्थैरिति। यत्रकुत्र राशौ लग्नगते, गुरौ सुखे, खे शशितिग्मदीधिती खे दशमे चन्द्रार्कौ, यमोदये मन्दोदये च सति अपरैर्ग्रहैः लाभगतैर्नृपो राजा भवति[1] ॥ १७ ॥

अथान्यद् राजयोगद्वयं वसन्ततिलकेनाह —

**मेषूरणायतनुगाः शशिमन्दजीवा**
**ज्ञारौ धने सितरवी हिबुके नरेन्द्रः।**
**वक्रासितौ शशिसुरेड्यसितार्कसौम्या**
**होरासुखास्तशुभखाप्तिगताः प्रजेशः ॥ १८॥**

इति। मेषूरणायतनुगाः शशिमन्दजीवाः, धने ज्ञारौ, अथवा हिबुके सितरवी यदि तदा नरेन्द्रो भवतीत्यर्थः। वक्रासितौ शशिसुरेज्यसितार्कसौम्याः क्रमेण होरासुखास्तशुभखाप्तिगताः यदि भवन्ति तदा प्रजेशो भवतीत्यर्थः[2]। वक्रासिताविति पृथङ्निर्देशस्तयोरुभयोरपि होरास्थितिं द्योतयितुं कृत इति द्रष्टव्यम् ॥ १८ ॥

एवमुक्तानां राजयोगानां फलागमकालं स्वौगतयाह[3] —

**कर्मलग्नगतपाकदशायां**
**राज्यलब्धिरथवा प्रबलस्य।**
**शत्रुनीचगृहयातदशायां**
**छिद्रसंश्रयदशा परिकल्प्या ॥ १९ ॥**

इति। कर्मलग्नगतपाकदशायां राज्यलब्धिर्भवति इत्यन्वयः। कर्मगतो लग्नगतश्च तयोर्योगकर्तृग्रहेष्वन्यतमयोः बलाधिकस्य पाकदशायाम् अन्तर्दशायां राज्यलब्धिर्भवति। अत्र राजयोगाभावेऽपि कर्मगतस्य वा लग्नगतस्य वा पाकदशायाम् अथवा कर्माधिपस्य वा लग्नाधिपस्य वा पाकदशायां जन्मिनां स्वस्वगृहाधिपत्यस्य प्राप्तिरित्यनुसन्धेयम्। अथवा प्रबलस्य जन्मकाले यः प्रबलो ग्रहः तस्य पाकदशायां राज्यलब्धिर्भवति।

"तुलायां दशमे भागे स्थिते कमलबोधने।
अपि राजकुले जातो भिक्षान्नेनोपजीवति ॥"

---

१. 'ति। अन्यकुलजो धनवांश्च भवति ॥' क. पाठः. २. 'र्थः। अत्र व' ख. पाठः. ३. 'दर्शयति — क' ख. ग. पाठः.

इत्यादीनामन्यशास्त्रोक्तानां राजयोगापवादानां सामान्यकारणं शत्रुनीचगतत्वमेवेतिताननुक्त्वा शत्रुनीचगतानां ग्रहाणां दशापाककालमुपदिशति —शत्रुनीचगृहयातदशायां छिद्रसंश्रयदशा परिकल्प्या । शातयतीति शत्रुः । शातनं तनूकरणम् । ततो भौमादीनां किरणोच्छेदकर्ता सूर्योऽपि मौढ्यावस्थायां शत्रुरित्युच्यते । सूर्यप्राप्तस्य स्वतः शत्रुजितस्य वा शत्रुषड्वर्गं प्राप्तस्य वा नीचगृहं यातस्य वा नीचराशिं प्राप्तस्य वा ग्रहस्य पाककाले छिद्रसंश्रयदशा परिकल्प्या । छिद्रं छिद्रप्रहारिभिः शत्रुभिरन्विष्यमाणमनर्थमूलमवस्थान्तरं छिद्रशब्देनोच्यते । तस्य संश्रयदशा प्राप्त्यवस्था राज्यभ्रंश इति यावत् । अथवा — छिद्रदशा अनर्थबहुलावस्था । संश्रयदशा अनर्थबाहुल्येन बलाधिकस्यान्यस्य संश्रयावस्था । अत्र छिद्रसंश्रयशब्देन भ्रंशप्राप्ति[2]रनर्थासहिष्णुतया बलवदन्यराजसंश्रयश्च विवक्ष्यत इति परिकल्प्येति पदेन द्योत्यते । परितो विचिन्त्य कल्पनं परिकल्पनम् । शत्रुनीचगृहयातदशायां पूर्वावस्थापरिहाणिर्भवत्येव । तत्रात्यन्तं भ्रंशो वा अनर्थबाहुल्यं वा अनर्थशमनायान्याश्रयो वा ग्रहाणां बलाबलवशेन निरूप्य वक्तव्य(म्) इत्यर्थः[3] ॥ १९ ॥

गुरुबुधसितलग्ने सप्तमस्थेऽर्कपुत्रे
वियति दिवसनाथे भोगिनां जन्म विद्यात् ।
शुभबलयुतकेन्द्रैः क्रूरभस्थैश्च पापै-
र्व्रजति शबरदस्युस्वामितामर्थभाक् च[4] ॥ ॥ २० ॥

गुरुबुधसितलग्ने अर्कपुत्रे सप्तमस्थे च भोगिनां जन्म विद्यादित्यन्वयः । गुरौ बुधे सिते च लग्नस्थे सति मन्दे सप्तमस्थे च भोगिनां भोगवतां राजतुल्यानामित्यर्थः । अत्र योगे गुरुबुधयोः शनेश्च त्रयाणां दिग्बलसम्भवात् कीर्तिमन्तः सुखिनो जायन्त इत्यर्थः । तथा गुरुलग्ने, सप्तमस्थे मन्दे, वियति दिवसनाथे च भोगिनां जन्म विद्यात् ।

१. 'फ' क. ग. पाठः २. 'प्तिरनर्थप्राप्तिर', ३. 'र्थः । अत्र च गार्गिः — "लग्नगः कर्मगो वा स्यादथवा प्रबलो ग्रहः । स स्यात् स्वान्तर्दशाकाले राज्यदः प्रबलो यदि ॥ नीचारिगृहसंस्थस्य दशायां प्रबलस्य च । च्युतिर्बलविहीनस्य तन्मोक्षः परसंश्रयात् ॥" इति ॥ १९ ॥ अथ भोगिनां शबरदस्युस्वामिनां च जन्मज्ञानं मालिन्याह — गु', ४. 'च ॥ इति । गु' क. पाठः.

अत्र बुधसितयोर्लग्नगतत्वं न विवक्षितम्, असम्भवात् । अतो दिग्बलयुक्ता गुरुशनिसूर्या योगफलप्रदा इति द्रष्टव्यम् । शुभबलयुत-केन्द्रैः क्रूरभस्थैः पापैश्च शबरदस्युस्वामितां व्रजति । केन्द्रैः शुभबल-युक्तैः, पापैः क्रूरभस्थैश्च शबरदस्यूनां नीचानां स्वामितां व्रजति अध्यक्षतां व्रजति, अर्थभाक् च भवति । शुभग्रहैर्बलयुक्तैः केन्द्रगतैरिति कैश्चिद् व्याख्यातम् । तच्चायुक्तम् । यस्माद् गार्गिः—

"पापक्षेत्रगतैः पापैः केन्द्रस्थैः सौम्यराशिभिः ।
सबलैर्यस्य जन्म स्यादसौ वै दस्युनायकः ॥"

इति ॥ २० ॥

इति होराविवरणे एकादशोऽध्यायः॥

---

## अथ द्वादशोऽध्यायः ।

विशिष्टजननसम्भवानत एव कादाचित्कान् राजयोगानुक्त्वेदानीं नभःस्थग्रहजनितान् नियतविषयानाकृतिसङ्ख्याश्रयदलभेदाच्चतुर्विधान् नाभसयोगान् निर्दिशति । तत्र प्रथमं तेषां सङ्ख्याविभागमौपच्छन्दसिकेनाह—

**नवदिग्वसवस्त्रिकाग्निवेदै-**
**र्गुणिता द्वित्रिचतुर्विकल्पजाः स्युः ।**
**यवनैस्त्रिगुणा हि षट्छती सा**
**कथिता विस्तरतोऽत्र तत्समासः ॥ १ ॥**

इति । द्वित्रिचतुर्विकल्पजा नाभसयोगाः सङ्ख्यया त्रिकाग्निवेदै-र्गुणिता नवदिग्वसवः स्युरिति सम्बन्धः । द्वयोस्त्रयाणां चतुर्णां च वि-कल्पेन जाता द्वित्रिचतुर्विकल्पजाः । द्वयोराकृतिसङ्ख्ययोर्विकल्पेन जाता योगाः त्रिकेण गुणिता नव सप्तविंशतिः स्युः । त्रयाणामाकृतिसङ्ख्या-श्रयाणां विकल्पजा योगाः अग्निगुणिता दिशः त्रिंशत् स्युः । चतु-र्णामाकृतिसङ्ख्याश्रयदलानां विकल्पजा योगा वेदगुणिता वसवः द्वात्रिंशत् स्युः । अत्र सप्तविंशतौ सङ्ख्यायोगाः सप्तेति वक्ष्यति । अतो विंशतिराकृतियोगाः सप्त सङ्ख्यायोगाश्च । सप्तविंशतिभिः सहैव त्रिंशत् । अतस्त्रय आश्रययोगाः । त्रिंशद्भिः सहैव द्वात्रिंशत् । अतो

---

१. 'क्तैः शुभक्षेत्रैर्बलयुक्तैरिति यावत् । पा' क. पाठः. २. 'ति ॥ २० ॥' ख. ग. पाठः. ३. 'ति राजयोग ए' क. पाठः ४. 'गः प्रदर्श्यन्ते — न' ख. ग. पाठः,

द्वौ दलयोगौ। एवं सम्भूय द्वात्रिंशन्नाभसयोगा भवन्ति । एतेषु योगेषु राशिभिर्ग्रहैश्च पृथक् पृथग् विकल्प्यमानेषु सङ्ख्याबाहुल्यं भवतीति यवनानां मतेनाह — यवनैः सा त्रिगुणा षट्छती कथिता । ते नाभसयोगाः सा इत्यनेन परामृश्यन्ते । निर्दिश्यमानप्रतिनिर्दिश्यमानयोरेकार्थतामापादयन्ति सर्वनामानः पर्यायेण च तल्लिङ्गमुपाददत इति षट्छतीगतस्त्रीलिङ्गेन सेति निर्देशः कृतः । षट्छती षण्णां शतानां समाहारः षट्छती, सा त्रिगुणा अष्टादशशतानि । यवनाचार्यैः ते द्वात्रिंशन्नाभसयोगाः विस्तरेण फलविशेषैः सहेति यावत् । अष्टादश शतानि कथितानि । हिः प्रसिद्धौ । अत्र तत्समासः । अत्र तेषां समासः संक्षेपाद् द्वात्रिंशदेव कथ्यन्त इत्यर्थः ॥ १ ॥

तत्राश्रययोगानाह[1] —

रज्जुर्मुसलं नलं चराद्यैः
सत्यस्त्वाश्रयजानिहाह योगान् ।
केन्द्रैः सदसद्युतैर्दलाख्यौ
स्रक्सर्पौ कथितौ पराशरेण ॥ २ ॥

इति । इह सत्यस्तु चराद्यैः ग्रहयुतैः रज्जुः मुसलं नलम् आश्रयजान् योगानाहेत्यन्वयः । इह नाभसयोगेषु चराद्यैः चरस्थैः सर्वैर्ग्रहैः रज्जुः स्थिरस्थैः मुसलम्, उभयस्थैः नलम् इति आश्रयजान् आश्रयभूतैश्चरादिभिर्जातानित्यर्थः । सदसद्युतैः केन्द्रैः दलाख्यौ स्रक्सर्पौ पराशरेण कथितावित्यन्वयः । केन्द्रैः शुभयुतैर्दलाख्यः स्रग्योगः, अशुभयुतैर्दलाख्यः सर्पयोगः, इति द्वौ दलयोगौ । एवमाश्रययोगास्त्रयः । दलयोगौ च द्वौ[2] । वक्ष्यमाणेष्वाकृतिसङ्ख्यायोगेष्वन्तर्भावेऽप्येषामवश्यभाविफलप्रदत्वप्रदर्शनाय प्रथमं निर्देशः कृत इति वेदितव्यम् ॥ २ ॥

---

१. 'अथाश्रययोगत्रयं चौपच्छन्दसिकेनाह—', २. 'द्वौ । अत्र कैश्चिद् व्याख्यातं चरराशिचतुष्के यदा सर्वे ग्रहा भवन्ति तदा रज्जुर्नाम योगः, एवं स्थिरराशिचतुष्के मुसलं, द्विस्वभावचतुष्के नलम् । तच्चायुक्तम् । यस्माद् गार्गिः — "एको द्वौ वा त्रयः सर्वे सर्वैर्युक्ता यदा ग्रहैः । चरयोगस्तदा रज्जुः सेव्यानां जन्मनो भवेत् ॥ स्थिरश्चेन्मुसलं नाम मानिनां जन्मकृन्नृणाम् । द्विस्वभावे नलाख्यं तु धनिनां परिकीर्तितम् ॥" तथाच सत्यः—"चरराशिगैर्ग्रहेन्द्रै रज्जुः स्थिरराशिगैस्तथा मुसलम् । द्विशरीरगतैर्योगो भवति नलो मुनिभिरुद्दिष्टः ॥" इति । व' क. पाठः.

एतान् योगान् प्रत्यन्येषां मतं दर्शयति[1] —

योगा व्रजन्त्याश्रयजाः समत्वं
यवाब्जवज्राण्डजगोलकाद्यैः ।
केन्द्रोपगप्रोक्तफलौ दलाख्या-
वित्याहुरन्ये न पृथक्फलौ तौ ॥ ३ ॥

इति । आश्रयजा योगा यवाब्जवज्राण्डजगोलकाद्यैः समत्वं व्रजन्तीत्यन्वयः । केन्द्रपणपरापोक्लिमानामसङ्करेण चरादित्वमसङ्गात् समत्वमाश्रयजानामाकृतिजैरित्यन्ये आहुः । तथा दलाख्यावपि केन्द्रोपगप्रोक्तफलौ केन्द्रोपगप्रोक्तैर्योगैस्तुल्यफलौ पृथक्फलौ न भवत इति चान्ये आहुः । एवमन्येषां मते आश्रयदलयोगा न सन्तीति भावः ॥ ३ ॥

आकृतियोगानाह[2]—

आसन्नकेन्द्रभवनद्वयगैर्गदाख्य-
स्तन्वस्तगैस्तु शकटं विहगः खबन्ध्वोः ।
शृङ्गाटकं नवमपञ्चमलग्नसंस्थै-
र्लग्नान्यगैर्हलमिति प्रवदन्ति तज्ज्ञाः ॥ ४ ॥

इति । आसन्नकेन्द्रभवनद्वयगैः गदाख्यो योग इति तज्ज्ञाः प्रवदन्ति इत्यन्वयः । लग्नसुखगतैः सुखास्तगतैः अस्तदशमगतैः दशमलग्नगतैश्च ग्रहैर्गदाख्यो योग इत्यर्थः । लग्नसप्तमगैस्तैः[3] शकटम् । दशमचतुर्थगैर्विहगः । नवमपञ्चमलग्नसंस्थैः शृङ्गाटकम् । लग्नान्यगैः धनत्रिकोणे सहजत्रिकोणे हिबुकत्रिकोणे वा स्थितैर्ग्रहैर्हलसंज्ञो योग इति तद्विदो वदन्ति[4] ॥ ४ ॥

अथ वज्रादियोगान् वैतालीयेनाह —

शकटाण्डजवच्छुभाशुभै-
र्वज्रं तद्विपरीतगैर्यवः ।
कमलं तु विमिश्रसंस्थितै-
र्वापी तद् यदि केन्द्रबाह्यतः ॥ ५ ॥

---

१. 'तमुपजातिकयाह —', २. 'न् वसन्ततिलकेनाह —' क. पाठः. ३. 'गैः श' ग. पाठः. ४. 'न्ति ॥ श' ख. ग. पाठः.

इति। शकटाण्डजवच्छुभाशुभैर्वज्रम् इत्यन्वयः। शकटवत् तन्वस्तगैः शुभैः, विहगवत् खबन्धुस्थैरशुभैश्च वज्रं नाम योगः। तद्विपरीतगैर्यवः खबन्धुस्थैः शुभैस्तन्वस्तगैरशुभैश्च यवो नाम योग इत्यर्थः। विमिश्रसंस्थितैः कमलं तन्वस्तखबन्धुभिः चतुर्भिरपि शुभाशुभयुतैः कमलं कमलयोगः। तत् केन्द्रबाह्यतो यदि वापीत्यन्वयः। केन्द्रबाह्यतः केन्द्रादन्यत्र पणपरेषु चतुर्षु, अथवा आपोक्लिमेषु चतुर्षु स्थितैः शुभाशुभैर्वापी नाम योगो भवतीत्यर्थः ॥ ५ ॥

सूर्याच्चतुर्थभवने बुधशुक्रयोः स्थितत्वसम्भवात् कथमेवमुक्तमित्यत्राह[1] —

**पूर्वशास्त्रानुसारेण मया वज्रादयः कृताः।**
**चतुर्थभवने सूर्याज्ज्ञसितौ भवतः कथम् ॥ ६ ॥**

इति। मया पूर्वशास्त्रानुसारेण वज्रादयः कृता इत्यन्वयः। पूर्वशास्त्रानुसारेण पूर्वैरुक्तानि शास्त्राणि दृष्ट्वा तदनुसारेणेत्यर्थः। सूर्याच्चतुर्थभवने ज्ञसितौ कथं भवतः। तस्मात् तथोक्तयोगानाम् असम्भवेऽपि पूर्वशास्त्रेषु दृष्टा योगाः पूर्वशास्त्रबहुमानान्मयोक्ताः। अत्र कथमित्यन्ते निर्देशादक्षरसङ्ख्यया "मन्वन्तरं तु दिव्यानां युगानामेकसप्ततिः" इत्युक्तस्य मन्वन्तरप्रमाणस्य सूचनात् पूर्वस्मिन् मन्वन्तरे बुधशुक्रयोः परिधिप्रमाणचलनेन तथापि सम्भाव्यं, पूर्वाचार्या न वृथा वदन्तीत्याचार्यस्याभिप्रायो द्योत्यते। तथाच पूर्वशास्त्रवचनं प्रति वराहमिहिरेण संहितायामुक्तम् —

"आश्लेषार्धाद् दक्षिणमुत्तरमयनं तथा धनिष्ठाद्यम्।
पूर्वं कदाचिदासीद् यत् प्रोक्तं पूर्वशास्त्रेषु ॥
साम्प्रतमयनं सवितुः कर्कटकाद्यं मृगादितश्चान्यत्।"

(अध्या० ३. श्लो० १,२)

इति। कालान्तरायत्तस्यायनचलनस्य सद्भावदर्शनेनातिबहुकालान्तरायत्तं बुधशुक्रयोः परिधिचलनमपि सम्भाव्यमिति पूर्वाचार्यमतनिरासोऽत्र न कृतः, किन्तु तत्प्रदर्शनमेव कृतमिति द्रष्टव्यम्। आचार्येणान्यत्रापि पूर्वाचार्यमतविषयमात्मीयमतं प्रदर्शितम्। तथाहि —

---

[1] 'त्रानुष्टुभमाह—' क. पाठः.

"ज्योतिषमागमशास्त्रं विप्रतिपत्तौ न योग्यमस्माकम् ।
स्वयमेव विकल्पयितुं किन्तु बहूनां मतं वक्ष्ये ॥"

इति[1] ॥ ६ ॥

एवमद्यतनकालीनबुधशुक्रचारवशान्नाभसयोगेषु केषाञ्चिदसंभवेऽपि पूर्वशास्त्रप्रामाण्येन तत्प्रदर्शनमभिधाय पुनरपि प्रकृतमनुसरति —

**कण्टकादिप्रवृत्तैस्तु चतुर्गृहगतैर्ग्रहैः[2] ।**
**यूपेषुशक्तिदण्डाख्या होराद्यैः कण्टकैः क्रमात् ॥ ७ ॥**

इति । कण्टकादिप्रवृत्तैः चतुर्गृहगतैः ग्रहैः यूपेषुशक्तिदण्डाख्या योगा भवन्तीत्यन्वयः । कण्टकमारभ्य प्रवृत्तैः चतुर्षु राशिषु स्थितैर्ग्रहैः यूपादयो भवन्ति । कः कुत्रेत्याशङ्कायामाह — होराद्यैः कण्टकैः क्रमादिति । होरादितो यूपः, सुखादित इषुः, सप्तमादितः शक्तिः, दशमादि[3]तो दण्ड इति यावत्[4] ॥ ७ ॥

अथ नावादियोगपञ्चकमनुष्टुभाह —

**नौकूटच्छत्रचापानि तद्वत् सप्तर्क्षसंस्थितैः ।**
**अर्धचन्द्रस्तु नावाद्यैः प्रोक्तादन्यर्क्षसंस्थितैः ॥ ८ ॥**

इति । तद्वत् सप्तर्क्षसंस्थितैः ग्रहैः नौकूटच्छत्रचापानि भवन्ति । तद्वदिति यूपादिवदित्यर्थः । लग्नादारभ्य सप्तर्क्षसंस्थितैर्ग्रहैः नौयोगः । तथा सुखादितः कूटः । सप्तमादितश्छत्रम् । दशमादितश्चापयोगः । नावाद्यैः प्रोक्तादन्यर्क्षसंस्थितैस्तु अर्धचन्द्रो नाम योगो भवति । प्रोक्तादन्यर्क्षसंस्थितैरिति । प्रोक्तात् कण्टकाद् अन्य(त्र ? र्क्ष) पणपरादिसप्त(र्क्ष ? र्क्ष)संस्थितैः, अथवापोक्लिमादिसप्तर्क्षसंस्थितैर्ग्रहैरर्धचन्द्रो नाम योगः सम्भवति[5] ॥ ८ ॥

अथ समुद्रचक्राख्ययोगावनुष्टुभाह —

**एकान्तरगतैरर्थात् समुद्रः षड्गृहाश्रितैः ।**
**विलग्नादिस्थितैश्चक्रमित्याकृतिजसङ्ग्रहः ॥ ९ ॥**

इति । अर्थात् प्रभृति एकान्तरगतैः षड्गृहाश्रितैः ग्रहैः समुद्रो

१. 'ति ॥ अथ यूपादियोगचतुष्टयमनुष्टुभमाह —क' क. पाठः. २. 'तुर्गृहगतै ख. पाठः. ३. 'दितः प्रवृत्तैश्चतुर्गृहगतैर्ग्रहैर्दण्ड' क. पाठः. ४. 'त् ॥ नौ' ख. ग. पाठः ५. 'ति । अत एवाष्टप्रकारः ॥' क, 'ति ॥ ए' ख. ग. पाठः.

भवतीत्यन्वयः। धनस्थानमारभ्य एकान्तरस्थितैः लग्नाद् युग्मराशिषट्कस्थितैरिति यावत्। एवंस्थितैर्ग्रहैः समुद्राख्यो योगः। विलग्नादिस्थितैरेकान्तरगतैः षड्ग्रहाश्रितैः चक्रं भवतीत्यन्वयः। लग्नाद्योजराशिषट्कस्थितैर्ग्रहैश्चक्रनामा योगो भवति। इत्याकृतिजसङ्ग्रहः एवमाकृतिजानां योगानां सङ्ग्रहः संक्षेपः। एतेषां योगानां राशिग्रहविशेषजनितवैचित्र्यवशाद् विस्तरोऽपि वेदितव्य इति द्योतयितुं सङ्ग्रह इत्युक्तम्॥ ९॥

एवमाकृतिजानां विंशतिमुक्त्वा[1] सङ्ख्यायोगसप्तकं[2] शालिन्याह —

> सङ्ख्यायोगाः सप्त सप्तर्क्षसंस्थै-
> रेकापायाद् वल्लकी दामिनी च।
> पाशः केदारश्च शूलो युगं च
> गोलं चान्ये पूर्वमुक्तान् विहाय॥ १०॥

इति। सप्तर्क्षसंस्थैः एकापायात् सप्त सङ्ख्यायोगा भवन्तीत्यन्वयः। एकापायात्, "ल्यब्लोपे पञ्चमी" एकापायं विधायेत्यर्थः। तत्र सप्तर्क्षसंस्थैरेको योगः। तत एकापायेन षडृक्षस्थैः द्वितीयः। तत एकापायेन पञ्चर्क्षस्थैस्तृतीय इत्यादि। योगानां नामानि क्रमेणाह — सप्तर्क्षसंस्थितैर्ग्रहैर्वल्लकी। षडृक्षस्थैर्दामिनी। पञ्चर्क्षस्थैः पाशः। चतुर्ऋक्षस्थैः केदारः। त्रिराशिस्थैः शूलयोगः। द्विराशिस्थैर्युगम्। एकर्क्षस्थैर्गोलयोग इत्यर्थः। अत्रान्येषां मतमाह— अन्ये पूर्वमुक्तान् विहाय सङ्ख्यायोगा इति वदन्ति। पूर्वमुक्तेषु पञ्चविंशतियोगेषु सत्सु स एव ग्राह्यः। तेषामेकस्याऽपि लक्षणाभावे सङ्ख्यायोगो ग्राह्यो इति वदन्ति। 'अन्यान् पूर्वमुक्तान् विहाये'ति वा पाठः॥ १०॥

उक्तानां[5] द्वात्रिंशद्योगानां क्रमेण फलान्याह —

> ईर्ष्युर्विदेशनिरतोऽध्वरुचिश्च रज्ज्वां
> मानी धनी च मुसले बहुकृत्यसक्तः।
> व्यङ्गस्थिरार्थनिपुणो नलजः स्रगुत्थो
> भोगान्वितो भुजगजो बहुदुःखभाक् स्यात्॥ ११॥

---

१. 'नां पञ्चविं' ख. पाठः. २. 'गानाह —' ख. ग. पाठः. ३. 'गो', ४. 'ह्य' ग. पाठः. ५. 'अथाश्रययोगत्रयदलयोगजातानां फलं वसन्ततिलकेनाह —' क. पाठः.

इति । रज्ज्वां रज्जुयोगे जातः, ईर्ष्युः ईर्ष्याशीलः, विदेशनिरतः अन्यदेशवासी, अध्वरुचिश्च भवति । मुसले मानी गर्वितः, धनी, बहुकृत्यसक्तः बहुकर्मारम्भशीलश्च भवति । नलजः नलयोगजातः व्यङ्गः अङ्गवैकल्ययुक्तः, स्थिरः, अर्थनिपुणश्च भवति । आढ्यनिपुण इति वा पाठः । स्रगुत्थो भोगान्वितः । स्रग्योगे जातः भोगान्वितः भोगैः स्रक्चन्दनवनितादिभिरन्वितो भवति । भुजगजः बहुदुःखभाक् स्यात् । भुजगजः सर्पयोगजातः बहुःदुखभाक् स्याद् बहूनि दुःखानि लभते ॥ ११ ॥

एषां फलदाने विशेषमाह[1]—

**आश्रयोक्तास्तु विफला भवन्त्यन्यविमिश्रिताः ।**
**मिश्रा यैस्ते फलं दद्युरमिश्राः स्वफलप्रदाः ॥ १२ ॥**

इति । उक्तेषु योगेषु आश्रयोक्तानामन्येषां च युगपल्लक्षणसम्भवे आश्रयोक्ता विफला भवन्ति । अन्यविमिश्रिता इति हेतुगर्भं विशेषणम् । यैर्मिश्रास्ते योगाः फलं दद्युः । अन्ययोगफलमेव भवति । अमिश्राः स्वफलप्रदाः । अन्ययोगैरमिश्रा एव आश्रययोगाः स्वफलं प्रयच्छन्ति ॥ १२ ॥

अथ गदादियोगफलं वसन्ततिलकेनाह —

**यज्वार्थभाक् सततमध्वरुचिर्गदायां**
**तद्वृत्तिभुक् शकटजः सरुजः कुदारः ।**
**दूतोऽटनः कलहकृद् विहगे प्रदिष्टः**
**शृङ्गाटके चिरसुखी कृषिकृद्धलाख्ये[2] ॥ १३ ॥**

इति । गदायां यज्वा यजनशीलः, अर्थभाक् सततं धनयुतः, अध्वरुचिश्च भवति अध्वगमनशील इति यावत् । अर्थरुचिरिति वा पाठः । शकटजः तद्वृत्तिभुक् तद्वृत्त्या शकटवृत्त्या जीवति भारादीनां वाहनेन वहनेन वा जीवति । सरुजः रोगी, कुदारः कुत्सितभार्यश्च भवति । विहगे दूतः सन्देशहरः, अटनः गमनशीलः, कलहकर्ता च प्रदिष्टः । शृङ्गाटकयोगे चिरसुखी चिरकालसुखी । हलाख्ये कृषिकृत् कृषिकर्ता भवति ॥ १३ ॥

---

१. 'षमनुष्टुभमाह—' क. पाठः. २. 'ति ॥ वज्रे' ख. ग. पाठः.

अथ वज्रादिफलं वसन्ततिलकेनाह—

**वज्रेऽन्त्यपूर्वसुखितः सुभगोऽतिशूरः**
**शौर्यान्वितोऽप्यथ यवे सुखितो वयोन्त्ये ।**
**विख्यातकीर्त्यमितसौख्यगुणश्च पद्मे**
**वाप्यां तनुस्थिरसुखो निधिकृन्न दाता ॥ १४॥**

इति । वज्रयोगे अन्त्यकाले पूर्वकाले च सुखितः, सुभगः सर्वजनवल्लभः, अतिशूरश्च भवति । अथ यवयोगे शौर्यान्वितः, वयोन्त्ये सुखितश्च भवति । पद्मयोगे विख्यातकीर्त्तिः प्रसिद्धयशाः, अमितसौख्यः अमितगुणश्च भवति । वाप्यां वापीयोगे तनुस्थिरसुखः तनु अल्पं स्थिरं सुखं यस्य सः । अल्पसुखं बहुकालं भवतीत्यर्थः । निधिकृद् भूमावर्थस्थापनशीलः । दाता नच दानशीलो न भवति च[1] ॥ १४ ॥

अथ यूपादिफलं वसन्ततिलकेनाह—

**त्यागात्मवान् क्रतुवरैर्यजते च यूपे**
**हिंस्रोऽथ गुप्त्यधिकृतः शरकृच्छराख्ये ।**
**नीचोऽलसः सुखधनैर्वियुतश्च शक्तौ**
**दण्डे प्रियैर्विरहितः पुरुषोऽन्त्यवृत्तिः ॥ १५ ॥**

इति । यूपे यूपयोगे त्यागात्मवान् त्यागवान् आत्मवांश्च, क्रतुवरैर्यजते च । अथ शराख्ये हिंस्रः हिंसाशीलः, गुप्त्यधिकृतः कारागृहरक्षकः, शरकृत् शरसम्पादकश्च भवति । शक्तौ योगे नीचः अलसः[2] मन्दः, सुखधनैर्वियुक्तश्च भवति । दण्डे योगे प्रियैर्विरहितः अभीष्टजनैर्वियुक्तः, पुरुषः पौरुषयुक्तः, अन्त्यवृत्तिः अन्त्यवयसि वृत्तियुक्तश्च भवति । अन्त्यवृत्तिरित्यत्र उपनिषद्वाक्यविचारको वा शूद्रवृत्तिरिति वा केचिद् व्याचक्षते ॥ १५ ॥

अथ नावादियोगफलं वसन्ततिलकेनाह—

**कीर्त्या युतश्चलसुखः कृपणश्च नौजः**
**कूटेऽनृतः प्लवनबन्धनपश्च जातः ।**

---

१. 'च ॥ त्या' ख. ग. पाठः. २. 'सः क्रियास्वपटुः सु' क. पाठः. ३. 'ति ॥ की' ख. ग. पाठः.

**छत्रोद्भवः स्वजनसौख्यरतोऽन्त्यसौख्यः**
**शूरस्तु कार्मुकभवः प्रथमान्त्यसौख्यः ॥ १६ ॥**

इति । नौजः नौयोगजातः कीर्त्या युतः, चलसुखैः, कृपणश्च भवति । कूटे कूटयोगे जातः अनृतः सत्यरहितः, प्लवनबन्धनपश्च प्लवनं जलतरणादिकं बन्धनं कारागारं पाति रक्षतीति प्लवनबन्धनपः । अनृतश्च प्लवनबन्धनपश्च भवतीत्यर्थः । छत्रोद्भवः छत्रयोगे जातः स्वजनसौख्यरतः बन्धूनां सुखं करोति अन्त्यवयसि सौख्यवांश्च भवति । कार्मुकभवः चापयोगे जातस्तु शूरः, प्रथमवयसि अन्त्यवयसि च सौख्यवान् भवति ॥ १६ ॥

अथार्धचन्द्रादियोगफलं वसन्ततिलकेनाह —

**अर्धेन्दुजः सुभगकान्तवपुः प्रधान-**
**स्तोयालये नरपतिप्रतिमस्तु भोगी ।**
**चक्रे नरेन्द्रमकुटद्युतिरञ्जिताङ्घ्रि-**
**र्वीणोद्भवश्च निपुणः प्रियगीतनृत्तः ॥ १७ ॥**

इति । अर्धेन्दुजः अर्धचन्द्रयोगे जातः सुभगकान्तवपुः सुभगकान्तशरीरः, प्रधानः स्वजनप्रधानश्च भवति । तोयालये तु समुद्रयोगे तु नरपतिप्रतिमः भोगी च भवति । चक्रे चक्रयोगे नरेन्द्रमकुटद्युतिरञ्जिताङ्घ्रिः चक्रवर्ती भवति । आकृतियोगफलान्युक्तानि । सङ्ख्यायोगफलान्याह — वीणोद्भवः वीणायोगे जातः निपुणः सर्वकर्मसु कुशलः, प्रियगीतनृत्तश्च भवति ॥ १७ ॥

अथ दामिन्यादियोगफलं वसन्ततिलकेनाह —

**दातान्यकार्यनिरतः पशुपश्च दाम्नि**
**पाशे धनार्जनसुशीलसुभृत्यबन्धुः ।**
**केदारजः कृषिकरः सुबहूपभोज्यः**
**शूरः क्षतो वधरुचिर्विधनश्च शूले ॥ १८ ॥**

इति । दाम्नि दामयोगे दाता, अन्यकार्यनिरतः, पशुपः पशु-

---

१. 'खः कदाचित् सुखी कृ' क. पाठः. २. 'तः, अ', ३. 'ति ॥ अर्धे' ख. ग. पाठः ४. 'तः सुनि' क. ग. पाठः.

पालश्च भवति । पाशयोगे धनार्जनसुशीलसुभृत्यबन्धुः धनार्जनं[2] धनोत्पादकः सुशीलः शोभनशीलः सुभृत्यः सुबन्धुश्च भवति । धनार्जनविशील इति वा पाठः । केदारजः कृषिकरः, अतएव सुबहूपभोज्यश्च । शूले[3] शूलयोगे शूरः, क्षतः व्रणवान्, वधरुचिः वधप्रियः, विधनश्च भवति ॥ १८ ॥

अथ युगादिफलं (प्रहीन? हरि)ण्याह —

**धनविरहितः पाषण्डो वा युगे त्वथ गोलके**
**विधनमलिनो ज्ञानापेतः कुशिल्प्यलसोऽटनः ।**
**इति निगदिता योगाः सार्धं फलैरिह नाभसा**
**नियतफलदाश्चिन्त्या ह्येते समस्तदशास्वपि ॥ १९ ॥**

इति । युगे योगे धनविरहितः, पाषण्डी वा पाषण्डवान् त्रयीमार्गच्युत इत्यर्थः । अथ गोलयोगे विधनमलिनः, ज्ञानापेतः ज्ञानरहितः, कुशिल्पी कुत्सितशिल्पी, अलसः मन्दः, अटनः । इति नाभसयोगाः फलैः सार्धं निगदिताः । एते नियतफलदा असन्दिग्धफलप्रदाः समस्तदशास्वपि चिन्त्याः । एते योगाः केचिदशुभाः केचिच्छुभाश्च । शुभदशायामप्यशुभानि कुर्वन्ति, अशुभदशायां शुभानि कुर्वन्ति । यतो नियतफलदा अतः समस्तदशास्वप्येतान् योगानालोच्यैव फलानां निर्देशः कर्तव्य इत्यर्थः ॥ १९ ॥

इति होराविवरणे नाभसयोगाख्यो द्वादशोऽध्यायः ॥

---

## अथ त्रयोदशोऽध्यायः ।

"सृष्ट्वा ग्रहेन्द्रान् निदधे तुलायामेकत्र सर्वानपरत्र चन्द्रम् ।
प्रजापतिः स्वैरमतोलयत् तान् विशिष्ट आसीद्धिमरश्मिभागः ॥"

इत्यादिवचनप्रतिपादितमाहात्म्यस्य मनोरूपतया सर्वफलानुभावकस्य चन्द्रस्य अवश्यभोविफलान् योगानाह[5] —

**अधमसमवरिष्ठान्यर्ककेन्द्रादिसंस्थे**
**शशिनि विनयवित्तज्ञानधीनैपुणानि ।**

---

१. 'नशो' क. ग. पाठः. २. 'ति । के', ३. 'ति ॥ ध' ख. ग. पाठः. ४. 'भवितव्यफ', ५. 'ह । तत्र प्रथममर्ककेन्द्रादिस्थे चन्द्रमसि जा(तस्य स्वरूप)ज्ञानार्थं शार्दूलविक्रीडितेनाह — अ' क. पाठः.

**अहनि निशि च चन्द्रे स्वेऽधिमित्रांशके वा**
**सुरगुरुसितदृष्टे वित्तवान् स्यात् सुखी च ॥ १ ॥**

इति । अर्ककेन्द्रादिसंस्थे शशिनि विनयवित्तज्ञानधीनैपुणानि अधमसमवरिष्ठानि भवन्तीत्यन्वयः । विनयः शिक्षा श्रुतातिरेकजनिता मनःशान्तिरित्यर्थः । वित्तं धनधान्यादिसम्पत् । ज्ञानं तत्कालसमुचित-ज्ञानम् । धीनैपुणं बुद्धिकौशलम् । एतानि चत्वार्यपि अर्कस्य केन्द्रस्थे चन्द्रे अधमानि अल्पानि, पणफरस्थे समानि मध्यमानि, आपोक्लिमस्थे वरिष्ठानि उत्कृष्टानि भवन्ति । अत्र चतुर्णां फलानां क्रमेण चतुर्षु के-न्द्रादिषु विशेषेणाधमसमवरिष्ठत्वं द्रष्टव्यम् । अर्कस्थितराशितद्द्वितीय-तत्तृतीयेषु विनयस्य अधमसमवरिष्ठत्वं, तथा अर्कात् चतुर्थपञ्चमषष्ठेषु स्थिते चन्द्रे वित्तस्य अधमसमवरिष्ठत्वं, सप्तमादिषु ज्ञानस्य, दशमा-दिषु धीनैपुणस्य अधमसमवरिष्ठत्वम् । चन्द्राश्रितवर्गवशेन तद्विशेषाश्च वक्तव्याः । स्वे अधिमित्रांशके वा स्थिते चन्द्रे अहनि निशि च सुर-गुरुसितदृष्टे वित्तवान् सुखी च स्यादित्यन्वयः । स्वे स्वांशके सुरगुरु-सितदृष्टे अहनि सुरगुरुदृष्टे निशि सितदृष्टे च वित्तवान् सुखी च भवति । यत्रकुत्रचित् स्वनवांशे मित्रनवांशे वा स्थितश्चन्द्रः दिवा गुरुदृष्टश्चेत् तथा रात्रौ सितदृष्टश्चेत् तदा जातो वित्तवान् सुखी च भवतीत्यर्थः । अत्राहनि निशि (च) चन्द्रे स्वां(शकेऽधिमित्रां)शके वा यथासङ्ख्यं सुरगुरुसितदृष्टे (इति) केचिद् व्याचक्षते । तदयुक्तं, यस्माद् गार्गिः—

"स्वांशेऽथवाधिमित्रांशे सुस्थितो दिवसे शशी ।
गुरुणा दृश्यते तत्र जातो वित्तसुखान्वितः ॥
निश्येवं भृगुणा दृष्टः शशी जन्मनि शस्यते ॥"

इति ॥ १ ॥

योगान्तरमाह —

**सौम्यैः स्मरारिनिधनेष्वधियोग इन्दो-**
**स्तस्मिंश्चमूपसचिवक्षितिपालजन्म ।**
**सम्पन्नसौख्यविभवा हतशत्रवश्च**
**दीर्घायुषो विगतरोगभयाश्च जाताः ॥ २ ॥**

---

१. 'र्थः ॥ १ ॥' ख. ग. पाठः.

इति। इन्दोः स्मरारिनिधनेषु सौम्यैरधियोगो भवतीत्यन्वयः। यत्रकुत्रचित् स्थिताच्चन्द्रात् सप्तमषष्ठनिधनेषु स्थितैः सौम्यैः बुधगुरुशुक्रैः, त्रिष्वपि पृथक्स्थितैर्वा बुधगुरुशुक्रैः अधियोगो नाम योगः। अत्र कैश्चित् षष्ठसप्तमाष्टमानां सौम्यग्रहत्रयस्यानस्थानादशून्यतायामधियोगो व्याख्यातः। तच्चायुक्तम्। यस्माच्छ्रुतकीर्तिः —

"निधनं द्यूनं षष्ठं चन्द्रस्थानाद् यदा शु(भग्रहै? भै)र्युक्तम्।
अधियोगः संप्रोक्तो व्यासकृतैः सप्तधा पूर्वैः॥
पापः पापैरेवं मिश्रैर्मिश्रस्तथैवोक्तः।"

इति। तस्मिन् चमूपसचिवक्षितिपालजन्म भवति। तस्मिन् योगे शुभग्रहेषु हीनबलेषु चमूपस्य[2] जन्म, मध्यबलेषु सचिवस्य जन्म, पूर्णबलेषु क्षितिपालस्य जन्म भवति। तथाच बादरायणः —

"शशिनः सौम्याः षष्ठे द्यूने वा निधनसंस्थिता वा स्युः।
जातो नृपतिर्ज्ञेयो मन्त्री वा दण्डनायको वापि॥"

तत्र जाताश्चमूपसचिवक्षितिपालाः सर्वेऽपि सम्पन्नसौख्यविभवाः हतशत्रवः दीर्घायुषः विगतरोगभया[3]श्च भवन्ति॥ २॥

अथ सुनभादियोगचतुष्टयं शार्दूलविक्रीडितेनाह —

**हित्वार्कं सुनभानभाधुरुधुराः स्वान्त्योभयस्थैर्ग्रहैः**
**शीतांशोः कथितोऽन्यथा तु बहुभिः केमद्रुमोऽन्यैस्त्व[सौ।**
**केन्द्रे शीतकरेऽथवा ग्रहयुते केमद्रुमो नेष्यते**
**केचित् केन्द्रनवांशकेषु च वदन्त्युक्तिप्रसिद्धा न ते॥**

इति। अर्कं हित्वा ग्रहैः शीतांशोः स्वान्त्योभयस्थैः सुनभानभाधुरुधुरा भवन्तीत्यन्वयः। अर्कं वर्जयित्वा अन्यैः पञ्चभिर्ग्रहैः पृथग्वा युक्तैर्वा चन्द्रस्य धनस्थितैः सुनभायोगः। व्ययस्थितैरनभायोगः। उभयत्र व्यये धने च स्थितैः धुरुधुरायोगः। इति त्रिधा योगाः स्युः। अत्र योगत्रयेऽप्यादित्यो यदा द्वितीये द्वादशे वा भवति

१. 'गः। तस्मि', २. 'ति। तत्र' ख. ग. पाठः ३. 'याः स्वस्थदेहा निर्भयाश्च' क. पाठः.

तदा न योगभङ्गकृत् । किन्तु योगकर्तॄणां (मध्ये न) गण्यते । अन्यथा तु केमद्रुमः बहुभिः कथित इत्यन्वयः । अन्यथा चन्द्रस्य धनस्थाने व्ययस्थाने च सूर्यवर्जितैरन्यैः पञ्चभिर्ग्रहैः शून्ये सतीत्यर्थः । चन्द्रस्योभयतो ग्रहाभावे केमद्रुम इति बहुभिराचार्यैरुक्तम् । अथवा अन्यैस्तु शीतकरे केन्द्रे ग्रहयुते असौ केमद्रुमः नेष्यते । चन्द्रस्य केन्द्रे ग्रहाः सन्ति चेत् केमद्रुमो न भवतीत्यन्येषां मतम् । केचित् केन्द्रनवांशकेषु ग्रहयुतेषु च केमद्रुमो न भवतीति वदन्ति । ते उक्तिप्रसिद्धा न । ते तथावादिनः चन्द्रकेन्द्रांकशेषु ग्रहयुतेषु केमद्रुमाभाववादिनः उक्तिप्रसिद्धा न भवन्ति । अत्र चन्द्रस्य केन्द्रराशिषु ग्रहयोगे सति केमद्रुमाभाव आचार्यस्याभिप्रेत इति अथवेत्युक्त्वा पक्षान्तरकथनेन द्योत्यते । अत्र केचित् चन्द्रस्य लग्नकेन्द्रस्थितावपि केमद्रुमाभावं योजयन्ति । तदसत् । चन्द्रयोगेषु लग्नस्यानपेक्षितत्वात्[२] । ताराग्रहैः पञ्चभिरेव सुनभानभाधुरुधुरा इति वक्तव्ये हित्वार्कमित्युक्त्या अर्कस्याप्येवं ताराग्रहैः पञ्चभिरेव वासि वेसि उभयच(र्ये ? री)ति योगत्रयमन्यशास्त्रोक्तमस्तीति सूच्यते ॥ ३ ॥

---

१. 'चा' ग. पाठः. २. 'त । अत्र केचित् केन्द्रे शीतकरेऽथवा ग्रहयुते इत्यत्रैवं व्याचक्षते—केन्द्रे जन्मलग्नात् केन्द्रे शीतकरे चन्द्रे वा ग्रहयुते भौमादिरहितयोरपि चन्द्राद् द्विद्वादशस्थानयोः केमद्रुमो न भ(वति । च)न्द्रकेन्द्रे ग्रहयुते चन्द्रमसोऽपि ग्रहयोगोऽन्तर्भवति । शीतकरे ग्रहयुते वेत्येतदनर्थकं स्यात् । तथाच गार्गिः —

"व्ययार्थकेन्द्रगश्चन्द्राद् विना भानुं न चेद् ग्रहः ।
कश्चिद् वा स्यान्न चन्द्रेण लग्नात् केन्द्रगतोऽथवा ॥
योगः केमद्रुमो नाम तदा स्याद् यत्र गर्हिताः ।
भवन्ति निन्दिताचारा दरिद्रामयदुःखिताः ॥"

इति । एवं केन्द्रे शीतकरेऽथवा ग्रहयुते केमद्रुमाख्यम् अन्ये नेच्छन्ति । वराहमिहिरः पुनरिच्छत्येव । यस्मादन्यथा केमद्रुम इत्युक्त्वा परमतमुक्तम् । तथाचानेन स्वल्पजातके —

"वर्जमन्त्यगैरनभा (?) चन्द्रा द्वितीयगैः सुनभा ।
उभयस्थितैर्धुरुधुरा केमद्रुमसंज्ञितो ह्यन्यः ॥"

तथाच सत्यः —

"सुनभानभायोगो धुरुधुर(?)श्चन्द्रसंस्थितात् केन्द्रात् ।
प्राक् पृष्ठतो ग्रहेन्द्रैरुभयगतैस्तेषु रविवर्जम् ॥
केमद्रुमोऽत्र योगो..., ... ... ...संज्ञितोऽन्यत्र ।"

अथ सुनभानभाधुरुधुराणां विकल्पसङ्ख्यामिन्द्रवज्रयाह—

**त्रिंशत् सरूपा सुनभानभाख्याः**
**षष्टित्रयं धौरुधुराः प्रभेदाः ।**
**इच्छाविकल्पैः क्रमशोऽभिनीय**
**नीते निवृत्तिः पुनरन्यनीतिः ॥ ४ ॥**

इति । सुनभानभाख्याः सरूपा(ः?) त्रिंशद् भवन्तीत्यन्वयः । एकैकैर्ग्रहैः पञ्च, द्वाभ्यां द्वाभ्यां दश, त्रिभिस्त्रिभिश्च दश, चतुर्भिश्चतुर्भिः पञ्च, पञ्चभिरेकः, एवमेकत्रिंशत् सुनभाः एकत्रिंशदनभाश्च भवन्ति । तथा सुनभायोगैरनभायोगैश्च युगपत् सम्भवद्भिः षष्टित्रयं धौरुधुराः प्रभेदा भवन्ति । तत्प्रकारमाहोत्तरार्धेन— इच्छाविकल्पैः क्रमशः अभिनीय नीते निवृत्तिः पुनरन्यनीतिरित्यन्वयः । अत्रोक्तयोगसङ्ख्यानामानयनं गणितपाठ्यां व्यज्यते ॥ ४ ॥

सुनभादीनां फलान्याह—

**स्वयमधिगतवित्तः पार्थिवस्तत्समो वा**
**भवति हि सुनभायां धीधनख्यातिमांश्च ।**
**प्रभुरगदशरीरः शीलवान् ख्यातकीर्त्ति-**
**र्विषयसुखसुवेषो निर्वृतश्चानभायाम् ॥ ५ ॥**

इति । सुनभायां जातः स्वयमधिगतवित्तः, पार्थिवो वा, तत्समः पार्थिवसमो वा, धीधनख्यातिमांश्च भवति हि । अत्र धन-

---

इति केचिन्नवांशकेषु वदन्ति । यत्रतत्र राशौ यद्राशिसम्बन्धिनि नवांशके चन्द्रमा भवति, तस्य राशेर्द्वितीयराशौ ताराग्रहो भवति चेत् सुनभा द्वादशेऽनभा उभयस्थितैर्धुरुधुरा । चन्द्रनवांशराशितो द्वितीयद्वादशौ ताराग्रह(विरहितौ यदि) केमद्रुमाख्यः । तथाच जीवशर्मा—

"यद्राशिसंज्ञे शीतांशौ नवांशे जन्मनि स्थितः ।
तद्द्वितीयस्थितैर्योगः सुनभाख्यः प्रकीर्तितः ॥
द्वादशैरनभा ज्ञेया ग्रहैर्द्विद्वादशस्थितैः ।
प्रोक्तो धुरुधुरायोगोऽन्यथा केमद्रुमः स्मृतः ॥"

इति । तारा' क., 'त् । हित्वार्कमिति । ता' ग. पाठः.

शब्देन कुलधनमुच्यते । अनभायां जातः प्रभुः कर्तुमकर्तुमन्यथा-कर्तुमपि शक्तः, अगदशरीरः, शीलवान्, ख्यातकीर्त्तिः, विषयसुख-सुवेषः, निर्वृतश्च भवति । अत्र निर्वृतशब्देन

"सर्वत्र सम्पदस्तस्य सन्तुष्टं यस्य मानसम् ।
उपानद्गूढपादस्य ननु चर्मास्तृतैव भूः ॥"

इत्यत्रोक्तलक्षणस्वरूपः सदातनः सन्तोष उच्यते ॥ ५ ॥

अथ धुरुधुराकेमद्रुमयोः फलं वसन्ततिलकेनाह —

उत्पन्नभोगसुखभाग् धनवाहनाढ्य-
स्त्यागान्वितो धुरुधुराप्रभवः सुभृत्यः ।
केमद्रुमे मलिनदुःखितनीचनिस्स्वः
प्रेष्यः खलश्च नृपतेरपि वंशजातः ॥ ६ ॥

इति । धुरुधुराप्रभवः उत्पन्नभोगसुखभाग् उत्पन्नैरिष्टकाललब्धै-र्भोगैः सुखं भजमानः, धनवाहनाढ्यः, त्यागान्वितः दानशीलः, सु-भृत्यः शोभनभृत्यश्च भवति । केमद्रुमयोगे नृपतेर्वंशजातोऽपि मलिन-दुःखितनीचानिस्स्वः मलिनः दुःखितः नीचः निस्स्वश्चेति कर्मधारय-समासः, प्रेष्यः, खलश्च भवति ॥ ६ ॥

अत्र सुनभादिषु योगेषु योगकर्तॄणां ग्रहाणां पृथक् फलविशेषान् वसन्ततिलकेनाह —

उत्साहशौर्यधनसाहसवान् महीजे
सौम्ये पटुः सुवचनो निपुणः कलासु ।
जीवेऽर्थधर्मसुखभाङ् नृपपूजितश्च
कामी भृगौ बहुधनो विषयोपभोक्ता ॥ ७ ॥

इति । महीजे योगकर्तरि उत्साहशौर्यधनसाहसवान् भवति । सौम्ये योगकर्तरि सति पटुः प्रत्युत्पन्नमतिः, सुवचनः, कलासु निपुणश्च[3] गीतवाद्यादिषु निपुणः सूक्ष्मदृष्टिश्च भवति । जीवे योगकर्तरि सति अर्थधर्मसुखभाक्, नृपपूजितश्च भवति । भृगौ योगकर्तरि सति कामी, बहुधनः, विषयोपभोक्ता च भवति ॥ ७ ॥

१. 'ते ॥ उ', २. 'षानाह —', ३. 'श्च । जी' ख. ग. पाठः.

अथ शनैश्चरे योगकर्तरि जातस्य रूपं पुष्पिताग्रयाह —

परविभवपरिच्छदोपभोक्ता
रवितनये बहुकार्यकृद् गणेशः ।
अशुभकृदुडुपोऽह्नि दृश्यमूर्ति-
र्गलिततनुश्च शुभोऽन्यथान्यदूह्यम् ॥ ८ ॥

इति । रवितनये योगकर्तरि सति परविभवपरिच्छदोपभोक्ता परेषां विभवं परिच्छदं चोपभोक्तुं शीलमस्येति तथा, बहुकार्यकृद्, गणेशः गणानां नाथश्च भवति । एतानि ग्रहाणां पृथगुक्तानि सुनभादियोगविशेषफलानि तत्सामान्यफलैः पूर्वमुक्तैः सह सुनभादियोगसम्पादकग्रहवशेन यथासम्भवं योजयितव्यानि । अत्रोक्तेषु चान्द्रयोगेषु चन्द्रस्य शुभाशुभत्वं विशेषेण निरूपणीयमिति शृङ्गग्राहिकया दर्शयति, अह्नि दृश्यमूर्तिः गलिततनुश्च उडुपः अशुभकृद् भवतीत्यन्वयः । चन्द्रस्य पक्षयोरुभयोरपि दिवसेषु रात्रिषु च दृश्यमूर्तित्वम् अदृश्यमूर्तित्वं च कुहूराकयोरन्यत्र कियति कियति काले सम्भवति । तत्राहनि दृश्यमूर्तिरुडुपः अशुभकृद् भवति, गलिततनुश्च । अपरपक्षगतः क्षीयमाणः अहनि दृश्यमूर्तिश्चेदत्यन्तमशुभकरो भवति । अन्यथा शुभः । अन्यथा पूर्वपक्षे रात्रौ पूर्यमाणतनुः दृश्यमूर्तिश्चेदत्यन्तं शुभकरो भवति । अन्यदूह्यम् उक्तविपर्ययश्च तर्क्यः । अपरपक्षे अहन्यदृश्यश्चेच्छुभकरः, पूर्वपक्षे अहनि दृश्यमानोऽपि नात्यन्तमशुभः, अपरपक्षे रात्रावदृश्योऽपि अशुभः, पूर्वपक्षे रात्रावदृश्योऽपि[3] मध्यफलः, इत्यादि युक्तिवशात् स्वयमूह्यमित्यर्थः ॥ ८ ॥

चान्द्रयोगान् लग्नानपेक्षान् यथासारमुपदिश्येदानीं लग्नचन्द्रयोः सामान्यं वसुमद्योगं[4] वसन्ततिलकेनाह —

लग्नादतीव वसुमान् वसुमाञ्छशाङ्कात्
सौम्यग्रहैरुपचयोपगतैः समस्तैः ।
द्वाभ्यां समोऽल्पवसुमांश्च तदूनतायाम्
अन्येषु सत्स्वपि फलेष्विदमुत्कटेन ॥ ९ ॥

१. 'णां स्वभावोक्ता', २. 'ति का' ग. पाठः, ३. 'श्यो म' क. पाठः.
४. 'मवाह —' ख. ग. पाठः.

इति । लग्नाद् उपचयोपगतैः समस्तैः सौम्यग्रहैः अतीव वसुमान् भवतीत्यन्वयः । शशाङ्कादुपचयोपगतैः समस्तैस्त्रिभिरपि सौम्यग्रहैः वसुमान् भवतीत्यर्थः । लग्नादुपचयस्थैः शुभैरतीव वसुमद्योगः, चन्द्रादुपचयस्थैर्वसुमद्योग इति विशेषो द्रष्टव्यः । उपचयस्थाभ्यां द्वाभ्यां समः, मध्यवसुमद्योग इत्यर्थः । तदूनतायाम् अल्पवसुमान् । द्वित्वादूनतायाम् उपचयस्थेनैकेन शुभेनाल्पवसुमद्योगो भवतीत्यर्थः । अर्थादेव लग्नचन्द्रयोरुपचयेषु शुभग्रहशून्येषु धनशून्यो भवतीति द्रष्टव्यम् । अन्येषु फलेषु दशाफलेषु गोचरफलेषु योगफलेषु च धनसिद्धिकरेषु वा धननाशकरेषु वा सत्स्वपि इदम् अत्रोक्तं लग्नचन्द्रयोरुपचयनिमित्तं फलम् उत्कटेन अबाध्यत्वेन भवत्येवेत्यर्थः[1] । अन्येष्वसत्स्वपीति वा पाठः । तत्रान्येषु फलेष्वसत्स्वशोभनेष्वपि इदं फलम् उत्कटेन बाहुल्येनाशुभमभिभूय शुभमेव फलं प्रयच्छतीत्यर्थः ॥ ९ ॥

इति होराविवरणे चान्द्रयोगस्त्रयोदशोऽध्यायः ॥

---

## अथ चतुर्दशोऽध्यायः ।

अथ ग्रहाणामितरेतरयोगफलं शार्दूलविक्रीडितेनाह[2] —

**तिग्मांशुर्जनयत्यथेन्दुसहितो यन्त्राश्मकारं नरं**
**भौमेनाघरतं बुधेन निपुणं धीकीर्तिसौख्यान्वितम् ।**
**क्रूरं वाक्पतिनान्यकार्यनिरतं शुक्रेण रङ्गायुधै-**
**र्लब्धस्वं रविजेन धातुकुशलं भाण्डप्रकारेषु वा ॥ १ ॥**

इति । इन्दुसहितः तिग्मांशुः यन्त्राश्मकारं नरं जनयतीत्यन्वयः । यन्त्राश्मकारं यन्त्राणि स्वस्तिकवस्तिनेत्रादीनि भेषजयन्त्राणि, स्वयंवाहकशङ्क्वादीनि कालयन्त्राणि, तुलाघटीमुखानि जलोद्धरणयन्त्राणि सामान्येन कर्मोपकरणानि यन्त्राणि, तथा अश्मानि (?) कृष्णशिलादीनि करोति कार्ययोग्यानि करोति सम्पादयतीति यन्त्राश्मकारः । तथाविधं जनयतीति सम्बन्धः । भौमेनाघरतं दुष्कर्मणि प्रीतियुक्तं जन-

---

[1] 'र्थः ॥ ९ ॥', [2] 'लमाह —' ख. ग. पाठः.

यति। बुधेन सहितः निपुणं धीकीर्त्तिसौख्यान्वितं जनयति। बुधस्य मौढ्ये सत्यपि योगबलेन एवंगुणयुक्तं तिग्मांशुर्जनयतीति सम्बन्धः। वाक्पतिना सहितः क्रूरम् अन्यकार्यनिरतं च जनयति। शुक्रेण सहितः रङ्गायुधैः लब्धस्वं रङ्गप्रयोज्यैः कर्मभिरायुधव्यापारैश्च लभ्यमानार्थं जनयति। रविजेन सहितः धातुकुशलं भाण्डप्रकारेषु वा कुशलम्। धातुषु

"त्रपुताम्रावुभावेतौ त्रिसप्तांशकसंयुतौ।
अग्निना धाम्यमानौ तु कांस्यत्वमुपगच्छतः॥"

इत्याद्युक्तेषु धातुविषयेषु[1] कर्मसु कुशलम्। अथवा भाण्डप्रकारेषु धात्वादिभिर्निष्पादितेषु घटपटपुस्तकादिषु द्रव्यविशेषेषु कुशलम्। अत्रापि तत्कर्मसु कुशलमित्यर्थः॥ १॥

एवम् अर्कसम्भवेषु षट्सु द्विग्रहयोगेषु चन्द्रस्य शिष्टान् द्विग्रहयोगान्[2] शार्दूलविक्रीडितेनाह —

कूटस्त्र्यासवकुम्भपण्यमशिवं मातुः सवक्रः शशी
सज्ञः प्रश्रितवाक्यमर्थनिपुणं सौभाग्यकीर्त्यन्वितम्।
विक्रान्तं कुलमुख्यमस्थिरमतिं वित्तेश्वरं साङ्गिरा
वस्त्राणां ससितः क्रयादिकुशलं सार्किः पुनर्भूसुतम्
[॥ २॥

इति। सवक्रः शशी कूटस्त्र्यासवकुम्भपण्यं मातुरशिवं[3] जनयति। कूटशब्देन "अथौपनिषदिकमधर्मिष्ठेषु बलिष्ठेषु प्रयुञ्जीत" इत्यादिभिः कौटल्यादिसूत्रैरुक्त उपनिषत्प्रयोग उच्यते। तादृशप्रयोगसम्पादितमारणोच्चाटनादिकरं वस्तुजातमित्यर्थाल्लभ्यते। तच्च स्त्रियश्च आसवा मद्यविशेषाश्च कुम्भाश्च (पण्यं) विक्रेयद्रव्यं यस्य स तथाविधं, तथा मातुरशिवं व्यसनकरं च जनयतीति सम्बन्धः। सज्ञश्चन्द्रः प्रश्रितवाक्यम् अर्थनिपुणं सौभाग्यकीर्त्यन्वितं जनयतीति सम्बन्धः। प्रश्रितशब्देन शमप्रधानत्वमुच्यते। साङ्गिराश्चन्द्रः विक्रान्तं कुलमुख्यम् अस्थिरमतिं

१. 'विशेषेषु' ख. पाठः. २. 'नाह —' ख. ग. पाठः. ३. 'वं करोति' ख. पाठः. ४. 'कं व' ग. पाठः.

वित्तेश्वरं च जनयति। अस्थिरमतिम् अस्मात् स्थिरो नास्तीति अस्थिरः अतिस्थिरमतिमित्यर्थः। अस्थिरशब्दस्य अनुत्तमशब्दादिवन्नञ्समासो वेदितव्यः। अन्यथा चञ्चलमतिरिति व्याख्याने

"अतिमतिरतिविभवबलः सहस्रमासेषु जीवितं विद्यात्।"

"किं कुर्वन्ति ग्रहाः सर्वे चन्द्रकेन्द्रे बृहस्पतौ।
गजयूथसहस्राणि निहन्त्येकोऽपि केसरी॥"

इत्यादिभिर्वचनैरन्यशास्त्रेषु प्रसिद्धस्य गजकेसरियोगस्य आयुरादिफलप्रदत्वेन प्रायशोऽनुभूयमानस्य बहुभिराचार्यैरुक्तानि मनोरूपस्य चन्द्रस्य ज्ञानरूपेण गुरुणा योगे त्वप्रतिहतमनःस्थैर्यसम्पादनीयानि फलानि कं शरणं व्रजन्तु। ससितः वस्त्राणां क्रयादिकुशलं जनयति। सार्किः पुनर्भूसुतं जनयति। द्विरूढा पुनर्भूः। केषुचिद् देशेषु प्रथमस्य भर्तुरपाये तस्या विधवायाः स्त्रियाः पुनरन्योऽपि पाणिं गृह्णातीत्याचारोऽस्ति। ततः द्वयोः कालयोरूढा स्त्री पुनर्भूरित्युच्यते। तस्याः सुतमित्युपलक्षणं जाराद्युपभुज्यमानायाः स्त्रियां[1] जातस्यापि सुतस्य ॥ २ ॥

अथ कुजस्य शिष्टानां चतुर्णां द्विग्रहयोगानां फलानि स्रग्धरयाह[2]—

**मूलादिस्नेहकूटैर्व्यवहरति वणिग् बाहुयोद्धा ससौम्ये**
**पुर्यध्यक्षः सजीवे भवति नरपतिप्राप्तवित्तो द्विजो वा।**
**गोपो मल्लोऽथ दक्षः परयुवतिरतो द्यूतकृत् सासुरेज्ये**
**दुःखार्तोऽसत्यसन्धः ससवितृतनये भूमिजे निन्दितश्च॥**

इति। भूमिजे ससौम्ये सति जातः वणिक् मूलादिस्नेहकूटैर्व्यवहरति। वणिग् वाणिज्यवृत्तिः। मूलादिभिः मूलेन नालेन पत्रेण पुष्पेण फलेन निर्यासेन वल्कलेन चेत्यर्थः। स्नेहैः तैलघृतवसामज्जभिश्चतुर्विधैरपि[3] कूटैः पूर्वोक्तलक्षणैः, सौम्यस्य वचनरूपत्वात् कूटैरसत्यवचनैरपि। व्यवहरति व्यवहारान् वाणिज्यविषयैकार्याणि[4] करोति। तथा बाहुयोद्धा मल्लश्च भवतीत्यर्थः। सजीवे भूमिजे ज्ञान-

१. 'या जातं सुतम् इत्यादि योजनीयम् ॥ २ ॥' ख. पाठः. २. 'न्याह —' ख. ग. पाठः. ३. 'ज्जादिभिः' ख. पाठः. ४. 'याणि क' क. पाठः.

सत्त्वयोगबलेन पुर्यध्यक्षः नरपतिप्राप्तवित्तः द्विजो वा भवति। नरपति-प्राप्तवित्तः राजसकाशात् प्राप्तवित्त इत्यर्थः। द्विजो वा एकस्यौरसः पुत्रोऽन्यस्य दत्तपुत्रः कृत्रिमपुत्रो वा भवति। अत्र कुलद्वये पृथग् जन्म-जन्माधिकारयोः सम्भवाद् द्विज इत्युपचर्यते[1]। नरपतिः प्राप्तवित्तो द्विजो वेति वा पाठः। भौमे सासुरेज्ये गोपः, मल्लः, दक्षः क्षिप्रकारी, पर-युवतिरतः परदारगमनप्रियः, द्यूतकृद् द्यूतादिकलहकर्ता च भवति। भूमिजे ससवितृतनये दुःखार्तः असत्यसन्धः अपरमार्थप्रतिज्ञः निन्दितः कुत्सितश्च भवति ॥ ३ ॥

अथ बुधस्य शिष्टान् त्रीन् द्विग्रहयोगान्[2] शार्दूलविक्रीडितेनाह—

**सौम्ये रङ्गचरो बृहस्पतियुते गीतप्रियो नृत्तविद्**
**वाग्ग्मी भूगणपः सितेन मृदुना मायापटुर्लङ्घकः।**
**सद्विद्यो धनदारवान् बहुगुणः शुक्रेण युक्ते गुरौ**
**ज्ञेयः श्मश्रुकरोऽसितेन घटकृद् दाताऽन्नकारोऽपि वा ॥**

इति। सौम्ये बृहस्पतियुते सति जातः गीतप्रियः, नृत्तविद् रङ्ग-चरो भवति, शैलूषादिवद् रङ्गवृत्त्या जीवतीत्यर्थः। सितेन युक्ते सौम्ये वाग्ग्मी व्यवहारकुशलः, भूगणपः भूमिः क्षेत्रं गणः समूहः तद्रक्षको भवति। क्षेत्रेषु कृषिकर्मणा समुदायपालकत्वेन च जीवतीत्यर्थः। उभयोर्बलाधिक्ये भूपतिः सेनापतिर्वा भवतीति च द्योत्यते। सौम्ये मृदुना मन्देन युक्ते मायापटुः लङ्घकश्च भवति। मायापटुः माया-कुशलः, लङ्घकः शास्त्रीयवृत्तेर्लोकवृत्तेश्च अतिक्रमकर्ता भवतीत्यर्थः। उत्तरार्धेन गुरोरुक्तशिष्टौ द्वौ द्विग्रहयोगावाह— गुरौ शुक्रेण युक्ते सति सद्विद्यः धनदारवान् बहुगुणश्च भवति। गुरौ असितेन युक्ते श्मश्रुकरः घटकृद् दाता अन्नकारोऽपि वा ज्ञेयः। श्मश्रुकरः नापितकर्मकुशलः घटकृत् कुम्भकारः तयोर्व्यापारेषु कुशल इत्यर्थः[3]। जुगुप्सितकर्मकुशल इति यावत्। अपिवा दातान्नकारः[4] दानशीलः तत्रापि विशेषादन्न-कारः। अन्नदानकर्मतत्पर इत्यर्थः। अत्र जुगुप्सितयोः पूजितयोश्च कर्म-

१. 'ते। भौ' ख. पाठः. २. नाह—' ख. ग. पाठः. ३. 'र्मकर इ' क. ग. पाठः. ४. 'ता दा' ख. पाठः.

णोर्युगपदुक्त्या गुरुसौरियोगस्य फलविशेषो दर्शितः। तदुक्तमन्यत्र—

"सम्पदो गुरुसंयोगे शनियोगे विपत्तयः ।
वाच्यो ग्रहाणां हि तयोर्योगे तु फलसङ्करः ॥"

इति ॥ ४ ॥

अथ शुक्रस्योक्तशिष्टमेकं द्विग्रहयोगं पुष्पिताग्रयाह[1] —

**असितसितसमागमेऽल्पचक्षु-**
**र्युवतिजनाश्रयसम्प्रवृद्धवित्तः ।**
**भवति च लिपिपुस्तचित्रवेत्ता**
**कथितफलैः परतोऽपरे विकल्प्याः ॥ ५ ॥**

इति । असितस्य सितस्य च समागमे सति अल्पचक्षुः युवतिजनाश्रयसम्प्रवृद्धवित्तः । अर्थाद् युवतिर्नीचयुवतिरिति द्रष्टव्यम् । तादृशाश्रयेण धनवृद्धिर्भवतीत्यर्थः । लिपिपुस्तचित्रवेत्ता भवति च । लिपीनां नागरादिबहुविधलिपीनां पुस्तकानां चित्रकर्मणश्च वेत्ता भवति । एवमेकविंशतिद्विग्रहयोगा उक्ताः । एतैरेव त्रिग्रहयोगस्यापि फलान्युपदिशति[2] — कथितफलैः परतोऽपरे विकल्प्या इति । परतः अपरे योगाः कथितफलैः विकल्प्या इत्यन्वयः। चतुरादिग्रहयोगफलस्य उत्तराध्याये वक्ष्यमाणत्वाद् द्विग्रहयोगेभ्यः परस्ताद् अपर इति त्रिग्रहयोगा एव गृह्यन्ते । ते च कात्स्न्येंन पञ्चत्रिंशद् भवन्ति । तेषु प्रथममर्केन्दुभौमैरेको योगो भवति । तत्फलानि कथितफलैरेव विकल्प्या(नि) इति सम्बन्धः । कथमिति चेद् अत्रार्केन्दुभौमयोगे अर्केन्द्वोर्योगफलमुक्तम् । अर्कभौमयोरपि योगफलमुक्तम् । तथेन्दुभौमयोरपि योगफलमुक्तम् । एवमुक्तैस्त्रिभिर्द्विग्रहयोगफलैर्मेलितैरेकं त्रिग्रहयोगफलं वाच्यम् । एवमेवान्यानि चतुस्त्रिंशत् त्रिग्रहयोगफलानि कल्पनीयानीत्यर्थः ॥ ५ ॥

इति होराविवरणे द्विग्रहाख्या योगाश्चतुर्दशोऽध्यायः ॥

---

1. 'ग्रमाह —' ख. ग. पाठः. 2. 'न्युद्दिश' क. ग. पाठः.

## अथ पञ्चदशोऽध्यायः ।

अथ चतुरादिग्रहयोगफलं शार्दूलविक्रीडितेनाह —

**एकस्थैश्चतुरादिभिर्बलयुतैर्जाताः पृथग्वीर्यगैः**
**शाक्याजीवकभिक्षुवृद्धचरका निर्ग्रन्थिवन्याशनाः ।**
**माहेयज्ञगुरुक्षपाकरसितप्राभाकरीनैः क्रमात्**
**प्रव्रज्या बलिभिः समाः पराजितैस्तत्स्वामिभिः प्र-**
**[च्युतिः ॥ १ ॥**

इति । बलयुतैरेकस्थैः चतुरादिभिर्जाताः पृथग्वीर्यगैः माहेयज्ञगुरुक्षपाकरसितप्राभाकरीनैः क्रमात् शाक्याजीवकभिक्षुवृद्धचरका निर्ग्रन्थिवन्याशनाश्च भवन्तीत्यन्वयः । एकस्थैरेकराशिस्थितैः चतुरादिभिः चतुर्भिः पञ्चभिः षड्भिः सप्तभिर्वा बलयुतैर्बलवद्भिः जाता उक्तेष्वन्यतमा भवन्ति शाक्यादिष्वन्यतमा भवन्ति । तत्र विशेषमाह — पृथग्वीर्ययुक्तैः माहेयादिभिः शाक्यादय इति । भौमेन शाक्यो भवति । शाक्याश्चाजीवकाश्च भिक्षवश्च वृद्धाश्च चरकाश्चेति द्वन्द्वः । निर्ग्रन्थयो वन्याशनाश्च निर्ग्रन्थिवन्याशनाः । अत्र बहुवचननिर्देशेन प्रव्रज्याकारकग्रहाणां राश्यंशकादिबलाबलवशात् तत्तत्प्रव्रज्यास्वपि कर्मभोगविनाशद्रेकाणवशेन द्रेकाणान्तर्गतधातुमूलजीवद्योनकांशकवशेन च प्रव्रज्याभेदा वक्तव्याः । तत्र भौमेन बलाधिकेन शाक्यश्चतुर्विंशतिभेदेषु बौद्धेष्वेकतमो वाच्यः । बुधेन आजीवका वाच्याः । आजीवकाः प्राणात्मवादिन आर्हताः पिञ्छहस्ता उच्यन्ते । तथा आजीवो वृत्तिः । आजीवन्तीत्याजीवकाः देहवृत्त्यर्थं सर्वेषां हितवचनकारिणः अध्यात्मकुशलमानिनो गुरुशब्दवाच्याश्च गृह्यन्ते । गुरुणा बलाधिकेन भिक्षवः परमहंसकुटीचकादयः । क्षपाकरस्य बलाधिक्ये वृद्धाः शैववैष्णवाद्यागमकुशलाः स्वयं दीक्षिता जटाधारिणः परेषां मन्त्रोपदेष्टार उच्यन्ते । शुक्रस्य बलाधिक्ये चरका योगाभ्यासकुशला मुद्राधारिणश्चिकित्सानिपुणाः पाषण्डभेदा उच्यन्ते । शनेर्बलाधिक्ये निर्ग्रन्थयः अवधूताः —

"वर्णधर्माश्रमाचारसर्वयन्त्रणवर्जितः।
अवधूतः स्वेच्छचारी ज्ञेयो ज्ञानपरायणः॥"

इत्युक्तलक्षणाः प्रव्राजका उच्यन्ते । आदित्यस्य बलाधिक्ये वन्याशनाः वनवासिनो मुनयः । एषां सप्तविधानां प्रव्राजकानां सर्वेषामपि जननभूमिनिरपेक्षकत्वं साधारणो धर्मः । अत्र चतुरादिशब्देन चतुर्थादिदशमान्तैः सप्तभिर्भावैरपि क्रमेण शाक्यादयः प्रव्रज्याविशेषा निर्धारणीया इति द्योत्यते । पृथग्वीर्यगैरित्यत्र पृथक्शब्देन भौमादीनामेकैकस्यापि यथोक्तचतुरादिस्थानगतस्य शाक्यादिप्रव्रज्याप्रवर्तकत्वं सूचितम् । वक्ष्यति च — "नवमभवनसंस्थे मन्दगेऽन्यैरदृष्ट" इति । द्व्यादीनां बलवत्त्वे विशेषमाह — प्रव्रज्या बलिभिः समा इति । बलिभिः बलयुक्तैः । प्रव्रज्यायोगकारकेषु द्वौ ग्रहौ बलवन्तौ चेद् द्वे प्रव्रज्ये भवतः, त्रयश्चेत् तिस्र इत्यादि । "स्वां स्वां दशामुपगताः स्वफलप्रदाः स्युः" इति वचनादेको ग्रहो बलवान् स्वदशाकाले स्वां प्रव्रज्यां ददाति। पुनरपरोऽपि बलवानस्ति चेत् सोऽपि स्वदशाकाले स्वां प्रव्रज्यां ददाति । पुनरन्योऽपि बलवान् प्रव्रज्याकारकोऽस्ति चेत् तस्यापि स्वदशायां स्वकीया प्रव्रज्या भवति । एवं प्रव्रज्याकारकेषु यावन्तो बलवन्तः सन्ति तैः समाः समसङ्ख्याः प्रव्रज्या भवन्ति । पराजितैः तत्स्वामिभिः प्रच्युतिः । प्रव्रज्यास्वामी ग्रहः परेण ग्रहयुद्धे पराजितो यदि भवति तदा प्रव्रज्यायाः प्रच्युतिः भ्रंशो भवति । स्वगृहात् पूर्वं प्रव्रज्यया प्रच्युतः पश्चात् प्रव्रज्यामार्गादपि भ्रष्टो भवतीत्यर्थः[1] ॥ १ ॥

अथ प्रव्रज्यायोगस्यापवादं वैतालीयेनाह —

रविलुप्तकरैरदीक्षिता
बलिभिस्तद्गतभक्तयो नराः ।
अभियाचितमात्रदीक्षिता
निहतैरन्यनिरीक्षितैरपि ॥ २ ॥

---

१. 'र्थः । अथ चतुरादीनामेकराशिगतानां मध्याद् द्वौ बहवो बलयुक्ता भवन्ति, ते च पराजितास्तदा तस्यावश्यमेव प्रव्रज्यामाश्रितो म्रियते ॥ १ ॥' क. पाठः.

इति । रविलुप्तकरैः ग्रहैः नरा अदीक्षिता भवन्तीत्यन्वयः । प्रव्रज्याकारकैर्ग्रहैः मौढ्यं प्राप्तैः प्रव्रज्यादीक्षाणामप्राप्तिरित्यर्थः । बलिभिस्तद्गतभक्तयो भवन्ति । बलिभिः प्रव्रज्याकारकाणां ग्रहाणां मौढ्याद् दीक्षाप्रदत्वाभावेऽपि उच्चादिबलसम्भवे तद्गतभक्तयः स्वयमदीक्षिता अपि दीक्षायां दीक्षितेषु च भक्तियुक्ता भवन्तीत्यर्थः । निहतैरन्यानिरीक्षितैर्ग्रहैराभियाचितमात्रदीक्षिता भवन्ति । निहतैः बलाधिकेन विजितैः चतुरादीनामेकराशिस्थितौ ग्रहयुद्धस्य सम्भवाद् ग्रहयुद्धे विजितैः । उच्चादिबलसम्भवेन दीक्षाप्रदत्वे विद्यमानेऽपि जाता अभियाचितमात्रदीक्षिता एव भवन्ति । दीक्षा कर्तव्येत्यभियाचनमात्रमेव भवति, न दीक्षाप्राप्तिरित्यर्थः । तथा अन्यनिरीक्षितैरपि[1] । प्रव्रज्याकारकाणां ग्रहाणाम् अन्यग्रहेण निरीक्षितत्वे सति च दीक्षाश्रद्धैव भवति, न दीक्षाप्राप्तिरिति यावत् । अत्र प्रव्रज्यायोगेषु सत्स्वपि रविलुप्तकरत्वेन वा युद्धपराजयेन वा अन्यनिरीक्षणेन वा ग्रहाणां दीक्षाप्रदत्वाभावेऽपि तत्तद्दीक्षामूलभूतेष्वागमेषु एकत्र वा द्वयोर्वा बहुषु वा बलवद्ग्रहवशेनाभिनिवेशः तदुक्तकर्मकुशलता च सम्भवतीति तद्गतभक्तयः अभियाचितमात्रदीक्षिता इत्येताभ्यां द्योत्यते ॥ २ ॥

प्रव्रज्याविषये योगान्तरं शालिन्याह—

**जन्मेशोऽन्यैर्यद्यदृष्टोऽर्कपुत्रं**
**पश्यत्यार्किर्जन्मपं वा बलोनम् ।**
**दीक्षां प्राप्नोत्यार्किदृक्काणसंस्थे**
**भौमार्क्यंशे सौरदृष्टे च चन्द्रे ॥ ३ ॥**

इति । जन्मेशो ग्रहोऽन्यैरदृष्टोऽर्कपुत्रं पश्यति यदि दीक्षां प्राप्नोति इत्यन्वयः । अन्यैर्ग्रहैरदृष्टो जन्माधिपतिरर्कपुत्रं पश्यति यदि तदा जातः प्रव्रज्यां प्राप्नोतीत्यर्थः । शनैश्चरजन्मपयोर्यो बलवान् तत्सम्बन्धिनी प्रव्रज्या भवतीत्यर्थः । वा अथवा आर्किरन्यैरदृष्टो बलोनं जन्मपं बलहीनं जन्माधिपं पश्यति यदि तदा जातोऽपि प्रव्रज्यां प्राप्नोतीत्यर्थः । तथा चन्द्रे आर्किदृक्काणसंस्थे भौमार्क्यंशे सौरदृष्टे सति

---

१. 'तैरपि अन्यनिरीक्षितैर्ग्र' ख. पाठः.

च दीक्षां प्राप्नोति । चन्द्रे मन्दद्रेक्काणे मन्दस्य कुजस्य वा नवांशे स्थिते मन्देन दृश्यमाने च सति प्रव्रज्यादीक्षां प्राप्नोतीत्यर्थः[1] ॥ ३ ॥

अथ प्रव्रज्यायोगविशेषं मालिन्याह —

**सुरगुरुशशिहोरास्वार्किदृष्टासु धर्मे**
**गुरुरथ नृपतीनां योगजस्तीर्थकृत् स्यात् ।**
**नवमभवनसंस्थे मन्दगेऽन्यैरदृष्टे**
**भवति नरपयोगे दीक्षितः पार्थिवेन्द्रः ॥ ४ ॥**

इति । आर्किदृष्टासु सुरगुरुशशिहोरासु धर्मे गुरुर्यदि भवति तदा नृपतीनां योगजः तीर्थकृत् स्यादित्यन्वयः[2] । सुरगुरुशशिहोरासु धनुर्मीनकर्कटकेषु लग्नेष्वित्यर्थः । अत्र केचित् सुरगुरुशशिलग्नेष्विति वदन्ति । नृपतीनां योगजः राजयोगे जातः तीर्थकृत् तीर्थं शास्त्रं शास्त्रकर्ता भवतीत्यर्थः । धनुषि मीने कर्कटके वा सौरदृष्टे लग्ने सति धर्मे गुरौ च सति यत्रकुत्रचिद् राजयोगे सति च जातः शास्त्रकारो भवति । अत्र प्रकरणवशात् प्रव्राजितैरध्येयानां शास्त्राणां कर्ता भवतीति द्रष्टव्यम् । अन्यैरदृष्टे मन्दगे नवमभवनसंस्थे नरपयोगे च सति दीक्षितः पार्थिवेन्द्रो भवति महाराजोऽपि दीक्षायुक्तो भवति । अत्र नरपयोगाभावे जातः केवलं दीक्षितो भवतीत्यनुसन्धेयम् । नवमगतस्य मन्दस्यान्यग्रहनिरीक्षणे सत्येव दीक्षाया अभावः, अन्यथा दीक्षाप्राप्तिः । तत्र राजयोगे सति राजत्वेऽपि दीक्षितो भवतीत्यर्थः । तथा पूर्वमन्यानिरीक्षितैरपि इत्युक्त्या पुनरन्यैर्यद्यदृष्ट इत्युक्त्या च इदानीमन्यैरदृष्टे इत्युक्त्या च त्रिरुक्तमुक्तं भवतीति न्यायेन प्रव्रज्यायोगस्यापवादोऽन्यग्रहनिरीक्षणमिति स्थिरीकृतं वेदितव्यम् । तथाचोक्तं —

"नवमस्थाने सौरो यदि स्थितः सर्वदर्शनविमुक्तः ।
नरनाथयोगजातो नृपोऽपि दीक्षान्वितो भवति ॥
नृपयोगस्याभावे योगेऽस्मिन् दीक्षितं नरं जातम् ।
निःसन्दिग्धं प्रवदेद् योगस्यास्य प्रभावेन ॥"

इति ॥ ४ ॥

इति होराविवरणे प्रव्रज्यायोगः पञ्चदशोऽध्यायः ॥

---

१. 'र्थः ॥ ३ ॥ प्र' ख. पाठः. २. 'यः । नृ' ख. ग. पाठः.

## अथ षोडशोऽध्यायः ।

लग्नादिराशिषु ग्रहस्थितिवशेन जातानि योगफलानि तथा ग्रहाणामितरेतरयोगफलानि च प्रदर्श्येदानीं राशीनां लग्नत्वयोगेन ग्रहयोगेन च जातानि फलानि प्रदर्श्यन्ते । तत्र लग्नस्य चन्द्रस्य च तुल्यफलत्वादभेदेन प्रथमं तत्फलानि शार्दूलविक्रीडितेनाह —

**वृत्ताताम्रदृगुष्णशाकलघुभुक् क्षिप्रप्रसादोऽटनः**
**कामी दुर्बलजानुरस्थिरधनः शूरोऽङ्गनावल्लभः ।**
**सेवाज्ञः कुनखी व्रणाङ्कितशिरा मानी सहोत्थाग्रजः**
**शक्त्या पाणितलेऽङ्कितोऽतिचपलस्तोये च भीरुः क्रिये ॥**

(इति ।) क्रिये लग्ने जातः, क्रियस्थे चन्द्रे जातश्च एवंविधो भवति इति सम्बन्धः । वृत्ताताम्रदृग् वृत्ते आताम्रे दृशौ यस्य स तथा । भौमस्य तेजोरूपत्वाद् रक्तत्वाच्च तेजोमयस्य नयनस्य विशेषो वक्तव्य इत्यर्थः । उष्णशाकलघुभुग् उष्णभोजी शाकभोजी शीघ्रभोजी च । क्षिप्रप्रसादः अल्पसन्तुष्टः । अटनः गमनशीलः । कामी । दुर्बलजानुः अमांसलपाद इत्यर्थः । अस्थिरधनः अस्थिराणि अदीर्घकालस्थितानि धनानि यस्य । सदा भिन्नरुचिरित्यर्थः । शूरः युद्धकुशलः । अङ्गनावल्लभः । सेवाज्ञः सेवापटुः । कुनखी नखविकारवान् । व्रणाङ्कितशिराः । मानी । सहोत्थाग्रजः सहोत्थेषु प्रथमः । शक्त्या पाणितलेऽङ्कितः रेखारूपया शक्त्या अङ्कितहस्तः । अतिचपलः तोये भीरुश्च[1] ॥१॥

पुनरपि शार्दूलविक्रीडितेनाह —

**कान्तः खेलगतिः पृथूरुवदनः पृष्ठास्यपार्श्वेऽङ्कित-**
**स्त्यागी क्लेशसहः प्रभुः ककुद्वान् कन्याप्रजः श्लेष्मलः ।**
**पूर्वैर्बन्धुभिरात्मजैर्विरहितः सौभाग्ययुक्तः क्षमी**
**दीप्ताग्निः प्रमदाप्रियः स्थिरसुहृन्मध्यान्त्यसौख्यो गवि ॥**

इति । गवि वृषे लग्ने वृषे चन्द्रे च जात एवंशीलो भवति । कान्तः । खेलगतिर्विलासयुक्तगतिः । पृथूरुवदनः पृथुनी ऊरुवदने यस्य स तथा । पृष्ठास्यपार्श्वे अङ्कितः लक्ष्मवान् । त्यागी दानशीलः । क्लेशसहः । प्रभुः । ककुद्वान् । कन्याप्रजः स्त्रीजनकः । श्लेष्मलः कफा-

१. 'श्च । कान्तेत्यादि । कान्तः ।' ख. पाठः.

न्वितः । पूर्वैर्बन्धुभिरात्मजैर्विरहितः । अपरैर्बन्धुभिः सहितश्च भवतीति अर्थाद् गम्यते । सौभाग्ययुक्तः । क्षमी क्षमावांश्च भवति । दीप्ताग्निः । प्रमदाप्रियः । स्थिरसुहृत् । मध्यान्त्यसौख्यः मध्ये अन्त्ये च वयसि सौख्ययुतश्च भवति ॥ २ ॥

अथ मिथुनस्थे चन्द्रमसि मिथुनलग्ने च जातस्य स्वरूपज्ञानार्थं शार्दूलविक्रीडितेनाह—

स्त्रीलोलः सुरतोपचारकुशलः श्यामेक्षणः शास्त्रविद्
दूतः कुञ्चितमूर्धजः पटुमतिर्हास्येङ्गितद्यूतवित् ।
चार्वङ्गः प्रियवाक् प्रभक्षणरतिर्गीतप्रियो नृत्तवित्
क्लीबैर्याति रतिं समुन्नतनसश्चन्द्रे तृतीयर्क्षगे ॥ ३ ॥

इति । तृतीयर्क्षगे चन्द्रे लग्ने च जातः एवंशीलो भवति । स्त्रीलोलः । सुरतोपचारकुशलः । श्यामेक्षणः नीलेक्षणः । शास्त्रवित् । दूतः सन्देशवचननिपुणः । कुञ्चितमूर्धजः कुटिलकेशः । पटुमतिः । हास्येङ्गितद्यूतवित्, हास्यवित् प्रहसनकुशलः, इङ्गितवित् परेषां हृदयज्ञः, द्यूतवित् सजीवद्यूतानां निर्जीवद्यूतानामपि विशेषज्ञः । चार्वङ्गः । प्रियवाक् । प्रभक्षणरतिः संततं भक्षणेन प्रीतियुक्तः । गीतप्रियः गान्धर्वकुशलः । नृत्तवित् नृत्तगुणदोषज्ञः । क्लीबैर्याति रतिम् । क्लीबैः षण्डैः । समुन्नतनसः उन्नतघ्राणः ॥ ३ ॥

पुनरपि शार्दूलविक्रीडितेनाह —

आवक्रद्रुतगः समुन्नतकटिः स्त्रीनिर्जितः सत्सुहृद्
दैवज्ञः प्रचुरालयः क्षयधनैः संयुज्यते चन्द्रवत् ।
ह्रस्वः पीनगलः समेति च वशं साम्ना सुहृद्वत्सल-
स्तोयोद्यानरतः स्ववेश्मसहिते जातः शशाङ्के नरः ॥ ४ ॥

इति । शशाङ्के स्ववेश्मसहिते अर्थात् कर्कटकसहिते कर्कटके चन्द्रे लग्ने च स्थिते (जात) एवंशीलो भवतीति सम्बन्धः । आवक्रद्रुतगः ईषद् वक्रं द्रुतं गच्छतीति तथा । समुन्नतकटिः । स्त्रीनिर्जितः स्त्रीणां वशग इत्यर्थः । सत्सुहृत् सतां सुहृत् । दैवज्ञः ज्योतिषज्ञः । प्रचुरालयः

१. 'प्र' क. ख. पाठः.

प्रचुरैर्भवनैर्युक्तः । चन्द्रवत् क्षयधनैः संयुज्यते कदाचित् क्षीणः कदाचित् पूर्णश्च भवतीत्यर्थः । ह्रस्वः खर्वः । पीनगलः । साम्ना वशं समेति च । सुहृद्वत्सलः बन्धुषु भक्तः । तोयोद्यानरतः तोयेषु उद्यानेषु च प्रीतियुक्तः ॥ ४ ॥

**तीक्ष्णः स्थूलहनुर्विशालवदनः पिङ्गेक्षणोऽल्पात्मजः**
**स्त्रीद्वेषी प्रियमांसकाननगः कुप्यत्यकार्ये चिरम् ।**
**क्षुत्तृष्णोदरदन्तमानसरुजा सम्पीडितस्त्यागवान्**
**विक्रान्तः स्थिरधीः सुगर्वितमना मातुर्विधेयोऽर्कभे ॥५॥**

तीक्ष्ण[1] इत्यादि । अर्कभे चन्द्रे अर्कभे लग्ने च एवंशीलो भवति । तीक्ष्णः असहिष्णुः आशु कार्यकर इत्यर्थः । स्थूलहनुः । विशालवदनः विस्तीर्णास्यः । पिङ्गेक्षणः पिङ्गलदृष्टिः । अल्पात्मजः । स्त्रीद्वेषी ब्रह्मचर्यरुचिरित्यर्थः । प्रियमांसकाननगः । अकार्ये चिरं कुप्यति । चिरम् आ[2] फलकरणात्, अभङ्गुरकोप इत्यर्थः । क्षुत्तृष्णोदरदन्तमानसरुजा सम्पीडितः । त्यागवान् । विक्रान्तः पराक्रमयुक्तः । स्थिरधीः स्थिरबुद्धिः । सुगर्वितमनाः आत्मनि बहुमानयुक्तः । मातुर्विधेयः जननीवशश्च भवति ॥ ५ ॥

**व्रीडामन्थरचारुवीक्षणगतिः स्रस्तांसबाहुः सुखी**
**श्लक्ष्णः सत्यरतः कलासु निपुणः शास्त्रार्थविद् धार्मिकः ।**
**मेधावी सुरतप्रियः परगृहैर्वित्तैश्च संयुज्यते**
**कन्यायां परदेशगः प्रियवचाः कन्याप्रजोऽल्पात्मजः ॥**

व्रीडे[3]त्यादि । कन्यायां चन्द्रे लग्ने च एवंविधो भवति । व्रीडामन्थरचारुवीक्षणगतिः स्त्रीस्वभावयुक्त इत्यर्थः । स्रस्तांसबाहुः स्रस्तं नतम् । सुखी । श्लक्ष्णः अपरुषः । सत्यरतः । कलासु निपुणः । शास्त्रार्थवित् शास्त्राणां तात्पर्यज्ञः । धार्मिकः । मेधावी । सुरतप्रियः । परगृहैः वित्तैश्च संयुज्यते । परगृहैः संयोगः स्वकीयत्वेन योगः । परदेशगः परदेशवासी च भवति । प्रियवचाः वचनप्रियः । कन्याप्रजः । अल्पात्मजश्च भवति ॥ ६ ॥

---

१. 'इति । अ' क. पाठः. २. 'अ' ख. पाठः. ३. 'इति । क' क. पाठः.

देवब्राह्मणसाधुपूजनरतः प्राज्ञः शुचिः स्त्रीजितः
प्रांशुः सोन्नतनासिकः कृशचलद्गात्रोऽटनोऽर्थान्वितः ।
हीनाङ्गः क्रयविक्रयेषु कुशलो देवद्विनामा सरुग्
बन्धूनामुपकारकृद् विरुषितस्त्यक्तश्च तैः सप्तमे ॥ ७ ॥

देवब्राह्मणेत्यादि । [3]सप्तमे तुलाराशौ चन्द्रे लग्ने वा सति एवंशीलो भवति । देवब्राह्मणसाधुपूजनरतः । प्राज्ञः । शुचिः । स्त्रीजितः स्त्रीभिर्जितः वशीकृत इत्यर्थः । प्रांशुः तुङ्गः । सोन्नतनासिकः अत्युच्चघ्राणः । कृशचलद्गात्रः कृशानि चलन्ति स्तोकेन निमित्तेन रोगारोग्यभाजनानि गात्राणि यस्य स तथा । अटनः । अर्थान्वितः । हीनाङ्गः अङ्गवैकल्ययुक्तः । क्रयविक्रयेषु कुशलः । देवद्विनामा देवनिमित्तकर्मवशाद् द्वितीयनामसहितः । सरुग् रोगसहितः । बन्धूनामुपकारकृत् । तैः विरुषितः त्यक्तश्च बन्धुभिः कोपितः परित्यक्तश्च भवति ॥ ७ ॥

अथ वृश्चिके जातस्य फलं मालिन्याह —

पृथुलनयनवक्षा वृत्तजङ्घोरुजानु-
र्जनकगुरुवियुक्तः शैशवे व्याधितश्च ।
नरपतिकुलपूज्यः पिङ्गलः क्रूरचेष्टो
झषकुलिशखगाङ्कश्छन्नपापोऽलिजातः ॥ ८ ॥

इति । अलिजात एवंशीलो भवति । अलौ वृश्चिकस्थिते चन्द्रे वृश्चिके लग्ने च सति जातः पृथुलनयनवक्षाः पृथुले विस्तीर्णे नयने वक्षः उरश्च यस्य स तथा । वृत्तजङ्घोरुजानुः वृत्ते परिवर्तुले जङ्घे ऊरू जानुनी च यस्य । जनकगुरुवियुक्तः । शैशवे व्याधितश्च शैशवे इति उभयत्रापि योज्यम् । नरपतिकुलपूज्यः । पिङ्गलः पिङ्गलवर्णः । क्रूरचेष्टः वधताडनादिक्रूरचेष्टायुक्तः । झषकुलिशखगाङ्कः रेखाकारैः झषकुलिशखगैः अङ्कितः । छन्नपापः गूढपापः ॥ ८ ॥

---

१. 'प्रांशुश्चोन्नते'ति मुद्रितपाठः. २. 'स्तु' ख. पाठः. ३. 'इति । स' क. पाठः.

धन्विनि जातस्य स्वरूपविज्ञानार्थं शार्दूलविक्रीडितेनाह —

व्यादीर्घास्यशिरोधरः पितृधनस्त्यागी कविर्वीर्यवान्
वक्ता स्थूलरदश्रवोधरनसः कर्मोद्यतः शिल्पवित् ।
कुब्जांसः कुनखी सुमांसलभुजः प्रागल्भ्यवान् धर्मविद्
बन्धुद्विट् न बलात् समेति च वशं सा(म्नै ? मै)कसा-
[ध्योऽश्विजः ॥ ९ ॥

इति । अश्विजः अश्विनि धनुषि चन्द्रे लग्ने वा जात एवंशीलो भवति । व्यादीर्घास्यशिरोधरः । पितृधनः पितृसम्बन्धिभिः धनैः धनजनकैः कर्मभिश्च युक्त इत्यर्थः । त्यागी । कविः प्राज्ञः काव्यकृच्च । वीर्यवान् । वक्ता वचनकुशलः । स्थूलरदश्रवोधरनसः स्थूलाः रदाः दन्ताः श्रवः श्रवणम् अधरश्च नासिका च यस्य स तथा । कर्मोद्यतः कर्मसु उद्यतः । शिल्पवित् शिल्पज्ञः । कुब्जांसः । कुनखी । सुमांसलभुजः । प्रागल्भ्यवान् प्रतिभानवान् । प्रागल्भ्यवागिति वा । धर्मवित् । बन्धुद्विट् बन्धुष्वप्रीतः । बलाद् वशं न समेति । सा(म्नै ? मै)-कसाध्यः साम्ना प्रियवचनेन एकेनैव साध्यः वशीकर्तव्यो भवति ॥९॥

नित्यं लालयति स्वदारतनयान् धर्मध्वजोऽधःकृशः
स्वक्षः क्षामकटिर्गृहीतवचनः सौभाग्ययुक्तोऽलसः ।
शीतालुर्मनुजोऽटनश्च मकरे सत्त्वाधिकः काव्यवि-
ल्लुब्धोऽगम्यजराङ्गनासु निरतः सन्त्यक्तलज्जोऽघृणः ॥

नित्यमित्यादि[2] । मकरे चन्द्रे लग्ने वा सति जातो मनुज एवंशीलो भवति । स्वदारतनयान् नित्यं लालयति । धर्मध्वजः धर्मकरणरहितोऽपि धर्मसाधनचिह्नयुक्तः । 'धर्मध्वजो लिङ्गवृत्तिरि'त्यमरः । अधःकृशः देहस्याधोर्धे कृशः । स्वक्षः शोभनदृष्टिः । क्षामकटिः शुष्कस्फिक्प्रदेशः । गृहीतवचनः श्रुतान्वितः । सौभाग्ययुक्तः । अलसः मन्दः । शीतालुः शीतासहः । अटनः । सत्त्वाधिकः प्राणबलाधिकः । काव्यवित् काव्यज्ञः । लुब्धः अर्थत्यागासहिष्णुः । अगम्यजराङ्गनासु निरतः नीचासु वृद्धासु च स्त्रीषु निरतः । सन्त्यक्तलज्जः स्वतो लज्जाशून्यः । अघृणः निर्घृणश्च भवति ॥ १० ॥

१. 'कृ', २. 'इति म' क. पाठः.

अथ कुम्भे जातस्य स्वरूपज्ञानं तोटकेना[१](?)ह —

**करभगलः सिरालखररोमशदीर्घतनुः**
**पृथुचरणोरुपृष्ठजघनास्यकटिर्बठरः ।**
**परवनितार्थपापनिरतः क्षयवृद्धियुतः**
**प्रियकुसुमानुलेपनसुहृद् घटजोऽध्वसहः ॥ ११ ॥**

इति । घटजः घटे चन्द्रे लग्ने च जातः एवंशीलो भवति । करभगलः दीर्घकण्ठ इत्यर्थः । सिरालखररोमशदीर्घतनुः सिराला अगूढसिरा खरा परुषा रोमबहुला दीर्घा च तनुर्यस्य स तथा । पृथुचरणोरुपृष्ठजघनास्यकटिः । बठरः निष्ठुरः, बधिर इति वा, बधिरो मूर्ख इति वा । परवनितार्थपापनिरतः परस्त्रीविषयपापकर्मसु निरतः । क्षयवृद्धियुतः कदाचित् क्षययुक्तः कदाचिद् वृद्धियुक्तः । प्रियकुसुमानुलेपनसुहृत् प्रियकुसुमः प्रियानुलेपनः प्रियबन्धुश्च । अध्वसहः अध्वश्रमसहिष्णुः ॥ ११ ॥

अथ मीने जातस्य स्वरूपविज्ञानं मालिन्याह —

**जलचरधनभोक्ता दारवासोनुरक्तः**
**समरुचिरशरीरस्तुङ्गनासो बृहत्कः ।**
**अभिभवति सपत्नांस्त्रीजितश्चारुदृष्टि-**
**र्द्युतिनिधिधनभोगी पण्डितश्चान्त्यराशौ ॥ १२ ॥**

इति । अन्त्यराशौ मीने चन्द्रे लग्ने च जातः एवंशीलो भवति । जलचरधनभोक्ता जलचराणि धनानि मुक्ताप्रवालादीनि सांयात्रिकविक्रेयद्रव्याणि भोक्तुं शीलमस्येति जलचरधनभोक्ता । दारवासोनुरक्तः दारेषु वासस्सु च अनुरागवान् । समरुचिरशरीरः । तुङ्गनासः । बृहत्कः बृहन्मूर्धा । सपत्नानभिभवति शत्रून् परिभवति । स्त्रीजितः । स्त्रीभिर्जितः वशीकृतः । चारुदृष्टिः शोभननेत्रः । द्युतिनिधिधनभोगी । द्युतिस्तेजः, निधिः पूर्वैर्भूमौ निहितं द्रव्यं, स्वतेजसा निधिलाभेन च लब्धस्य धनस्य भोगवानित्यर्थः । पण्डितश्च भवति ॥ १२ ॥

---

१. 'नर्कुटकेना' इति पाठः स्यात्

एवं द्वादशभिः श्लोकैः लग्नचन्द्राश्रितराशिशीलान्यभेदेनोक्त्वा चन्द्रस्य यथोक्तफल दानं प्रति विशेषमाह —

**बलवति राशौ तदधिपतौ च**
**स्वबलयुतः स्याद् यदि तुहिनांशुः ।**
**कथितफलानामविकलदाता**
**शशिवदतोऽन्येऽप्यनुपरिचिन्त्याः ॥ १३ ॥**

इति । राशौ तदधिपतौ च बलवति सति तुहिनांशुः स्वबलयुतो यदि कथितफलानामविकलदाता स्यादित्यन्वयः । चन्द्रः यस्मिन् राशौ तिष्ठति तस्य राशेस्तद्राश्यधिपतेश्च बलवत्त्वे सति चन्द्रः स्वयं च स्वकीयबलयुक्तः यदि भवति तदा यथोक्तानां फलानां साकल्येन दाता भवेत् । चन्द्रस्य चन्द्राधिष्ठितराशेस्तदधिपस्य च त्रयाणां बलवत्त्वे सति प्रोक्तफलानि सर्वाणि भवन्ति । एकस्य बलशून्यत्वे किञ्चिन्न्यूनानि भवन्ति । द्वयोर्बलशून्यत्वे यानिकानिचिद् भवन्ति । त्रयाणां बलशून्यत्वे असाराणि वा स्वप्नचिन्तागतानि वा अनुपयोगीनि भवन्तीत्युक्तं भवति । राशेर्बलशून्यत्वे राशिस्वभावजनितस्य उष्णशाकलघुभुक्त्वादिफलस्याभावः । राश्यधिपस्य बलशून्यत्वे 'वृत्तातास्रदृगि'त्यादिफलस्याभावः । 'लग्नस्यापि स्वामिवीर्यं हि वीर्य-मि'त्युक्त्या राश्यधिपबलाभावे राशेरपि बलाभावप्रसङ्गे 'स्वामिगुरुज्ञवीक्षितयुते'त्यादिराश्युक्तबलवशाद् राशिफलानि प्रायिकानि भवन्ति इत्यादि निरूपणीयम् । एवमुक्तमविकलफलदातृत्वादिकमन्येषामपि चिन्त्यमिति चतुर्थपादेनाह—अतः अन्येऽपि शशिवद् अनुपरिचिन्त्या इत्यन्वयः । अतः चन्द्राद् अन्ये ग्रहा अपि शशिवत् चन्द्रस्योक्तवद् राशौ राश्यधिपतौ च बलवति स्वबलयुताश्चेत् स्वोक्तफलानामविकलदातारः । अनुपरिचिन्त्याः इत्थंभावेन परिचिन्त्याः, यथावन्निरूपणीया इत्यर्थः । इत्थम्भूताख्यानेऽनुशब्दो वर्तते इति 'लक्षणेत्थम्भूताख्यानभागवीप्सासु प्रतिपर्यनवः' (१-४-९०) इति सूत्रवशाद् विज्ञायते । बलाबलवशेन विमृश्य फलानां तारतम्यमवगम्य निर्देशः कर्तव्य इत्युक्तं भवति । लग्नफलस्य तु बलवति राशौ तदधिपतौ चेत्येतावन्मात्रेण अधिपबलवशात् स्वबलवशाच्च वैकल्यं साकल्यं वा विमृश्य वक्तव्यम् ॥

एवं राशीनां लग्नत्वसम्बन्धे सति सम्भाव्यानि शीलानि पृथक् पृथगुपदिश्य अनन्तरं ग्रहयोगवशेन सम्भाव्यानि फलानि क्रमेणोपदिशति । तत्र प्रथमं मेषवृषगतेऽर्के जातस्य स्वरूपज्ञानमौपच्छन्दसिकेनाह —

**प्रथितश्चतुरोऽटनोऽल्पवित्तः**
**क्रियगे त्वायुधकृद् वितुङ्गभागे ।**
**गवि वस्त्रसुगन्धपण्यजीवी**
**वनिताद्विट् कुशलश्च गेयवाद्ये ॥ १४ ॥**

इति । उत्तरश्लोकगतं भानाविति पदं सिंहावलोकितन्यायेनात्राप्यनुकृष्यते । भानौ क्रियगे वितुङ्गभागे तु प्रथितः चतुरः अटनः अल्पवित्तः आयुधकृच्च भवतीत्यन्वयः । आयुधभृदिति वा पाठः । तत्र शस्त्रधारणजीवीत्यर्थः । क्रियगे मेषं गते तत्रापि वितुङ्गभागे उच्चादन्यत्र भागे स्थिते सति । परमोच्चस्थस्य रवेः राजयोगादिषु पूर्वमुक्तफलत्वान्मेषराशौ परमोच्चादन्यत्र स्थितस्य फलमत्रोच्यते । प्रथितः प्रसिद्धः । चतुरः विदग्धः । अटनः । अल्पवित्तः । आयुधकृद् आयुधव्यापारपरश्च भवति । भानौ गवि स्थिते सति वस्त्रसुगन्धपण्यजीवी वस्त्रैः सुगन्धैः कर्पूरादिभिश्च वाणिज्यद्रव्यैः जीवितुं शीलमस्येति स तथा । वनिताद्विट् स्त्रीषु प्रीतिरहितः । गेयवाद्ये कुशलश्च भवति गेयेषु वाद्येषु च कुशलः निपुणो भवति ॥ १४ ॥

अथ मिथुनादिस्थिते सूर्ये जातस्य स्वरूपविज्ञानं शार्दूलविक्रीडितेनाह —

**विद्याज्योतिषवित्तवान् मिथुनगे भानौ कुलीरस्थिते**
**तीक्ष्णोऽस्वः परकार्यकृच्छ्रमवधक्लेशैश्च संयुज्यते ।**
**सिंहस्थे वनशैलगोकुलरतिर्वीर्यान्वितो ज्ञः पुमान्**
**कन्यास्थे लिपिलेख्यकाव्यगणितज्ञानान्वितः स्त्रीवपुः ॥**

इति । भानौ मिथुनगे विद्याज्योतिषवित्तवान् भवति विद्यावान् तत्र विशेषाद् ज्यौतिषज्ञानवान् धनवांश्च भवतीत्यर्थः । भानौ कुलीरस्थिते तीक्ष्णः असहनत्वाद् आशुकार्यकरः । अस्वः धनरहितः । परकार्यकृत् परेषां कार्यकर्ता । श्रमवधक्लेशैः संयुज्यते च श्रमोऽङ्गसादः तज्जनकेन कर्मणा, वधो हिंसा वधेन, क्लेशेन उपतापेन च संयुज्यते । भानौ सिंहस्थे सति वनशैलगोकुलरतिः वनेषु शैलेषु गोकुलेषु च प्रीतियुक्तः ।

वीर्यान्वितः। ज्ञः आत्मस्वरूपस्य सत्त्वगुणात्मकस्य सकलप्रकाशकस्य भानोर्मूलत्रिकोणक्षेत्रभूते सिंहे स्थितस्य फलमज्ञत्वं न सम्भवेद्, अतोऽत्र ज्ञ इति पाठः। भानौ कन्यास्थे सति जातः पुमान् लिपिलेख्यकाव्यगणितज्ञानान्वितः स्त्रीवपुश्च भवति। लिपयो नागराद्याः, लेख्यानि चित्राणि, काव्यानि कविकर्माणि, गणितानि लौकिकगणितानि ग्रहविषयगणितानि च, एतेषु ज्ञानान्वितः। स्त्रीवपुः स्त्रीसमानशरीरः॥ १५॥

अथ तुलादिचतुष्कस्थेऽर्के जातस्य स्वरूपज्ञानं शार्दूलविक्रीडितेनाह —

**जातस्तौलिनि शौण्डिकोऽध्वनिरतो हैरण्यको नीचकृत्**
**क्रूरः साहसिको विषार्जितधनः शास्त्रान्तगोऽलिस्थिते।**
**सत्पूज्यो धनवान् धनुर्धरगते तीक्ष्णो भिषक् कारुको**
**नीचोऽज्ञः कुवणिङ् मृगेऽल्पधनवाँल्लुब्धोऽन्यभाग्ये**
**[रतः॥ १६॥**

इति। भानौ तौलिनि स्थिते जातः शौण्डिकः शुण्डया जीवतीति शौण्डिकः शुण्डया निमित्तभूतया। "शुण्डा करिकरे मद्ये" इत्यमरः। हस्तिशिक्षया मद्यशिक्षया वा जीवतीत्यर्थः। हस्तिशिक्षा आधोरणकर्म। मद्यं मदकरद्रव्यं ताम्बूलमदयन्तिकामादिरादि। एतैर्निमित्तभूतैरंशकयोगेक्षणादिविज्ञेयविशेषैर्जीवतीत्यनुसन्धेयम्। अध्वनां रतः चङ्क्रमणपरः। हैरण्यकः। हिरण्यप्रयोजनो हैरण्यः। कुत्सायां कन् प्रत्ययः। कुत्सितो हैरण्यो हैरण्यकः। हिरण्यार्थमकर्तव्यानि कुर्वाण इति यावत्। नीचकृत् नीचकारी। अचेतनत्वात् कीर्त्यर्थोत्साहशून्य इति यावत्। भानौ अलिस्थिते जातः क्रूरः। साहसिकः हिताहितानपेक्षकर्मकरः। विषार्जितधनः विषेण निमित्तभूतेन आर्जितधनः। विषविक्रयेण विषचिकित्सया वा आर्जितधन इत्यर्थः। शास्त्रान्तगः शास्त्रपारदृश्वा। भानौ धनुर्धरगते जातः सत्पूज्यः सतां पूज्यः। धनवान्। तीक्ष्णः। भिषक् भैषज्यकुशलः। कारुकः शिल्पी च भवति। भानौ मृगे स्थिते सति नीचः। अज्ञः। कुवणिक् कुत्सितवाणिज्यकरः। अल्पधनवान्। लुब्धः अन्यायेन परद्रव्यादित्सुः। अन्यभाग्ये रतः परेषां भाग्ये प्रीतः॥ १६॥

अथ कुम्भमीनयोः स्थितेऽर्के जातस्य स्वरूपज्ञानं वसन्ततिलकेनाह—

**नीचो घटे तनयभाग्यपरिच्युतोऽस्व-**
**स्तोयोत्थपण्यविभवो वनिताहृतोऽन्त्ये ।**
**नक्षत्रमानवतनुप्रतिमे विभागे**
**लक्ष्मादिशेत् तुहिनरश्मिदिनेशयुक्ते ॥ १७ ॥**

इति । भानौ घटे स्थिते सति नीचः तनयभाग्यपरिच्युतः तनयैर्भाग्यैश्च हीनः । अस्वः धनरहितः । अन्त्ये भानौ[1] स्थिते सति तोयोत्थपण्यविभवः । तोयेन निमित्तेनोत्थितं तोयोत्थम् । तोयोत्थानि पण्यानि वाणिज्यद्रव्याणि, तोयोत्था विभवाः धनधान्यादिसमृद्धयो यस्य सः तोयोत्थपण्यविभवः । वनिताहृतः वनिताभिराहृतश्च भवति । एवमादित्यस्य राशिशीलान्युक्तानि । अनन्तरं वक्तव्यानि चन्द्रस्य राशिशीलान्यपि पूर्वमेवोक्तानि । इदानीमुभयोरपि युगपद्योगभवं राशिफलमाह—तुहिनरश्मिदिनेशयुक्ते नक्षत्रमानवतनुप्रतिमे विभागे लक्ष्म आदिशेदित्यन्वयः । चन्द्रेणादित्येन च एकांशगाभ्यां युक्तो यो राशिः स राशिः 'कालाङ्गानि वराङ्गमाननम्' इत्यादिनोक्ते नक्षत्रमानवशरीरे यत्र भवति तत्प्रतिमे विभागे देहावयवभागे लक्ष्म चिह्नमादेष्टव्यमित्यर्थः । अथवा नक्षत्रमानवतनुप्रतिम इत्यत्र

"शशिचन्द्रानलहिमकरशशियुगगुणभूतचन्द्रवेदगुणाः ।
मुखवामनेत्रमस्तकदक्षिणहृत्कण्ठहस्तपादेषु ॥
हृद्गलवामकराङ्घ्रिषु नरस्य रणकाङ्क्षिणोऽङ्गानि ।"

इति पराशरहोरायाम् । एवं नक्षत्रमानवतनुप्रतिमे विभागे लक्ष्मादिशेदित्यर्थः । युद्धप्रश्नेऽनिष्टकर्ता बलिष्ठः पापो यस्मिन्नृक्षे स्थितः तत्प्रतिमे विभागे व्रणो भवतीति वक्तव्यम् ॥ १७ ॥

एवमादित्यचन्द्रयोः फलान्युक्त्वा कुजस्य राशिशीलान्याह । तत्र प्रथमं स्वर्क्षशुक्रर्क्षयोः स्थिते कुजे जातस्य स्वरूपज्ञानं तोटकेना(?)ह[2]—

**नरपतिसत्कृताटनचमूपवणिक्सधनान्**
**क्षततनुचोरभूरिविषयांश्च कुजः स्वगृहे ।**

---

१. 'नौ अन्त्ये स्थि' क. पाठः. २. 'नत्कुटकेना' इति पाठः स्यात् ।

**युवतिजितान् सुहृत्सु विषमान् परदाररतान्**
**कुहकसुवेषभीरुपरुषान् सितभे जनयेत् ॥ १८ ॥**

इति । कुजः स्वगृहे स्थितः सन् एवंविधान् जनयेदिति सम्बन्धः । नरपतिसत्कृतं राजभिः सम्मानितम् अटनं चमूपतिं वणिजं सधनं च । तथा क्षततनुचोरभूरिविषयांश्च क्षततनुं चोरं निजव्रणेन आगन्तुकव्रणेन वा युक्तं चोरं, भूरिविषयम् अजितेन्द्रियं च जनयेत् । स्वगृहे मेषे वृश्चिके च । स्वक्षेत्रे स्थितस्यापि मूलत्रिकोणगतत्वेन उच्चारोहित्वेन वा शुभफलानि वक्तव्यानि । तथा मौढ्येन शत्रुनिरीक्षितत्वेन वा अशुभफलानि वक्तव्यानीति सार्वत्रिको न्यायोऽत्रापि फलसङ्करे द्रष्टव्यः । सितभे वृषभे तुलायां च स्थितः कुजः युवतिजितान्, सुहृत्सु विषमान्, परदाररतान्, कुहकान् मायाकुशलान्, सुवेषान् शोभनवेषप्रियान्, भीरून् भययुक्तान्, परुषान् निष्ठुरांश्च जनयेत् ॥ १८ ॥

अथ बुधचन्द्रक्षेत्रगते कुजे जातस्य स्वरूपं वसन्ततिलकेनाह —

**बौधे सहस्तनयवान् विसुहृत् कृतज्ञो**
**गान्धर्वयुद्धकुशलः कृपणोऽभयोऽर्थी ।**
**चान्द्रेऽर्थवान् सलिलयानसमार्जितस्वः**
**प्राज्ञश्च भूमितनये विकलः खलश्च ॥ १९ ॥**

इति । भूमितनये बौधे कन्यायां मिथुने च स्थिते सति सहस्तनयवान् भवति । सहो बलम् । "सहसी बलरंहसी" इति यादवः । बलवांस्तनयवांश्च भवतीत्यर्थः । विसुहृद् बन्धुरहितः । कृतज्ञ उपकारस्मर्ता । गान्धर्वयुद्धकुशलः गान्धर्वे युद्धे च कुशलः । कृपणः कार्पण्ययुक्तः । अभयः भयरहितः । अर्थी अर्थवांश्च भवति । भूमितनये चान्द्रे चन्द्रराशौ कर्कटकराशौ स्थिते अर्थवान् भवति । सलिलयानसमार्जितस्वः सलिलयानेन सम्यगार्जितधनश्च, प्राज्ञः विद्वान्, विकलः वैकल्ययुक्तः, खलः नीचश्च भवति ॥ १९ ॥

अथ रविगुरुमन्दक्षेगते जातस्य स्वरूपविज्ञानं शार्दूलविक्रीडितेनाह —

**निःस्वः क्लेशसहोऽभयो वनचरः सिंहेऽल्पदारात्मजो**
**जैवे नैकरिपुर्नरेन्द्रसचिवः ख्यातोऽभयोऽल्पात्मजः ।**

दुःखार्तो विधनोऽटनोऽनृतरतिस्तीक्ष्णश्च कुम्भे स्थिते
भौमे भूरिधनात्मजो मृगगते भूपोऽथवा तत्समः ॥२०॥

इति । भूमितनये सिंहे स्थिते निःस्वः क्लेशसहः अभयः वनचरः अल्पदारात्मजश्च भवति [1] भूमितनये जैवे जीवसम्बन्धिनि धनुषि मीने च राशौ स्थिते सति नैकरिपुः बहुशत्रुः नरेन्द्रसचिवः ख्यातः अभयः अल्पात्मजश्च भवति । भौमे कुम्भे स्थिते दुःखार्तः विधनः अटनः अनृतरतिः तीक्ष्णश्च भवति । भौमे मृगगते भूरिधनात्मजः भूपः, अथवा तत्समः भूपसमो वा भवति ॥ २० ॥

अथ कुजशुक्रक्षेत्रगते बुधे जातस्य स्वरूपविज्ञानं वसन्ततिलकेनाह —

द्यूतान्नपानरतनास्तिकचोरनिःस्वः
कुस्त्रीककूटकृदसत्यरतः कुजर्क्षे ।
आचार्यभूरिसुतदारधनार्जनेष्टः
शौक्रे वदान्यगुरुभक्तियुतश्च सौम्ये ॥ २१ ॥

इति । सौम्ये कुजर्क्षे स्थिते सति द्यूतान्नपानरतनास्तिकचोरनिःस्वो भवति । द्यूते विजिगीषुव्यापारे अन्नपानयोश्च निरतः नास्तिकः ऐहिकप्रधानः चोरः निःस्वः निर्धनः, कुस्त्रीककूटकृत् कुस्त्रीकश्च कूटकृच्च, असत्यरतश्च भवति । सौम्ये शौक्रे वृषभे तुलायां च स्थिते सति आचार्यभूरिसुतदारधनार्जनेष्टः आचार्यश्च भूरिसुतदाराश्च धनार्जनं च इष्टानि यस्य स तथा, वदान्यगुरुभक्तियुतश्च वदान्यो दानशीलः गुरुभक्तियुतश्च भवति । आचार्योऽध्यापकः, गुरवः पित्रादय इति विशेषः । उभयत्रापि भक्तो भवतीत्यर्थः ॥ २१ ॥

अथ मिथुनकर्कटकस्थे बुधे जातस्य स्वरूपविज्ञानार्थमिन्द्रवज्रामाह—

विकत्थनः शास्त्रकलाविदग्धः
प्रियंवदः सौख्यरतस्तृतीये ।
जलार्जितस्वः स्वजनस्य शत्रुः
शशाङ्कजे शीतकरर्क्षयुक्ते ॥ २२ ॥

---

१. 'ति ॥ कु' क. पाठः.

इति । सौम्ये तृतीये मिथुने स्थिते सति जातः विकत्थनः आत्मश्लाघी, शास्त्रकलाविदग्धः शास्त्रेषु कलासु च विदग्धः, प्रियंवदः सौख्यरतश्च भवति । शशाङ्कजे शीतकरर्क्षयुक्ते जलार्जितस्वः जलेन वा जलयानेन वा जलोद्भवैर्वा आर्जितधन इत्यर्थः । स्वजनस्य शत्रुश्च भवति ॥ २२ ॥

**स्त्रीद्वेष्यो विधनसुखात्मजोऽटनोऽज्ञः**
**स्त्रीलोलः सुपरिभवोऽर्कराशिगे ज्ञे ।**
**त्यागी ज्ञः प्रचुरगुणः सुखी क्षमावान्**
**युक्तिज्ञो विगतभयश्च षष्ठराशौ ॥ २३ ॥**

स्त्रीद्वेष्य इति । ज्ञे अर्कराशिगे सति स्त्रीद्वेष्यः स्त्रीणामप्रियः, विधनः विसुखः विपुत्रश्च, अटनः, अज्ञः मूर्खः, स्त्रीलोलः, सुपरिभवः अयत्नेन परिभवार्हश्च भवति । शशाङ्कजे षष्ठराशौ स्थिते सति त्यागी, ज्ञः विद्वान्, प्रचुरगुणः प्रचुरैर्बहुभिर्गुणैर्युक्तः, सुखी, क्षमावान् सर्वसहः, युक्तिज्ञः युक्तिषु कुशलः, विगतभयः भयरहितः जल्पे वादे वितण्डायां च भयरहितः । स्वपक्षस्थापनकथा जल्पः, परपक्षनिराकरणेन स्वपक्षस्थापनकथा वादः, परपक्षनिराकरणकथा वितण्डा ॥ २३ ॥

अथ गुरुमन्दक्षेत्रगते बुधे जातस्य स्वरूपज्ञानमौपच्छन्दसिकेनाह —

**नृपसम्मतपण्डिताप्तवाक्यो**
**नवमेऽन्त्ये जितसेवकोऽन्त्यशिल्पः ।**
**परकर्मकृदस्वशिल्पबुद्धि-**
**स्त्वृणवान् विष्टिकरो बुधेऽर्कजर्क्षे ॥ २४ ॥**

इति । बुधे नवमे राशौ स्थिते सति नृपसम्मतपण्डिताप्तवाक्यः नृपसम्मतश्च पण्डितश्च आप्तवाक्यश्च प्रमाणभूतवाक्यश्च भवति । अन्त्ये सौम्ये मीनराशौ स्थिते सति जितसेवकः जिताः सेवागुणातिशयेनाधरीकृता अन्ये सेवका येन स जितसेवकः, पराराधनदक्ष इत्यर्थः । अन्त्यशिल्पः अन्त्यानां नीचानां शिल्पेन युक्तः । बुधे अर्कजर्क्षे स्थिते तु परकर्मकृत् परप्रेष्यः, अस्वशिल्पबुद्धिः अन्यशिल्प-

१. 'स' ख. पाठः. २. 'लः, स्वपरिभव इति वा पाठः । सु' क. पाठः. ३. 'न्ये अन्त्ये मी', ४. 'सति प' ख. पाठः.

बुद्धिश्च भवति । अस्वो दरिद्रः शिल्पबुद्धिश्चेति वा । ऋणवान्, विष्टिकरः भार[1]वाहश्च भवति ॥ २४ ॥

अथ[2] कुजभृगुबुधक्षेत्रगते गुरौ जातस्य स्वरूपज्ञानं शार्दूलविक्रीडितेनाह —

सेनानीर्बहुवित्तदारतनयो दाता सुभृत्यः क्षमी
तेजोदारगुणान्वितः सुरगुरौ जातः पुमान् कौजभे ।
कल्याङ्गः ससुखार्थमित्रतनयस्त्यागी प्रियः शौक्रभे
बौधे भूरिपरिच्छदात्मजसुहृत्साचिव्ययुक्तः सुखी ॥

इति । सुरगुरौ कौजभे मेषे वृश्चिके च स्थिते सति जातः पुमान् सेनानीः सेनापतिर्भवति । बहुवित्तदारतनयः बहुवित्तः बहुदारः बहुतनयश्च, दाता, सुभृत्यः, क्षमी क्षमागुणयुक्तः, तेजोदारगुणान्वितः तेजसा परानभिभवनीयत्वलक्षणेन[3] तथा दारगुणेन सौम्यगुणेन अभिगम्यगुणेन च अन्वितः । दार[4]गुणशब्देन अभिगम्यगुणा लक्ष्यन्ते, अतो न पौनरुक्त्यदोषः[5] । तेजसा दारैर्भार्यादिभिः गुणैर्विद्यादिभिश्च युक्त इति वा । सुरगुरौ शौक्रभे वृषभे तुलायां च स्थिते सति कल्याङ्गः स्वस्थशरीरः, ससुखार्थमित्रतनयः, त्यागी, प्रियः लोकप्रियश्च भवति । सुरगुरौ बौधे मिथुने कन्यायां च स्थिते सति भूरिपरिच्छदात्मजसुहृत्साचिव्ययुक्तः परिच्छदाः वसनासनशयनादयो भोगोपकरणविशेषाः आत्मजाः सुहृदश्च साचिव्यं सचिवकर्म एतैर्भूरिभिर्युक्तः, सुखी च भवति ॥ २५ ॥

चान्द्रे रत्नसुतस्वदारविभवः प्राज्ञः सुखैरन्वितः
सिंहे स्याद् बलनायकः सुरगुरावुक्तं च यच्चान्द्रभे ।
स्वर्क्षे माण्डलिको नरेन्द्रसचिवः सेनापतिर्वा धनी
कुम्भे कर्कटवत् फलानि मकरे नीचोऽल्पवित्तोऽसुखी ॥

चान्द्रे रत्नेति । सुरगुरौ चान्द्रे कर्कटके स्थिते सति जातः रत्नसुतस्वदारविभवः रत्नानां सुतानां धनानां दाराणां च विभवेन युक्तो भवति । अर्शआदित्वाद् अच्प्रत्ययो मत्वर्थीयः । प्राज्ञः, सुखैरन्वितश्च

१. 'रावह', २. 'थ गुरोः राशिशीलानि प्रदर्श्यन्ते — सेना' ग. पाठः. ३. 'न अधृष्यगुणेन त' ख. पाठः. ४. 'रशब्देन च अ' ग. पाठः. ५. 'षः । सु' ख. पाठः.

भवति। सुरगुरौ सिंहे स्थिते सति बलनायकः स्यात्। चान्द्रभे यदुक्तं यत् फलमुक्तं तदपि सर्वं भवति। सुरगुरौ स्वर्क्षे धनुषि मीने च स्थिते सति माण्डलिकः मण्डलाधिपः, नरेन्द्रसचिवो वा, सेनापतिर्वा, धनी धनवान् भवति। गुरौ कुम्भे स्थिते सति कर्कटवत् कर्कटराशावुक्तानि फलानि भवन्ति। गुरौ मकरे स्थिते सति नीचः अधमः, अल्पवित्तः वृत्तिमात्रधनः, असुखी ईषत्सुखी च भवतीत्यर्थः। सुखीति वा पाठः॥ २६॥

[1]अथ कुजर्क्षे स्वर्क्षे च स्थिते शुक्रे जातस्य स्वरूपज्ञानार्थं पुष्पिताग्रामाह—

**परयुवतिरतस्तदर्थवादै-**
**र्हृतविभवः कुलपांसनः कुजर्क्षे।**
**सुबलमतिधनो नरेन्द्रपूज्यः**
**स्वजनविभुः प्रथितोऽभयः सिते स्वे॥ २७॥**

इति। सिते कुजर्क्षे स्थिते सति परयुवतिरतः, तदर्थवादैः तदर्थैः परयुवतिनिमित्तैः वादैः व्यवहारैः हृतविभवः, कुलपांसनः कुलकलङ्कभूतश्च भवति। सिते स्वे राशौ वृषभे तुलायां च, सुबलमतिधनः शोभनानि बलमतिधनानि यस्य स तथा, नरेन्द्रपूज्यः, स्वजनविभुः स्वजनानां विभुः, प्रथितः प्रसिद्धः, अभयः॥ २७॥

अथ बुधमन्दक्षेत्रगते जातस्य स्वरूपमौपच्छन्दसिकेनाह—

**नृपकृत्यकरोऽर्थवान् कलावि-**
**न्मिथुने षष्ठगतेऽस्वनीचकर्मा।**
**रविजर्क्षगतेऽमरारिपूज्ये**
**सुभगः स्त्रीविजितो रतः कुनार्याम्॥ २८॥**

इति। अमरारिपूज्ये मिथुने स्थिते सति नृपकृत्यकरः राजकार्यकरः, अर्थवान्, कलावित्। षष्ठगते कन्यागते सति अस्वनीचकर्मा भवति। अस्वः अधनः नीचकर्मा अनुचितव्यापारश्च भवति। अमरारिपूज्ये रविजर्क्षगते सुभगः, स्त्रीविजितः स्त्रीणां वशीभूतः, कुनार्यां रतश्च भवति॥ २८॥

---

१. 'शुक्रस्य राशिशीलान्याह—पर' ग. पाठः. २. 'नश्च भवति कुल' क. ग. पाठः.

चन्द्ररविगुरुक्षेत्रगते जातस्य स्वरूपं शिखरिण्याह —

द्विभार्योऽर्थी भीरुः प्रबलमदशोकश्च शशिभे
हरौ योषाप्तार्थः प्रवरयुवतिर्मन्दतनयः ।
गणैः पूज्यः सस्वस्तुरगसहिते दानवगुरौ
झषे विद्वानाढ्यो नृपजनितपूजोऽतिसुभगः ॥ २९ ॥

इति । दानवगुरौ शशिभे स्थिते सति द्विभार्यः, अर्थी याचना[1]-शीलः, भीरुः, प्रबलमदः प्रबलशोकश्च भवति । दानवगुरौ हरौ स्थिते सति योषाप्तार्थः स्त्रीसकाशादाप्तधनः, प्रवरयुवतिः प्रवरा राजकुलादि-सम्भवा युवतिर्यस्य स तथा, मन्दतनयः अल्पसुतश्च भवति। दानवगुरौ तुरगसहिते, गणैः पूज्यः, सस्वः धनसहितश्च भवति । दानवगुरौ झषे सति विद्वान्, आढ्यः धनसमृद्धः, नृपजनितपूजः राजभिः कृतपूजः, अतिसुभगश्च भवति ॥ २९ ॥

अथ कुजबुधर्क्षस्थे मन्दे जातस्य स्वरूपं[2] वसन्ततिलकेनाह —

मूर्खोऽटनः कपटवान् विसुहृद् यमेऽजे
कीटे तु बन्धवधभाक् चपलोऽघृणश्च ।
निर्ह्रीसुखार्थतनयः स्खलितश्च लेख्ये
रक्षापतिर्भवति मुख्यभृतश्च बौधे ॥ ३० ॥

इति । यमे अजे स्थिते सति जातः मूर्खः अज्ञः, अटनः, कप-टवान्, विसुहृद् बन्धुरहितश्च भवति । कीटे तु, बन्धवधभाक् बन्धनं ताडनं च भजते । चपलः, अघृणः निर्घृणश्च भवति । बौधे मिथुने कन्यायां च स्थिते सति निर्ह्रीसुखार्थतनयः निर्ह्रीः निर्लज्जः निस्सुखः निरर्थः निस्तनयश्च, लेख्ये स्खलितश्च, रक्षापतिः कारागृहपतिः, मुख्य-भृतश्च मुख्यानां भृत्यश्च भवति[3] ॥ ३० ॥

अथ शुक्रेन्दुसूर्यर्क्षगते जातस्य स्वरूपविज्ञानं मन्दाक्रान्तयाह —

वर्ज्यस्त्रीष्टो नबहुविभवो भूरिभार्यो वृषस्थे
ख्यातः स्वोच्चे गणपुरबलग्रामपूज्योऽर्थवांश्च ।

१. 'न' क. पाठः. २. 'पज्ञानं व', ३. 'तीत्यर्थः॥' क. ग. पाठः.

कर्किण्यस्वो विरलदशनो मातृहीनोऽसुतोऽज्ञः
सिंहेऽनार्यो विसुखतनयो विष्टिकृत् सूर्यपुत्रे ॥ ३१ ॥

इति । सूर्यपुत्रे वृषस्थे वर्ज्यस्त्रीष्टो वर्ज्यस्त्रीणाम् अगम्यानां स्त्रीणामिष्टः बहुविभवरहितः बहुभार्यश्च भवति । सूर्यपुत्रे स्वोच्चे स्थिते सति जातः ख्यातः, गणपुरबलग्रामपूज्यः, अर्थवांश्च भवति । सूर्यपुत्रे कर्किणि स्थिते अस्वः, विरलदशनः, मातृहीनः, असुतः, अज्ञश्च भवति । सूर्यपुत्रे सिंहे स्थिते सति अनार्यः, विसुखतनयः विसुखः वितनयश्च, विष्टिकृद् भारवाही च भवति ॥ ३१ ॥

अथ गुरुस्वर्क्षगते जातस्य स्वरूपं शार्दूलविक्रीडितेनाह —

स्वन्तः प्रत्ययिता नरेन्द्रभवने सत्पुत्रजायाधनो
जीवक्षेत्रगतेऽर्कजे पुरबलग्रामाग्रनेताथवा ।
अन्यस्त्रीधनसम्भृतः पुरबलग्रामाग्रणीर्मन्ददृक्
स्वक्षेत्रे मलिनः स्थिरार्थविभवो भोक्ता च जातः
[पुमान् ॥ ३२ ॥

इति । अर्कजे जीवक्षेत्रगते जातः पुमान् स्वन्तः शोभनमृत्युः, वृद्धत्वेऽपि सुखित इत्यर्थः । नरेन्द्रभवने प्रत्ययिता विश्वासकर्ता, सत्पुत्रजायाधनः, अथवा पुरबलग्रामाग्रनेता बलवशात् पुरनेता वा बलनेता वा ग्रामनेता वा तत्रापि अग्रनेता अग्रणीर्भवति । अर्कजे स्वक्षेत्रे स्थिते सति जातः पुमान् अन्यस्त्रीधनसम्भृतः अन्यस्त्रीसम्भृतः अन्यधनसम्भृतः, पुरबलग्रामाग्रणीः पुरस्य बलस्य ग्रामस्य च अग्रणीरग्रनेता, मन्ददृक् अलसदृष्टिः, मलिनः मृजारहितः, स्थिरार्थविभवः, भोक्ता च भवति । एवं ग्रहाणां राशिशीलान्युक्तानि ॥ ३२ ॥

एवमुक्तिक्रमेण सूचितं लग्नचन्द्रयोः समानफलत्वम् इदानीं साक्षात्कर्तुं पुष्पिताग्रामाह —

शिशिरकरसमागमेक्षणानां
सदृशफलं प्रवदन्ति लग्नजातम् ।

१. 'ष्टो भवति । ब', २ 'लफलान्युक्ता' ख. पाठः.

फलमधिकमिदं यदत्र भावाद्
भवनभनाथगुणैर्विचिन्तनीयम् ॥ ३३ ॥

इति। लग्नजातं फलं शिशिरकरसमागमेक्षणानां सदृशफलं प्रवदन्तीत्यन्वयः। राशीनां लग्नत्वे जातं फलं लग्नजातशब्देनोच्यते। तच्च शिशिरकरसमागमेन राशीनां चन्द्रयोगेन यत् फलमुक्तं तत्सदृशं, तथा चन्द्रस्य अन्यग्रहवीक्षणे यत् फलं वक्ष्यते तत् फलमपि लग्नस्य ग्रहवीक्षणे सति चन्द्रवीक्षणेन सदृशं वक्तव्यम्। एवं राशिफलस्य दृष्टिफलस्य च लग्नचन्द्रयोः सामान्येन निर्देश इत्युक्तं भवति। अत्र चन्द्रस्य राशिशीलमुक्तं, भावफलानि पृथग् वक्ष्यन्ते च। लग्नस्य तु राशिशीलम् अत्र शिशिरकरसमागमेक्षणसदृशफलत्वनिर्देशेन प्रदर्शितम्। लग्नभावत्वजनितं फलं तु चन्द्रवद् भावान्तरसम्बन्धाभावाद् एकमात्रमत्रैव निर्दिश्यते अधिकमित्यादिना श्लोकशेषेण। यदिदं लग्नस्य राशिफलमुक्तं, तद् भावाद् भवनभनाथगुणैरधिकं विचिन्तनीयमिति सम्बन्धः। भावात् तनुकल्यादियथोद्दिष्टलग्नभाववशात्, तथा भवनभनाथगुणैः यथोद्दिष्टैः भवनगुणैः राशिधर्मैः भनाथगुणैः राश्यधिपग्रहधर्मैः अधिकम् उद्दिष्टात् स्वरूपाद् आधिक्ययुक्तं विचिन्तनीयमित्यर्थः। राशिफलं भावफलं च राश्यधिपधर्मैर्मेलयित्वा वक्तव्यमित्युक्तं भवति। अस्यार्थस्य 'बलवति राशौ तदधिपतौ चे'त्यादिनोक्तन्यायेन सिद्धत्वेऽपि पुनरप्यभिधानं सारत्वेन द्रढीकरणार्थमिति द्रष्टव्यम्। अत्र भावाद् भवनभनाथगुणैर्विचिन्तनीयमित्युक्त्या साम्प्रदायिको वस्तुनिर्देशप्रकारः सूच्यते। तद्यथा—भावादिति भावमाश्रित्य तत्तद्भावोपयोगीनि वस्तूनि विषयीकृत्येत्यर्थः। भवनभनाथगुणैः भवनानि मेषादिगृहाणि, भानि अश्विन्यादीनि नक्षत्राणि, भवननाथाः क्षितिजसितज्ञादयः, भनाथाः शिख्यादयः। तथाचोक्तं—

"शिखिशुक्रार्कचन्द्राराराहुजीवार्किचान्द्रयः।
अश्विन्याद्यृक्षनवकत्रितयीपतयः क्रमात् ॥"

---

१. 'लं विल' ग. पाठः. २. 'शफलं च' ख. पाठः.

इति। गुणाः गन्धरसरूपस्पर्शशब्दाख्या भूतगुणाः। "शिखिभूखपयोमरुद्गुणानां वशिनो भूमिसुतादयः क्रमेण" इत्युक्त्या ताराग्रहाणां वह्न्यम्ब्वात्मकत्वेन चन्द्रार्कयोश्च भूतगुणाः प्रदर्शिताः। तदीयानां राशीनां च त एव भूतगुणा निर्देश्याः। नक्षत्राणां तु नवर्क्षचरणात्मकराशिगतानाम् एकैकस्य चरणस्य पञ्चदशघटिकात्मकस्य चतुर्धा विभागे सति पादोनचतुर्नाडिकाप्रमाणाश्चत्वारः खण्डाः सम्भवन्ति। तेषु प्रथमतृतीययोः द्वितियचतुर्थयोश्च खण्डयोः क्रमोत्क्रमाभ्यां पृथिव्यादिपञ्चभूतानामुदया वेदितव्याः। तत्र पादोनचतुर्नाडिकाप्रमाणे खण्डे पञ्चदशघटिकापादात्मके पञ्चभिर्घटिकापादैर्गन्धादिपञ्चगुणयुक्तायाः पृथिव्या उदयः। तथा चतुर्भिर्घटिकापादै रसादिगुणचतुष्कयुक्तानामपामुदयः। तथा त्रिभिर्घटिकापादै रूपादिगुणत्रययुक्तस्याग्नेरुदयः। द्वाभ्यां घटिकापादाभ्यां स्पर्शशब्दाख्यगुणद्वययुक्तस्य वायोरुदयः। तथा तत्रान्त्येन घटिकापादेन शब्दैकगुणस्याकाशस्योदयः। एवं प्रथमतृतीयखण्डयोर्भूतोदयव्यवस्था। द्वितीयचतुर्थयोस्तु व्युत्क्रमेण। प्रथमेन घटिकापादेन आकाशस्योदय[1]ः, द्वितीयतृतीयाभ्यां वायो[2]ः (उदयः), चतुर्थपञ्चमषष्ठैरग्नेरुदय[3]ः, सप्तमाष्टमनवमदशमैरपामुदय[4]ः, एकादशद्वादशत्रयोदशचतुर्दशपञ्चदशैर्घटिकापादैः पृथिव्या उदयः। एवमुदीयमानाः भावाश्रयराशिनक्षत्रगताः तात्कालिका भूतगुणाः गुणशब्देन निर्दिष्टाः। एवं भवनभनाथगुणैः पञ्चभिरपि वस्तुविशेषा विचिन्तनीयाः। लोके खलु कर्मभोगविनाशसम्बन्धवशात् त्रिविधानि वस्तूनि। तानि प्रत्येकं धातुमूलजीवात्मकत्वेन त्रिविधानि भवनगतद्रेक्काणवशाद् द्रेक्काणगतनवांशकवशाच्च ज्ञातव्यानि। एवमेकस्मिन् राशौ नवविधा वस्तुजातयः सम्भवन्ति। कर्मधातवः कर्ममूलानि कर्मजीवाश्च प्रथमद्रेक्काणगतैरंश[5]कैर्ज्ञातव्याः। भोगधातवो भोगमूलानि भोगजीवाश्च द्वितीयद्रेक्काणगतैर[6]ंशकैर्ज्ञातव्याः। विनाशधातवो विनाशमूलानि विनाशजीवाश्च तृतीयद्रेक्काणगतै[7]स्त्रिभिर्नवांशकैर्ज्ञातव्याः।

---

१. 'यः पुनर्द्वाभ्यां वा', २. 'योः पुनस्त्रिभिर', ३. 'यः पुनश्चतुर्भिर', ४. 'यः पुनः पञ्चभिर्व', ५. 'णनवांशैः क्रमेण ज्ञात', ६. 'तैस्त्रिभिर्नवांशैर्ज्ञा', ७. 'तैरंश' क. पाठः.

एवं नवविधानां वस्तुजातीनां विशेषाश्च नवानामपि ग्रहाणां योगेक्षण-वशा(द्वि?द्भि)द्यन्ते एकाशीतिविधा वस्तुजातयः सम्भवेयुः तद्विशेषाश्च तात्कालिकभूतगुणैर्नासास्यदृक्त्वक्श्रवणानुमेयै राशिगतैर्नक्षत्रगतैश्च कुशाग्रधिया दैवज्ञेन निर्धार्य वक्तव्याः इत्यादिकमपि वस्तुनिर्देशविधानमत्र सूचितं वेदितव्यम् ॥ ३३ ॥

इति होराविवरणे राशिशीलाध्यायः षोडशः ॥

---

## अथ सप्तदशोऽध्यायः।

अथ ग्रहाणां दृष्टिफलानि प्रदर्श्यन्ते[2]। तत्र मेषादिचतुष्कस्थे चन्द्रे कुजाद्यैर्दृष्टे जातस्य फलविज्ञानार्थं शार्दूलविक्रीडि(तेना?तमा)ह —

चन्द्रे भूपबुधौ नृपो नृपगुणः स्तेनोऽधनश्चाजगे
निःस्वस्तेननृमान्यभूपधनिनः प्रेष्यः कुजाद्यैर्गवि।
नृस्थेऽयोव्यवहारिपार्थिवबुधाभीतन्तुवायाधनाः
स्वर्क्षे यौधकविज्ञभूमिपतयोऽयोजीविदृग्रोगिणौ ॥ १ ॥

इति। चन्द्रे अजगे कुजाद्यैर्दृष्टे भूपादयो भवन्तीत्यन्वयः। मेषगे चन्द्रे कुजेन दृष्टे भूपः बुधेन दृष्टे बुधः गुरुणा दृष्टे नृपः शुक्रेण दृष्टे नृपगुणः शनिना दृष्टे स्तेनः रविणा दृष्टे अधनश्च भवतीत्यर्थः। गवि वृषभराशिस्थे चन्द्रे कुजाद्यैर्दृष्टे निःस्वादयो भवन्ति। वृषभचन्द्रे कुजदृष्टे निःस्वः बुधदृष्टे स्तेनः गुरुदृष्टे नृमान्यः नृभिर्लोकैर्माननीयः। शुक्रदृष्टे भूपः शनिदृष्टे धनवान् रविदृष्टे प्रेष्यश्च भवति। नृस्थे मिथुनराशिस्थे चन्द्रे कुजाद्यैर्दृष्टे अयोव्यवहार्यादयः स्युः। मिथुनचन्द्रे कुजदृष्टे अयोव्यवहारी भवति लोहवणिग् भवति बुधदृष्टे पार्थिवः गुरुदृष्टे बुधः शुक्रदृष्टे अभीः रणनिर्भयः शनिदृष्टे तन्तुवायः सूचिकर्मकुशलः रविदृष्टे अधनः। स्वर्क्षे कर्कटकस्थे चन्द्रे कुजदृष्टे यौधः बुधदृष्टे कविः गुरुदृष्टे ज्ञः विद्वान् शुक्रदृष्टे भूमिपतिः शनिदृष्टे अयोजीवी अयसा जीवति। रविदृष्टे दृग्रोगी नेत्ररोगवान् ॥ १ ॥

---

१. 'त्रि' क. पाठः. २. 'लान्याह—' ख. पाठः.

अथ सिंहादिचतुष्कस्थे चन्द्रे बुधाद्यैर्दृष्टे जातस्य स्वरूपज्ञानं शार्दूलविक्रीडितेनाह

**ज्योतिर्ज्ञाढ्यनरेन्द्रनापितनृपक्ष्मेशा बुधाद्यैर्हरौ**
**तद्वद् भूपचमूपनैपुणयुताः षष्ठेऽशुभैः स्त्र्याश्रयाः ।**
**जूके भूपसुवर्णकारवणिजः शेषेक्षिते नैकृतिः**
**कीटे युग्मपिता नृपश्च रजको व्यङ्गोऽधनो भूपतिः ॥ २ ॥**

इति । हरौ चन्द्रे बुधाद्यैर्दृष्टे ज्योतिर्ज्ञादयो भवन्तीत्यन्वयः । सिंहस्थे चन्द्रे बुधदृष्टे ज्योतिर्ज्ञः ज्यौतिषिको भवति गुरुदृष्टे आढ्यः शुक्रदृष्टे नरेन्द्रः शनिदृष्टे नापितः श्मश्रुशिक्षानिपुणः रविदृष्टे नृपः राजा कुजदृष्टे क्ष्मेशः भूपतिः । षष्ठे कन्यायां चन्द्रे स्थिते सति तद्वद् बुधाद्यैरित्यर्थः । कन्यास्थे चन्द्रे बुधदृष्टे भूपः गुरुदृष्टे चमूपः शुक्रदृष्टे नैपुणयुतः कौशलयुक्तः सूक्ष्मेक्षिकायुक्तः अशुभैः सौरिसूर्यभौमैर्दृष्टे स्त्र्याश्रयाः स्त्रीजनाश्रया भवन्ति स्त्रीजनाश्रयजीविनो भवन्ति । जूके चन्द्रे स्थिते सति बुधाद्यैर्दृष्टे भूपादयः स्युः तौलिचन्द्रे बुधदृष्टे भूपः गुरुदृष्टे सुवर्णकारः शुक्रदृष्टे वणिग् वाणिज्यकर्ता शेषेक्षिते नैकृतिः शेषैस्त्रिभिरपि नैकृतिः कुत्सितकर्मरतः[1] । कीटे चन्द्रे स्थिते सति बुधाद्यैर्दृष्टे युग्मपित्रादयः स्युः बुधदृष्टे युग्मपिता पितृद्वययुक्तो भवेदित्यर्थः । गुरुदृष्टे नृपः शुक्रदृष्टे रजकः वस्त्ररञ्जकः शनिदृष्टे व्यङ्गः अङ्गहीनः रविदृष्टे अधनः भौमदृष्टे[2] वृश्चिकचन्द्रे भूपतिर्भवति ॥ २ ॥

अथ चापादिस्थे चन्द्रे बुधाद्यैर्दृष्टे जातस्य फलं शार्दूलविक्रीडितेनाह —

**ज्ञात्युर्वीशजनाश्रयाश्च तुरगे पापैः सदम्भाः शठा**
**अत्युर्वीशनरेन्द्रपण्डितधनिद्रव्योनभूपा मृगे ।**
**भूपो भूपसमोऽन्यदारनिरतः शेषैश्च कुम्भस्थिते**
**हास्यज्ञो नृपतिर्बुधश्च झषगे पापश्च पापेक्षिते ॥ ३ ॥**

इति । चन्द्रे तुरगे स्थिते बुधाद्यैर्दृष्टे ज्ञात्याश्रयादयः स्युः । चापचन्द्रे बुधदृष्टे ज्ञातीनामाश्रयः, गुरुदृष्टे उर्वीशस्याश्रयः, शुक्रदृष्टे जनस्याश्रयः, पापैर्दृष्टे दम्भयुक्ताः शठा भवन्ति । स्वकार्यैकपरः शठः ।

१. 'मेकरः की' क. पाठः. २. 'ष्टे भू' ग. पाठः.

परमार्थतो धर्मकरणस्वभावरहिता अपि वृत्त्यर्थं तल्लिङ्गधारिणः कपटयोगिनो डाम्भिका जायन्त इत्यर्थः । मृगे मकरस्थे चन्द्रे सति बुधाद्यैर्दृष्टे अत्युर्वीशादयः स्युः । बुधदृष्टे अत्युर्वीशः राजाधिराजः गुरुदृष्टे नरेन्द्रः शुक्रदृष्टे पण्डितः शनिदृष्टे धनी रविदृष्टे द्रव्यरहितः कुजदृष्टे भूपश्च भवति । चन्द्रे कुम्भे स्थिते बुधाद्यैर्दृष्टे भूपादयः स्युः । कुम्भे चन्द्रे बुधदृष्टे भूपः गुरुदृष्टे भूपसमः शुक्रदृष्टे अन्यदारनिरतः शेषैश्च भूपादय एव शनिदृष्टे भूपः रविदृष्टे भूपसमः कुजदृष्टे अन्यदारनिरतश्च भवति । झषगे चन्द्रे बुधाद्यैर्दृष्टे हास्यज्ञादयः स्युः । मीनचन्द्रे बुधदृष्टे हास्यज्ञः गुरुदृष्टे नृपतिः शुक्रदृष्टे बुधः पापैरीक्षिते पापश्च भवति । एवं चन्द्रस्य प्रदर्शितं प्रतिराशिवीक्षणफलं 'शिशिरकरसमागमेक्षणानामि'त्यादिना पूर्वमेवोक्तत्वाल्लग्नेष्वपि मेषादिषु यथाक्रमं योजयितव्यम् । ननु —

> "अपि खलकुलजाता मानवा राज्यभाजः
> किमुत नृपकुलोत्थाः प्रोक्तभूपालयोगैः ।
> नृपतिकुलसमुत्थाः पार्थिवा वक्ष्यमाणै-
> र्भवति हि नृपतुल्यस्तेष्वभूपालपुत्रः ॥"

इत्येवंरूपतया पूर्वोक्तेषु राजयोगेषु अप्रदर्शिता इदानीं चन्द्रस्य लग्नस्य वा यत्रकुत्रस्थितानामपि ग्रहाणां दर्शनमात्रेण राजाधिराजादियोगाश्च प्रदर्शिताः । कथमेतद् घटते । सत्यम् । साक्षाद्राजयोगाः पूर्वं राजयोगाध्याये प्रदर्शिताः । अत्र तु शिशिरकरसमागमेक्षणादिफलत्वेनोक्तस्य राजत्वस्य स्वस्वज्ञातिदेशपुराधिपत्येनापि सम्भवो द्रष्टव्यः ॥ ३ ॥

वीक्षणफलस्यापि तारतम्यं वक्तव्यमिति शार्दूलविक्रीडितेनाह —

**होरेशर्क्षदलाश्रितैः शुभकरो दृष्टः शशी तद्गत-**
**स्त्र्यंशो तत्पतिभिः सुहृद्भवनगैर्वा वीक्षितः शस्यते ।**
**यत् प्रोक्तं प्रतिराशिवीक्षणफलं तद् द्वादशांशे स्मृतं**
**सूर्याद्यैरवलोकितेऽपि शशिनि ज्ञेयं नवांशेष्वतः ॥ ४ ॥**

इति । होरेशर्क्षदलाश्रितैः दृष्टः तद्गतः शशी शुभकर इत्यन्वयः । होरेशो लग्नेशः तस्य ऋक्षदलं राश्यर्धं चन्द्रहोरा आदित्यहोरा

---

१. 'सूर्यद', २. 'स्युः तु' क. पाठः. ३. 'षे च' ग. पाठः.

वा तस्यां होरायां स्थितैर्ग्रहैर्दृष्टः तस्यामेव होरायां स्थितश्चन्द्रः शुभकरः। अन्यथा अशुभकरः। तथा त्र्यंशे स्थितश्चन्द्रः तत्पतिभिः सुहृद्भवनगैर्वीक्षितो वा शस्यते इत्यन्वयः। यस्मिन् द्रेक्काणे चन्द्रः स्थितः तस्य द्रेक्काणस्याधिपतिना सुहृद्भवनगेन वा वीक्षितोऽपि चन्द्रः शुभकर इत्यर्थः। अर्थाद् द्रेक्काणाधिपतिना अदृष्टः शत्रुक्षेत्रगतेन द्रेक्काणाधिपेन दृष्टो वा न शुभकरः इत्युक्तं भवति। अर्थादेव स्वभवनगतैर्दृष्टः शुभफल एव। यत् प्रतिराशिवीक्षणफलमुक्तं तद् द्वादशांशेऽपि स्मृतम्। अतो नवांशकेषु शशिनि सूर्याद्यैरवलोकिते च फलं ज्ञेयमित्यन्वयः। फलं वक्ष्यमाणमित्यर्थात् सिध्यति ॥ ४ ॥

अथ कुजशुक्रनवांशस्थस्य चन्द्रमसोऽर्कादिदृष्टस्य फलं वसन्ततिलकेनाह —

आरक्षको वधरुचिः कुशलो नियुद्धे
भूपोऽर्थवान् कलहकृत् क्षितिजांशसंस्थे।
मूर्खोन्यदाररतकाव्यविदः सितांशे
सत्काव्यकृत् सुखपरोऽन्यकलत्रगश्च ॥ ५ ॥

इति। शशिनि क्षितिजांशसंस्थे सूर्याद्यैरवलोकिते सति आरक्षकादयः स्युरित्यन्वयः। कुजांशस्थे चन्द्रे सूर्येण दृष्टे आरक्षकः रक्षाधिकृतः कुजेन दृष्टे वधरुचिः बुधेन दृष्टे नियुद्धे कुशलः, नियुद्धं बाहुयुद्धम्। गुरुणा दृष्टे भूपः शुक्रेण दृष्टे अर्थवान् मन्देन दृष्टे कलहकृद् भवति। चन्द्रे सितांशे स्थिते सति सूर्येण दृष्टे मूर्खो भवति। कुजेन दृष्टे अन्यदाररतः। बुधदृष्टे काव्यविद् भवति। वाद्यविद् इति केचित् पठन्ति। गुरुणा दृष्टे सत्काव्यकृत्। शुक्रेण दृष्टे सुखपरः। शनिदृष्टे अन्यकलत्रगश्च भवति ॥ ५ ॥

अथ बुधस्य नवांशस्थे चन्द्रे सूर्यादिदृष्टे फलं वसन्ततिलकेनाह —

बौधे तु रङ्गचरचोरकवीन्द्रमन्त्रि-
गेयज्ञशिल्पनिपुणाः शशिनि स्थितेंऽशे।
स्वांशेऽल्पगात्रधनलुब्धतपस्विमुख्य-
स्त्रीपोष्यकृत्यनिरताश्च निरीक्ष्यमाणे ॥ ६ ॥

---

१. 'नगतेन वी' ग. पाठः. २. 'ति। य' ख. ग. पाठः. ३. 'स्युः। कु' ग. पाठः. ४. 'द्धे बाहुयुद्धे कुशलः, गु' ख. पाठः. ५. 'त्। गु', ६. 'ह्नि' ग. पाठः.

इति । शशिनि बौधेंऽशे स्थिते सति सूर्याद्यैर्दृष्टे रङ्गचरादयः स्युरित्यन्वयः । बुधांशस्थे चन्द्रे रविदृष्टे रङ्गचरः कुजदृष्टे चोरः बुधदृष्टे कवीन्द्रः गुरुदृष्टे मन्त्री शुक्रदृष्टे गेयज्ञः गान्धर्वज्ञः शनिदृष्टे शिल्पनिपुणश्च भवति। स्वांशे कर्कटकांशे चन्द्रे सूर्याद्यैर्दृष्टे अल्पगात्रादयः स्युः । चन्द्रे कर्कटकांशे रविदृष्टे अल्पगात्रः कुजदृष्टे धनलुब्धः बुधदृष्टे तपस्वी गुरुदृष्टे मुख्यः शुक्रदृष्टे स्त्रीपोष्यः स्त्रीभिर्भरणीयः । शनिदृष्टे कृत्यनिरतश्च भवति । अत्र केचित् कुजदृष्टेऽल्पधनः बुधदृष्टे लुब्धः गुरुदृष्टे तपस्विमुख्य इति पठन्ति ॥ ६ ॥

अथ रविगुरुनवांशस्थे चन्द्रमसि सूर्यादिदृष्टे फलं प्रहर्षिण्याह —

सक्रोधो नरपतिसम्मतो निधीशः
सिंहांशे प्रभुरसुतोऽतिहिंस्रकर्मा ।
जैवेंऽशे प्रथितबलो रणोपदेष्टा
हास्यज्ञः सचिवविकामवृद्धशीलाः ॥ ७ ॥

इति । चन्द्रे सिंहांशे[1] सति सूर्याद्यैर्दृष्टे सक्रोधादयः स्युरिति सम्बन्धः । सिंहांशकस्थे चन्द्रे रविदृष्टे सक्रोधः कुजदृष्टे नरपतिसम्मतः बुधदृष्टे निधिपतिः गुरुदृष्टे प्रभुः शुक्रदृष्टे असुतः अपुत्रः शनिदृष्टे अतिहिंस्रकर्मा च भवति । शशिनि जैवेंऽशे स्थिते सति प्रथितबलादयः स्युः[2] । जीवांशकस्थे चन्द्रे रविदृष्टे प्रथितबलः कुजदृष्टे रणोपदेष्टा युद्धोपदेशशीलः बुधदृष्टे हास्यज्ञः प्रहसनज्ञः गुरुदृष्टे सचिवः शुक्रदृष्टे विकामः ब्रह्मचर्यरुचिः शनिदृष्टे वृद्धशीलश्च भवति । वृद्धशीलः ज्ञानवृद्धसमाचारः ॥ ७ ॥

अथ मृगकुम्भां(श)स्थे चन्द्रमसि सूर्यादिदृष्टे फलं शालिन्याह —

अल्पापत्यो दुःखितः सत्यपि स्वे
मानासक्तः कर्मणि स्वेऽनुरक्तः ।
दुष्टस्त्रीष्टः कृ(?)पणश्चार्किभागे
चन्द्रे भानौ तद्वदिन्द्वादिदृष्टे ॥ ८ ॥

१. 'शके स' ग. पाठः. २. 'स्युरिति सम्बन्धः । जी' क. ग. पाठः.

इति । चन्द्रे आर्किभागे स्थिते सति अल्पापत्यादयः स्युरिति सम्बन्धः । चन्द्रे मन्दांशस्थे सूर्येण दृष्टे अल्पापत्यः कुजेन दृष्टे स्वे धने सत्यपि दुःखितः बुधेन दृष्टे मानासक्तः गर्वयुक्तः गुरुदृष्टे स्वकर्मणि अनुरक्तः शुक्रदृष्टे दुष्टस्त्रीष्टः शनिदृष्टे कृपणश्च भवति । लग्नराशावुंदीयमानस्यांशकस्यापि एवं सूर्यादिग्रहदृष्ट्या आरक्षकादिफलं योज्यम् । किन्तु कर्कटनवांशकं विना चन्द्रदृष्टिरशुभेति 'उदयरविशशाङ्के'-त्यादिना दशाप्रकरणे 'भेन्द्वर्कास्पदपतिगे'त्यादिना कर्माजीवप्रकरणे च प्रदर्शितम् । सूर्याधिष्ठितराशिवशादपि लग्नचन्द्राधिष्ठितराशिवत् फलनिरूपणमिदानीं दृष्टिफलप्रकरणेऽपि प्रदर्शयति — भानौ तद्वदिन्द्वादिदृष्टे इति । भानौ इन्द्वादिदृष्टे तद्वत् फलं वाच्यम् । तद्वदिति यथा चन्द्रस्योक्तं तथेति । ततः क्षितिजांशस्थे भानौ इन्द्वादिभिर्दृष्टे आरक्षकादयः स्युः । कुजांशकस्थे सूर्ये चन्द्रेण दृष्टे आरक्षको भवति इति सम्बन्धः । कुजदृष्टे वधरुचिः बुधदृष्टे नियुद्धकुशलः गुरुदृष्टे भूपः शुक्रदृष्टे अर्थवान् शनिदृष्टे कलहकृद् भवति । एवं सर्वत्र बुधगुरुशुक्रशनैश्चरसूर्यचन्द्रांशकेषु स्थितस्य भानोः यथोक्तक्रमेण चन्द्रस्योक्तानि दृष्टिफलानि योजयितव्यानि । किन्तु सूर्यदृष्टत्वे यत् फलमुक्तं तदेव सूर्यस्य चन्द्रदृष्टत्वेऽपि योजनीयमिति विशेषः । ताराग्रहाणां दृष्टिफलम् उदयस्य चन्द्रस्य सूर्यस्य च तुल्यमेवेति द्रष्टव्यम् । लग्नस्य तु चन्द्रदृष्टिफलं सप्तमस्थस्य चन्द्रस्य भावफलेन तुल्यमिति पृथङ्नोक्तम् ॥ ८ ॥

उक्तानामंशकफलानां तारतम्यं वसन्ततिलकेनाह —

**वर्गोत्तमस्वपरगेषु शुभं यदुक्तं**
**तत्पुष्टमध्यलघुताशुभमुत्क्रमेण ।**
**वीर्यान्वितोंऽशकपतिर्निरुणद्धि पूर्वं**
**राशीक्षणस्य फलमंशफलं ददाति ॥ ९ ॥**

इति । ग्रहाणां यत् शुभं फलमुक्तं तस्य वर्गोत्तमस्वपरगेषु पुष्टमध्यलघुता वर्गोत्तमांशकगते ग्रहे फलं पुष्टं स्वांशगते मध्यं शत्र्वंश-

१. 'मृ । उद' ख. ग. पाठः.

गते फलं लघु अल्पं भवतीत्यर्थः । अशुभं फलम् उत्क्रमेण भवति । अशुभं फलं वर्गोत्तमांशगते अल्पं स्वांशगते अशुभफलं मध्यं शत्रुं-शगते अशुभफलं पुष्टम् । वीर्यान्वितः अंशकपतिः पूर्वं राशीक्षणस्य फलं निरुणद्धि । अंशफलं ददाति इत्यन्वयः । वीर्यान्वितः अंशकपतिः वीर्यवान् अंशकाधिपः राशीक्षणस्य फलं राशीश्वरे बलवत्यपि निरुणद्धि । 'नान्यो ग्रहः सदृशमन्यफलं हिनस्ती'ति न्यायोऽत्र नास्तीति द्योतयितुं निरुणद्धीत्युक्तम् । अपिच 'बलयोगात् फलमंशकर्क्षयोरि'ति पूर्वोक्तेनैव प्रकारेण वीर्यान्वितस्य अंशकपतेः फलदातृत्वे सिद्धेऽपि पुनः कथने राशीश्वरस्य अंशकाधिपस्य च बलसाम्येऽपि अंशकाधिपफलमेव वक्तव्यमिति द्योत्यते । तथा अंशकस्य न्यूनबलत्वेऽपि राशीश्वरस्य फलम् अंशाधिपफलं च तारतम्येन योजयितव्यमिति च द्योत्यते ॥ ९ ॥

इति होराविवरणे दृष्टिफलाध्यायः सप्तदशः ॥

---

## अथाष्टादशोऽध्यायः ।

ग्रहाणामितरेतरयोगफलानि राशियोगफलानि दृष्टिफलानि च प्रदर्श्येदानीं लग्नादि-भावयोगफलानि अष्टादशाध्याये प्रदर्श्यन्ते । तत्र प्रथममादित्यस्य लग्नगतस्य द्वितीयस्थस्य च फलप्रदर्शनार्थं मन्दाक्रान्तामाह[1] —

> शूरः स्तब्धो विकलनयनो निर्घृणोऽर्के तनुस्थे
> मेषे सस्वस्तिमिरनयनः सिंहसंस्थे निशान्धः ।
> नीचेऽन्धोऽस्वः शशिगृहगते बुद्बुदाक्षः पतङ्गे
> भूरिद्रव्यो नृपहृतधनो वक्त्ररोगी द्वितीये ॥ १ ॥

इति । अर्के तनुस्थे शूरः रणनिर्भयः स्तब्धः परैरचाल्यः विकलनयनः नेत्ररोगवान् निर्घृणश्च भवति इति सामान्यफलम् । विशेषफलमाह — मेषे सस्वः मेषेऽर्के लग्नस्थे[3] सस्वः सधनः । तिमिरनयनश्च भवति तिमिरयुक्तनेत्रः । सिंहस्थे निशान्धः रात्र्यन्धः । नीचे तुलायां

---

१. 'मं रवेर्भावफलानि क्रमेणाह'—, २. 'षा' ग. पाठः. ३. 'स्थे लग्ने नि' क. पाठः.

लग्नस्थेऽर्के अन्धः नयनरहितः अस्वः धनशून्यश्च भवति । पतङ्गे शशिगृहंगते लग्नस्थे बुद्बुदाक्षः पुष्पिताक्ष इत्यर्थः । द्वितीये पतङ्गे भूरिद्रव्यः नृपहृतधनः वक्त्ररोगी च भवति । द्वितीये लग्नाद् द्वितीयराशिस्थे पतङ्ग इत्यर्थः ॥ १ ॥

अथ लग्नात् तृतीयादिस्थस्यार्कस्य फलमौपच्छन्दसिकेनाह —

**मतिविक्रमवांस्तृतीयगेऽर्के**
**विसुखः पीडितमानसश्चतुर्थे ।**
**असुतो धनवर्जितस्त्रिकोणे**
**बलवाञ्छत्रुजितश्च शत्रुयाते ॥ २ ॥**

इति । अर्के तृतीयगे मतिविक्रमवान् भवति । मतिः शास्त्रबुद्धिः विक्रमस्त्वतिशक्तिता । अर्के चतुर्थे स्थिते सति विसुखः पीडितमानसश्च भवति सुखरहितः दुःखसहितश्च भवति । त्रिकोणे पञ्चमस्थेऽर्के असुतो धनवर्जितश्च असुतः सुताभावयुक्तः उत्पद्य नश्यतीत्यर्थः । अर्के शत्रुयाते बलवान् शत्रुजितश्च भवति शत्रुजितः जितशत्रुर्भवति । आहिताग्न्यादित्वात् परनिपातः । शत्रुजितः इत्युक्त्या अर्को बलहीनश्चेत् शत्रुभिः परिभूयते च इति द्योत्यते ॥ २ ॥

अथ सप्तमादिस्थेऽर्के जातस्य फलं वसन्ततिलकेनाह —

**स्त्रीभिर्गतः परिभवं मदगे पतङ्गे**
**स्वल्पात्मजो निधनगे विकलेक्षणश्च ।**
**धर्मे सुतार्थसुखभाक् श्रुतशौर्यभाक् खे**
**लाभे प्रभूतधनवान् पतितस्तु रिःफे ॥ ३ ॥**

इति । पतङ्गे मदगे स्त्रीभिः परिभवं गतः परिभवं प्राप्नोति । अर्के निधनगे स्वल्पात्मजः विकलेक्षणश्च भवति । धर्मे अर्के सुतार्थसुखभाक् सुतान् अर्थान् सुखानि च भजते । खे दशमे श्रुतशौर्यभाक् श्रुतं शास्त्रश्रवणम् । लाभे प्रभूतधनवान् पर्याप्तधनसहितः । रिःफे तु पतितः कर्मभ्रष्टो भवति ॥ ३ ॥

---

१. 'हस्थे बु' ग. पाठः. २. 'ते वि' क. पाठः ३. 'न्ती' क. ग. पाठः. ४. 'ने' ग. पाठः.

अथ लग्नादिस्थे चन्द्रे जातस्य फलं (शार्दूल)विक्रीडितेनाह—

**मूकोन्मत्तजडान्धनीचबधिरप्रेष्यः शशाङ्कोदये**
**स्वर्क्षाजोच्चगते धनी बहुसुतः सस्वः कुटुम्बी धने ।**
**हिंस्रो भ्रातृगते सुखे सतनये तत्प्रोक्तभावान्वितो**
**नैकारिर्मृदुकायवह्निमदनस्तीक्ष्णोऽलसश्चारिगे ॥**

इति । शशाङ्कोदये जातः मूकोन्मत्तजडान्धनीचबधिरप्रेष्यः भवति । मूकः वक्तुमशक्तो भवति । उन्मत्तो वा जडः प्रतिवचनाशक्तो वा भवति । अन्धः नेत्रहीनो वा स्यात् । नीचः अनुचितकर्मकरः स्याद्वा । बधिरः श्रोत्रहीनः स्याद्वा । प्रेष्यः भृत्यो वा स्याद् । राशियोगवशाद् विशेषमाह—स्वर्क्षे[1] कर्कटके मेषे उच्चे वृषभराशौ च स्थिते चन्द्रे लग्नगते धनी धनवान् भवति । चन्द्रे धने स्थिते बहुसुतः सस्वः धनवान् कुटुम्बी भरणीयजनयुक्तश्च भवति । भ्रातृगते चन्द्रे हिंस्रः हिंसाशीलो भवति । सतनये सुखे तत्प्रोक्तभावान्वितः चतुर्थे पञ्चमे च तत्रोक्तैर्भावैरन्वितः चतुर्थे भवनसुखमित्राद्यन्वितः पञ्चमे पुत्रबुद्धिसहित इति यावत् । अरिगे चन्द्रे नैकारिः बहुशत्रुः मृदुकायवह्निमदनः मृदुकायवह्निः मन्दकायाग्निः[2] मृदुमदनः मन्दकामश्च तीक्ष्णः तैक्ष्ण्ययुक्तः अलसः मन्दः ॥ ४ ॥

अथ सप्तमादिस्थानस्थे चन्द्रमसि जातस्य फलं शार्दूलविक्रीडितेनाह —

**ईर्ष्युः स्त्रीप्रमदो मदे बहुमतिर्व्याध्यर्दितश्चाष्टमे**
**सौभाग्यात्मजमित्रबन्धुधनभाग् धर्मस्थिते शीतगौ ।**
**निष्पत्तिं समुपैति धर्मधनधीशौर्यैर्युतः कर्मगे**
**ख्यातो भावगुणान्वितो भवगते क्षुद्रोऽङ्गहीनो व्यये ॥**

इति । मदे चन्द्रे ईर्ष्युः ईर्ष्याशीलः । स्त्रीप्रमदः[3] स्त्रीषु सक्तश्च भवति । तीव्रमद इति वा । अष्टमे चन्द्रे बहुमतिः बहुबुद्धिः व्याध्यर्दितश्च व्याधिपीडितश्च भवति । शीतगौ धर्मस्थिते सति सौभाग्यात्मजमित्रबन्धुधनभाग् भवति । मित्राणि सख्यादयः बन्धवो मातुलादयः । कर्मगे शीतगौ सति धर्मधनधीशौर्यैर्युतो निष्पत्तिं समुपैति

१. 'स्वर्क्षे मेषे उच्चे च' क. ग. पाठः. २. 'आग्निः' ख. ग. पाठः. ३. 'स्त्रीषु' क. पाठः.

परिणतिं प्राप्नोतीत्यर्थः। चन्द्रे भवगते ख्यातः भावगुणान्वितश्च एकादशभावोक्तगुणान्वितः। व्यये चन्द्रे क्षुद्रः निकृष्टः अङ्गहीनः चक्षुराद्यङ्गविकलः॥ ५॥

अथ ल्नादिस्थे कुजे जातस्य फलं वसन्ततिलकेनाह—

**लग्ने कुजे क्षततनुर्धनगे कदन्नो**
**धर्मेऽघवान् दिनकरप्रतिमोऽन्यसंस्थः।**
**विद्वान् धनी प्रबलपण्डितमन्त्र्यशत्रु-**
**नर्मज्ञविश्रुतगुणाः परतोऽर्कवज्ज्ञे॥ ६॥**

इति। कुजे लग्नगते क्षततनुः निजागन्तुकव्रणयुक्तशरीरः। कुजे धनगे कदन्नः कुत्सितान्नः। कुजे धर्मस्थिते अघवान् दुष्कर्मयुक्तः। अन्यसंस्थः दिनकरप्रतिमः। उक्तान्येषु लग्नधनधर्मेभ्योऽन्येषु भावेषु स्थितः दिनकरप्रतिमः आदित्योक्तसमानफलः। उत्तरार्धेन बुधस्य फलमाह—ज्ञे लग्नादिषु स्थिते क्रमेण विद्वदादयः भवन्ति। लग्ने बुधे विद्वान् द्वितीये धनी तृतीये प्रबलः चतुर्थे पण्डितः पञ्चमे मन्त्री सचिवः षष्ठे अशत्रुः शत्रुरहितः सप्तमे नर्मज्ञः नर्मकुशलः अष्टमे विश्रुतगुणः। परतः अर्कवत् परतः नवमदशमैकादशद्वादशेषु अर्कवद् आदित्योक्तसमानफलः॥ ६॥

अथ जीवे लग्नादिस्थे जातस्य फलमिन्द्रवज्रयाह—

**विद्वान् सुवाक्यः कृपणः सुखी च**
**धीमानशत्रुः पितृतोऽधिकश्च।**
**नीचस्तपस्वी सधनः सलाभः**
**खलश्च जीवे क्रमशो विलग्नात्॥ ७॥**

इति। जीवे विलग्नात् प्रभृति भावेषु स्थिते सति क्रमशो विद्वदादयो भवन्ति। जीवे लग्ने स्थिते सति जातो विद्वान् भवति। धने सुवाक्यः शोभनवाक्यः। भ्रातृस्थे कृपणः सद्भावरहितः निर्दय-

१. 'तांशनः। कु', २. 'नस्थाने सु' क. ग. पाठः.

त्वादियुक्तः । सुखस्थे सुखी । धीस्थे धीमान् । शत्रुस्थे अशत्रुः अजातशत्रुः । सप्तमे पितृतोऽधिकः पितृभ्योऽधिकः स्वकुले पूर्वजातेभ्यः स्वगुणैरधिको भवतीत्यर्थः । अष्टमे नीचः असम्मतः । नवमे तपस्वी । दशमे सधनः । लाभे[1] स्थिते सलाभः अपरिमितायसहितः । द्वादशस्थे खलश्च खलो निस्सङ्गः ॥ ७ ॥

शुक्रस्य फलमाह —

स्मरनिपुणः सुखवांश्च विलग्ने
प्रियकलहोऽस्तगते सुरतेप्सुः ।
तनयगते सुखितो भृगुपुत्रे
गुरुवदतोऽन्यगृहे सधनोऽन्त्ये ॥ ८ ॥

इति । भृगुपुत्रे विलग्ने स्मरनिपुणः कामनिपुणो भवति सुखवांश्च भवति । भृगुपुत्रे अस्तगते प्रियकलहः सुरतेप्सुश्च भवति । भृगुपुत्रे तनयगते सुखितः सञ्जातसुखः । अतोऽन्यगृहे गुरुवत् । अन्त्ये द्वादशे सधनश्च भवति ॥ ८ ॥

अथ लग्नादिस्थस्य शनेः फलप्रदर्शनार्थं शिखरिणीमाह —

अदृष्टार्थो रोगी मदनवशगोऽत्यन्तमलिनः
शिशुत्वे पीडार्तः सवितृसुतलग्नेऽत्यलसवाक् ।
गुरुस्वर्क्षोच्चस्थे नृपतिसदृशो ग्रामपुरपः
सुविद्वांश्चार्वङ्गो दिनकरसमोऽन्यत्र कथितः ॥ ९ ॥

इति । सवितृसुतलग्ने जातः अदृष्टार्थो भवति अदृष्टार्थो नित्यदरिद्रः रोगी मदनवशगश्च भवति । अत्यन्तमलिनः अत्यन्तनीचः । शिशुत्वे पीडार्त्तः शैशवे एषे[2] पीडार्त्तः । अत्यलसवाग् अतिमन्दवचनः । अदृष्टार्थत्वेनात्यन्तमलिनत्वेन च तस्करत्वं व्यज्यते साक्षादनुक्तिः तारतम्यनिरूपणायेति द्रष्टव्यम् । तथा शनेश्चेष्टाबलादियोगे सति पारत्रिकप्रयोजन इति च अदृष्टार्थशब्देन द्योत्यते । तथाच अदृष्टार्थः मुमुक्षुरित्यर्थः रोगी रोगोऽपि मोक्षहेतुरित्यर्थः ।

---

१. 'लाभस्थे स' ग. पाठः. २. 'व' क. ख. पाठः.

"विवेकिनो भवन् व्याधिर्विशुद्ध इव देशिकः ।
विषयेषु विरागाय विषमाक्षे च भक्तये ॥"

मदनवशगः मदनो वशगो यस्य जितेन्द्रिय इत्यर्थः । अत्यन्तमलिनः तपोभिः कर्शिताङ्गः । शिशुत्वे पीडार्तः अत्यलसवाक् शास्त्रार्थवादी इति । एवं बलिनि शनौ योज्यम् । बलहीने पूर्वोक्तमेव फलं वाच्यम् । राशिवशाद् विशेषमाह — सवितृसुते गुरुस्वर्क्षोच्चस्थे गुरुक्षेत्रयोः स्वक्षेत्रयोरुच्चे च स्थिते सति नृपतिसदृशः ग्रामपुरपश्च तथा सुविद्वान् चार्वङ्गश्च बलतारतम्यवशाद् भवति । अन्यत्र दिनकरसमः कथितः लग्नादन्येषु धनादिभावेषु आदित्योक्तसमानफलः ॥ ९ ॥

एवं लग्नादिद्वादशभावेषु ग्रहयोगवशात् फलानि प्रदर्श्येदानीं[1] तत्र स्थितानां सर्वेषां ग्रहाणां फलविशेषप्रदर्शनार्थं मालिनीमाह —

सुहृदरिपरकीयस्वर्क्षतुङ्गस्थितानां
फलमनुपरिचिन्त्यं लग्नदेहादिभावैः ।
समुपचयविपत्ती सौम्यपापेषु सत्यः
कथयति विपरीतं रिःफषष्ठाष्टमेषु ॥ १० ॥

इति । लग्नदेहादिभावैः सुहृदरिपरकीयस्वर्क्षतुङ्गस्थितानां फलमनुपरिचिन्त्यमित्यन्वयः । लग्नदेहादिभावैः लग्नं देहः तदादिभिः धनसहजप्रभृतिभावैरित्यर्थः । सुहृद् बन्धुः अरिः शत्रुः परकीय उदासीनः तेषामात्मनश्च क्षेत्रेषु तुङ्गे च स्थितानां ग्रहाणां फलानां यथोक्तं फलम् अनुक्रमेण वक्ष्यमाणस्वरूपेण परिचिन्त्यं परितश्चिन्त्यम् । समुपचयविपत्ती सौम्यपापेषु सत्यः कथयति । सत्याचार्यो देहादिभावानां समुपचयविपत्ती यथाक्रमं सौम्यपापेषु कथयति । (त ? य)स्मिन् भावे सौम्यः शुभग्रहः स्थितः तस्य भावस्य वृद्धिः, यत्र पापग्रहस्तस्य हानिरिति । रिःफषष्ठाष्टमेषु किन्तु विपरीतं कथयति रिःफषष्ठाष्टमेषु स्थितः शुभग्रहो व्ययारिमरणानां क्रमेण हानिं करोति । पापग्रहो वृद्धिं करोतीत्यर्थः । लग्नदेहादिभावैरित्यत्र लग्नदेहादि-

---

१. 'नीं ग्रहाश्रितराश्यंशकवशेन फलतारतम्यं दर्शयति —' ख. ग. पाठः.

भिर्भावैः यो भावो निरूप्यते तं भावं लग्नं कृत्वा तस्य स्वरूपं देहत्वेन चिन्तनीयं, तस्माद् द्वितीयं तस्य भावस्य धनत्वेन, तृतीयं सहायत्वेन, चतुर्थमधिकरणत्वेन, पञ्चमं तद्भावोद्भववस्तुत्वेन, षष्ठं तन्नाशहेतुत्वेन, सप्तमं तत्सहचरत्वेन, अष्टमं तदायुष्ट्वेन, नवमं तद्भाग्यत्वेन, दशमं तद्व्यापारत्वेन, एकादशं तल्लाभत्वेन, द्वादशं तद्व्ययत्वेन च विचिन्तनीयमित्यर्थः । तद्यथा — तत्र धनभावनिरूपणप्रकारस्तावत् प्रदर्श्यते — धनस्य द्वितीयो राशिर्लग्नम् अतो द्वितीयराशिना धनशरीरं ग्रहयोगेक्षणाधिपत्यवशेन पुष्टमध्यकृशत्वादियुक्तं सम्यग् विमृश्य वक्तव्यं ततो द्वितीयेन धनस्य धनं धनशरीरपोषको रक्षकवर्गः । ततस्तृतीयेन तत्सहाया अधमधनार्धधनातिधनस्वरूपाः गोमहिषतुरगादयः मणिहिरण्यादयः मित्रक्षेत्रविद्यादयश्च विचिन्तनीयाः । धनशब्देन देहवृत्तिसाधनं वस्तु कथ्यते । तच्च शालिव्रीहितिलमुद्गकार्पासादिकं धान्यजातं तत्सहचराणि गोमहिषगजतुरगादिजीवधनानि क्षणभङ्गुरत्वेन अधमधनानि तथा मणिहिरण्यादयोऽपि देहवृत्तिसाधनद्रव्यसम्पादनोपकरणत्वेन क्षीयमाणत्वादर्धधनानि तथा मित्रक्षेत्रविद्यादयोऽतिधनानि यथा क्षीरस्य पयो मित्रं निजयोगेन क्षीरवृद्धिं कुरुते क्षयावस्थायां पुनः क्षीरक्षयात् पूर्वमेव संक्षीयते तादृशं मित्रमतिधनमाहुः क्षेत्रं च प्रतिवर्षं धान्योत्पादकत्वाद् अतिधनं विद्याधनस्य सर्वधनाधिकत्वं प्रसिद्धम् ।

"अधमं जीवधनं स्याद्धनमर्धधनं धनं विदुर्धान्यम् ।
अतिधनमार्याः प्राहुः क्षेत्रं मित्रं च विद्यां च ॥"

एवं खलु वृद्धा ब्रुवते । तथा धनभावाच्चतुर्थेन धनस्याधिकरणभूता दायादापवरकपेटकादयो वक्तव्याः । तथा धनात् पञ्चमेन धनजनिताः कोशदण्डशत्र्वादयः । धनात् खलु भण्डारसम्भवः तथा धनादेव सैन्यलब्धिः धनादेव शत्रवोऽपि जायन्ते । तस्मात् तेषां धनजनितत्वम् । तथा धनस्य षष्ठस्थानेन धनस्य परिपन्थिनः प्रमादभोगकलत्रमदराजचोरादयो वक्तव्याः । तथा धनात् सप्तमस्थानेन धन-

---

१. 'स्याद' क. ग. पाठः. २. 'द्याश्च ॥' ग. पाठः.

सहचारिणो अभ्यङ्गान्नपानादयो भोगविशेषा वक्तव्याः । धनाद्दष्टमभावेन धनस्यायुर्वृद्धिक्षयौ वक्तव्यौ तौ च धर्माधर्मनिमित्ताविति तद्विशेषोऽष्टमेन निर्देष्टव्यः । तथा नवमेन धनस्य भाग्यभूता आज्ञाभिमानोत्साहादयः परिचिन्त्याः । तथा धनाद् दशमेन धनव्यापारभूता लाभविशेषा वक्तव्याः । तथा धनादेकादशभावेन धनस्य निजोत्पत्त्युपकारिणां कर्मकरवेतनकर्षणवापनसेचनादिकर्मकरवृत्तिद्रव्यबीजविशेषाणां स्वरूपाणि वक्तव्यानि । तथा धनाद् द्वादशभावेन धनवतो जन्मलग्नेन धनस्य व्ययः भुक्तिविपक्तिजनितः परिचिन्तनीयः । एवं धनभावस्य लग्नत्वेन परिकल्पितस्य लग्नादिभिर्द्वादशभिर्देहादिस्वरूपैर्भावैर्लग्नदेहादिभावैः सुहृदरिपरकीयस्वर्क्षतुङ्गस्थितानां ग्रहाणां फलानि यथावन्निरूप्य जन्मिनो धनस्वरूपं वक्तव्यम् । नन्विदानीं धनं प्रति बहुविधा विशेषाः प्रदर्शिताः । धनरहिताश्च बहवो जना दृश्यन्ते । तेषां कथमिदं धनलक्षणकथनं घटते । मन्द! मैवम् । घटत एवैतत् । कथमिति चेद् जन्मिनः पुरुषस्य हि जातकलक्षणं निरूप्यते तस्य लग्नराशि[2]ग्रहस्थितिवशेन धनसहितत्वं वा धनरहितत्वं वा सम्यग् आयव्ययकरणेन विनिश्चित्य धनसहितत्वमस्ति चेद् एतानि लक्षणानि योजयितव्यानि । आयव्ययकरणं चोक्तमुमामहेश्वरसंवादे—

> "सर्वेषां वारतारातिथिखगभनवांशार्कभागत्रिभागै-
> श्चन्द्रर्क्षाद्बोदयर्क्षादपि बलवशतः स्वर्क्षसङ्ख्यावशाच्च ।
> सम्पिण्ड्यात् कर्मभोगं विलयमिति पृथक् स्वेष्यलिप्ताहतं तत्
> स्वद्रव्यावाप्तिभुक्तिक्षयपरिमितयः सम्भवेयुर्ग्रहाणाम् ॥"

इति । एवमुक्तप्रकारेण आयव्ययकरणेन सर्वेषामपि भावानां सम्भवासम्भवप्रमाणानि गुरुकुलक्लिष्टैः सम्प्रदायविद्भिः दैवज्ञैः सम्यगाराधितसूर्यदेवानुग्रहानवग्रहप्रतिभाप्रभावैरवबोद्धव्यानि ॥ १० ॥

निर्देष्टव्येषु शुभाशुभेषु तारतम्यक्रमम[3]माह—

**स्वोच्चत्रिकोणस्वसुहृच्छत्रुनीचगृहार्कगैः ।**
**शुभं सम्पूर्णपादोनदलपादाल्पनिष्फलम् ॥ ११ ॥**

१. 'भादयो व' क. पाठः. २. 'शिस्थि' ग. पाठः. ३. 'ममनुशुभमा' क. पाठः.

इति । स्वोच्चे शुभं सम्पूर्णम् अशुभं निष्फलं, स्वत्रिकोणे पादोनं शुभम् अशुभं पादमात्रं, स्वक्षेत्रे शुभमशुभं चार्धं, सुहृत्क्षेत्रे शुभं पादमात्रम् अशुभं पादत्रितयं, शत्रुक्षेत्रे शुभमल्पम् अशुभमनल्पं, नीचक्षेत्रे मौढ्ये च शुभं निष्फलम् अशुभं सम्पूर्णम् इत्युक्तक्रमेण शुभफलानामशुभफलानां च पौष्कल्यं वैकल्यं वा वक्तव्यमित्यर्थः । एवं योगफलेषु स्थानफलेषु दृष्टिफलेषु च ग्रहाणां स्वोच्चत्रिकोणादिनिमित्तस्तारतम्यक्रमोऽनुसन्धेयः । भावफलेषु तु ग्रहाणां स्वोच्चादिनिमित्तः तात्कालिकभावांशकनिमित्तश्च[1] तारतम्यक्रमो विचिन्तनीयः । भावस्थितिनिमित्तं फलं हि भावफलं भावाश्च द्वादशापि द्वादशसु राशिषु जननकालोदीयमानांशकसङ्ख्यासमानसङ्ख्ये अंशके वर्तन्ते । तस्मात् पूर्वे पञ्चदशे भागे भावारम्भः तस्योपरितने पञ्चदशे भागे भावविरामः । एवं सति राशिमध्यादन्यत्र भावा राशिद्वयसम्बन्धिनो वर्तेरन् । तस्माद् भावारम्भकाले ग्रहाणां भावफलारम्भः ग्रहाणां भावसमांशकत्वे भावफलं सम्पूर्णम् । तस्माद्ध्रासक्रमेण भावावसाने ग्रहाणां भावफलाभावः । तथोक्तं श्रीपतिना —

"वदन्ति भावैक्यदलं हि सन्धिं
तत्र स्थितः स्यादफलो[2] ग्रहेन्द्रः ।
भावप्रवृत्तौ हि फलप्रवृत्तिः
पूर्णं फलं भावसमांशकेषु ॥
ह्रासक्रमाद् भावविरामकाले
फलस्य नाशः कथितो मुनीन्द्रैः ।"

इति । एवं भावादौ भावमध्ये भावान्ते च तदन्तरालयोश्च भावफलानां तारतम्यं वेदितव्यम् इत्यनुक्तमपि युक्तिवशादवगम्यते इत्याचार्येण ग्रन्थबाहुल्यभयान्नोक्तम् ॥ ११ ॥

इति होराविवरणे भावाध्यायोऽष्टादशः ॥ १८ ॥

---

१. 'न' ग. पाठः. २. 'व' क. ख. पाठः ३. 'ब' ग. पाठः.

## अथ एकोनविंशोऽध्यायः ।

अथ ग्रहाणां षड्वर्गयोगफलान्याह । तत्र प्रथमं राशिफलेषु वक्तव्येषु केवलं मेषादिराशिफलानां पूर्वं 'वृत्तातास्रहारि'त्यादिभिः प्रदर्शितत्वादिदानीं स्वक्षेत्रत्वादिगुणविशिष्टराशिफलानि प्रदर्श्यन्ते —

**कुलसमकुलमुख्यबन्धुपूज्या**
**धनिसुखिभोगिनृपाः स्वभैकवृद्ध्या ।**
**परविभवसुहृत्स्वबन्धुपोष्या**
**गणपबलेशनृपाश्च मित्रभेषु ॥ १ ॥**

इति । स्वभैकवृद्ध्या कुलसमकुलमुख्यबन्धुपूज्या धनिसुखिभोगिनृपाश्च जायन्ते इत्यन्वयः । स्वभैकवृद्ध्या स्वभानामेकैकवृद्ध्या कुलसमादयः स्युः । एकेन ग्रहेण स्वक्षेत्रस्थेन जातः कुलसमो भवति द्वाभ्यां कुलमुख्यः त्रिभिर्बन्धुपूज्यः चतुर्भिर्धनी पञ्चभिः सुखी षड्भिः स्वक्षेत्रस्थैः भोगी भोगयुक्तो जायते । सप्तभिरपि ग्रहैः स्वक्षेत्रस्थैः नृपो जायत इत्यर्थः । तथा मित्रभेषु क्रमेण परविभवसुहृत्स्वबन्धुपोष्याः गणपबलेशनृपाश्च भवन्ति एकेन ग्रहेण मित्रक्षेत्रगतेन परविभवपोष्यः परस्य विभवेन पोषणीयः द्वाभ्यां मित्रगृहस्थाभ्यां सुहृत्पोष्यः सौहार्दयुक्तेन येनकेनचित् पोष्य इत्यर्थः । त्रिभिः स्वेन आत्मीयेन पोष्यो भवति । आत्मात्मीयज्ञातिधनवाची स्वशब्दः । चतुर्भिर्बन्धुपोष्यो भवति बन्धुभिर्मातुलादिभिः पोष्यः । पञ्चभिर्गणानां पतिः । षड्भिर्बलेशः सेनापतिः । सप्तभिर्ग्रहैरपि बन्धुक्षेत्रगतैर्नृपो भवतीत्यर्थः । अत्रोभयत्रापि एकेन स्वक्षेत्रगतेन कुलसमः द्वाभ्यां कुलसमः कुलमुख्यश्च त्रिभिः कुलसमः कुलमुख्यः बन्धुपूज्यश्च इत्यादि । तथा एकेन बन्धुक्षेत्रगतेन परविभवपोष्यः द्वाभ्यां परविभवपोष्यः सुहृत्पोष्यश्च इत्यादि केचित् पठन्ति ॥ १ ॥

स्वोच्चस्थस्यैकस्यापि फलं मालिन्याह —

**जनयति नृपमेकोऽप्युच्चगो मित्रदृष्टः**
**प्रचुरधनसमेतं मित्रयोगाच्च सिद्धम् ।**

---

१. 'ति सम्बन्धः ।' क. ग. पाठः.

**विवसुविसुखमूढव्याधिता बन्धुतप्ता**
**वधदुरितसमेताः शत्रुनिम्नर्क्षगेषु ॥ २ ॥**

इति । एकोऽपि ग्रहः उच्चगः परमोच्चगतः मित्रदृष्टः नृपं जनयति । अपीति सम्भावनायाम् । उच्चगतेषु वक्रादिषु ग्रहेषु लग्नस्य नियतत्वे सति पूर्वं राजयोगाः प्रदर्शिताः । इदानीमुच्चगतग्रहस्य लग्नस्य चानियतत्वेऽपि मित्रदृष्टत्वेन कदाचिद् राजा भवेद् इत्यपिशब्देन द्योत्यते । मित्रयोगात् प्रचुरधनसमेतं जनयति । अथवा उच्चगं एकोऽपि ग्रहः मित्रदृष्टः प्रचुरधनसमेतं नृपं जनयति । तथा मित्रयोगाच्च प्रचुरधनसमेतं नृपं जनयतीति सम्बन्धः । सिद्धमिति प्रसिद्धं बहुषु शास्त्रेषु प्रसिद्धमित्यर्थः । अत्र केचित् मित्रयोगात् सिद्धं नृपं कस्यापि मित्रभूतस्य पुरुषस्य योगाद् योग उपायः सिद्धं साधितं राजानं जनयति इति योजयन्ति । तथा शत्रुनिम्नर्क्षगेषु विवसुविसुखमूढव्याधिताः बन्धुतप्ताः वधदुरितसमेता भवन्ति । एकेन ग्रहेण शत्रुनीचर्क्षगतेन विवसुः धनरहितो भवति द्वाभ्यां विसुखः त्रिभिः शत्रुनीचगतैर्मूढ इतिकर्तव्यतारहितः चतुर्भिर्व्याधितः पञ्चभिर्बन्धुतप्तः बन्धुविषयपरितापयुक्तः षड्भिः वधसमेतः ताडनादिभाजनभूतः सप्तभिर्ग्रहैः शत्रुगृहस्थैर्नीचगृहस्थैर्वा जाता दुरितसमेता महापातकयुक्ता भवन्ति ॥ २ ॥

अथ कुम्भलग्नजातस्याशुभफलप्रदर्शनार्थमुपजातिकामाह —

**न कुम्भलग्नं शुभमाह सत्यो**
**न भागभेदाद् यवना वदन्ति ।**
**कस्यांशभेदो न तथास्ति राशे-**
**रतिप्रसङ्गस्त्विति विष्णुगुप्तः ॥ ३ ॥**

इति । सत्यः कुम्भलग्नं न शुभमाह कुम्भस्य रिक्तकुम्भधरत्वाद् दुःखस्वरूपस्य मृत्युकारकस्य मन्दस्य मूलक्षेत्रत्वाच्च । तथा कल्पादौ मीनान्त्यस्थितेषु सर्वेषु ग्रहेषु मीनान्त्यलग्नराश्यष्टकवर्गस्य शोधनकर्मणि शोध्यैकाक्षशालित्वाच्च कुम्भलग्नमशुभमिति सत्याचार्यो वदति । तत्र पक्षान्तरमाह—यवनास्तथा न वदन्ति किन्तु भागभेदाद् वदन्ति

१. 'गतः ए' ग. पाठः. २. 'च इति' क. पाठः. ३. 'भं स' ख. ग. पाठः.

कुम्भद्वादशांशो न शुभ इति वदन्ति च अतः कुम्भद्वादशांशो लग्नगतश्चेन्न शुभ इति यवनानां मतम्। विष्णुगुप्तस्य मतमाह — यथा — कस्य राशेरंशभेदो नास्ति सर्वत्रापि राशौ कुम्भद्वादशांशकं सम्भवतीत्यर्थः। तथा अतिप्रसङ्गः सर्वेषां राशीनां कुम्भाख्यो द्वादशांशो वर्ज्यः स्याद् इति यवनमतस्य अतिप्रसङ्गाख्यो दोषोऽस्ति अतः सत्याचार्यपक्ष एव श्रेयान् इति विष्णुगुप्तः ॥ ३ ॥

इति ग्रहाणां राशियोगफलान्युक्त्वा होरायोगफलं वसन्ततिलकेनाह —

**यातेष्वसत्स्वसमभेषु दिनेशहोरां**
**ख्यातो महोद्यमबलार्थयुतोऽतितेजाः।**
**चान्द्रीं शुभेषु युजि मार्दवकान्तिसौख्य-**
**सौभाग्यधीमधुरवाक्ययुतः प्रजातः ॥ ४ ॥**

इति। असत्सु असमभेषु दिनेशहोरां यातेषु जातः ख्यातः महोद्यमबलार्थयुतः अतितेजाश्च भवतीत्यन्वयः। असत्सु अर्ककुजमन्देषु असमभेषु मेषमिथुनाद्योजराशिषु तथा शुभेषु युजि चान्द्रीं होरां यातेषु प्रजातः मार्दवकान्तिसौख्यसौभाग्यधीमधुरवाक्ययुतः भवति। शुभेषु चन्द्रबुधगुरुशुक्रेषु युजि वृषभकुलीरादिषु युग्मराशिषु॥ ४ ॥

पुनरपि होरागतफलमिन्द्रवज्रयाह —

**तास्वेव होरास्वपरर्क्षगासु**
**ज्ञेया नराः पूर्वगुणेषु मध्याः।**
**व्यत्यस्तहोराभवनस्थितेषु**
**मर्त्या भवन्त्युक्तगुणैर्विहीनाः ॥ ५ ॥**

इति। अपरर्क्षगासु तास्वेव होरासु जाताः पूर्वगुणेषु मध्याः ज्ञेयाः। अपरर्क्षगासु ओजराशिषु चन्द्रहोरां गतेषु अथवा युग्मराशिषु सूर्यहोरां गतेषु शुभेष्वशुभेषु वा जाता इत्यर्थः। शुभेषु अशुभेषु च व्यत्यस्तहोराभवनस्थितेषु जाता मर्त्या उक्तगुणैर्विहीना भवन्तीत्यन्वयः। व्यत्यस्तहोराभवनस्थितेषु ओजराशौ सूर्यहोरां गतेषु शुभेषु युग्मराशौ चन्द्रहोरां गतेषु पापेषु इत्यर्थः ॥ ५ ॥

---

१. 'शः स', २. 'भोगसौ', ३., ४., ५., ६. 'ताः', ७. 'न्ति' क. पाठः.

द्रेक्काणफलं वसन्ततिलकेनाह —

**कल्याणरूपगुणमात्मसुहृद्दृगाणे**
**चन्द्रोऽन्यगस्तदधिनाथगुणं करोति ।**
**व्यालोद्यदायुधचतुश्चरणाण्डजेषु**
**तीक्ष्णोऽतिहिंस्रगुरुतल्परतोऽटनश्च ॥ ६ ॥**

इति । आत्मसुहृद्दृगाणे स्थितश्चन्द्रः कल्याणरूपगुणं करोति आत्मद्रेक्काणे सुहृद्द्रेक्काणे च स्थितश्चन्द्रः कल्याणरूपगुणं करोति । अन्यग उदासीनः शत्रुद्रेक्काणगतः । तदधिनाथगुणं द्रेक्काणनाथसदृशगुणं द्रेक्काणनाथ उदासीनश्चेन्मध्यमरूपगुणं करोति शत्रुश्चेद् रूपगुणहीनं करोति । तथा व्यालोद्यदायुधचतुश्चरणाण्डजेषु द्रेक्काणेषु स्थिते चन्द्रे जातः क्रमेण तीक्ष्णः अतिहिंस्रः गुरुतल्परतः अटनश्च भवति । सर्पद्रेक्काणस्थे (चन्द्रे) जातः तीक्ष्णो भवति । उद्यदायुधद्रेक्काणस्थे चन्द्रे जातः अतिहिंस्रः, चतुष्पाद्द्रेक्काणस्थे गुरुतल्परतः, पक्षिद्रेक्काणस्थे अटनश्च भवति इति चन्द्रस्य द्रेक्काणफलमुक्तम् । पूर्वोक्तातिदेशेन लग्नद्रेक्काणफलमपि एवमिति द्रष्टव्यम् ॥ ६ ॥

अथ नवांशकफलं शालिन्याह —

**स्तेनो भोक्ता पण्डिताढ्यौ नरेन्द्रः**
**क्लीबः शूरो विष्टिकृद् दासवृत्तिः ।**
**पापो हिंस्रोऽभीश्च वर्गोत्तमांशे-**
**ष्वेषामीशा राशिवद् द्वादशांशे ॥ ७ ॥**

इति । मेषादिनवांशस्थिते चन्द्रे स्तेनादयो भवन्ति । मेषांशे स्तेनः वृषभांशे भोगशीलः मिथुनांशे पण्डितः कुलीरांशे आढ्यः सिंहांशे नरेन्द्रः कन्यांशे क्लीबः षण्डः तुलांशे शूरः वृश्चिकांशे विष्टिकृद् भारवाही चापांशे दासवृत्तिः दास्येन वृत्तिं करोति मकरांशे पापः कुम्भांशे हिंस्रः हिंसनशीलः मीनांशे अभीश्च शूरः । अधीरिति वा पाठः । वर्गोत्तमांशेषु एषामीशा भवन्ति मेषे वर्गोत्तमांशे चोरा-

---

१. 'वन्धुद्रे', २. 'णे जा' क. ग. पाठः.

धिपतिः वृषभे वर्गोत्तमांशे भोगिनां प्रधानो भवतीत्यादि । द्वादशांशकफलमाह — राशिवद् द्वादशांशे इति । द्वादशांशे राशिवद् राशीनां पूर्वमुक्तमेव फलं वक्तव्यम् ॥ ७ ॥

अथ भौमसौरयोः स्वत्रिंशांशस्थयोः फलं वसन्ततिलकेनाह —

जायान्वितो बलविभूषणसत्त्वयुक्त-
स्तेजोतिसाहसयुतश्च कुजे स्वभागे ।
रोगी मृतस्वयुवतिर्विषमोऽन्यदारो
दुःखी परिच्छदयुतो मलिनोऽर्कपुत्रे ॥ ८ ॥

इति । कुजे स्वभागे स्वत्रिंशांशे स्थिते सति जायान्वितो भवति बलविभूषणसत्त्वयुक्तश्च । तेजोयुतः अतिसाहसयुक्तः अत्युत्साहसंपन्नः । अर्कपुत्रे स्वत्रिंशांशे स्थिते रोगी मृतस्वयुवतिः मृतस्वभार्यः विषमः विषमशीलः अन्यदारः पारदारिकः दुःखी परिच्छदयुतः सर्वोपकरणयुक्तः मलिनश्च भवति ॥ ८ ॥

अथ जीवबुधयोः स्वत्रिंशांशगतयोर्जातस्य फलं वसन्ततिलकेनाह —

स्वांशे गुरौ धनयशस्सुखबुद्धियुक्त-
स्तेजस्विपूज्यनि(?)रुगुद्यमभोगवांश्च ।
मेधाकलाकपटकाव्यविवादशिल्प-
शास्त्रार्थसाहसयुतः शशिजेऽतिमान्यः ॥ ९ ॥

इति । गुरौ स्वांशे स्वत्रिंशांशस्थे धनयशःसुखबुद्धियुक्तः धनेन यशसा सुखेन बुद्ध्या च युक्तः, तेजस्विपूज्यनिरुगुद्यमभोगवांश्च तेजस्वी च पूज्यश्च निरुक् निरामयः उद्यमभोगवांश्च उद्यमवान् भोगवांश्च भवति । शशिजे स्वत्रिंशांशस्थे मेधाकलाकपटकाव्यविवादशिल्पशास्त्रार्थसाहसयुतः मेधया कलाकपटकाव्यविवादशिल्पैश्च शिल्पं कौशलं कलाशिल्पेन कपटशिल्पेन काव्यशिल्पेन विवादशिल्पेन च शास्त्रार्थैः साहसेन च युतो भवति । अतिमान्यश्च भवति ॥ ९ ॥

---

१. 'शे राशीं' ग. पाठः. २. 'शस्थे रो', ३. 'परदारगः दुः' ग. पाठः.

अथ शुक्रे स्वत्रिंशांशस्थे (च ?) आदित्यचन्द्रयोः भौमादित्रिंशांश(स्थे ? स्थितौ च) —

स्वत्रिंशांशे बहुसुतसुखारोग्यभार्यार्थयुक्तः
शुक्रे तीक्ष्णः सुललिततनुर्विप्रकीर्णेन्द्रियश्च ।
शूरस्तब्धौ विषमवधकौ सद्गुणाढ्यौ सुखिज्ञौ
चार्वङ्गेष्टौ रविशशियुतेष्वारपूर्वांशकेषु ॥ १० ॥

इति । शुक्रे स्वत्रिंशांशे स्थिते बहुसुतसुखारोग्यभार्यार्थयुक्तो भवति । तीक्ष्णः आशुकार्यकरः सुललिततनुः सौन्दर्ययुक्तः विप्रकीर्णेन्द्रियः इतस्ततो विप्रकीर्यमाणेन्द्रियः सर्वत्र तृष्णाचाश्चल्ययुक्त इत्यर्थः । रविशशियुतेषु आरपूर्वांशकेषु शूरस्तब्धादयो भवन्ति । भौमत्रिंशांशके रवियुते शूरो भवति । तत्र चन्द्रयुते स्तब्धो भवति । मन्दत्रिंशांशके रवियुते विषमो भवति अनृजुर्भवति । तत्र चन्द्रयुते वधको भवति ताडनादिरतो भवति । गुरुत्रिंशांशके रवियुते सद्गुणः चन्द्रयुते आढ्यः । बुधत्रिंशांशके रवियुते सुखी चन्द्रयुते ज्ञः । शुक्रत्रिंशांशके रवियुते चार्वङ्गः चन्द्रयुते इष्टः लोकप्रियो भवति ॥ १० ॥

इति होराविवरणे आश्रयसंज्ञ एकोनविंशोऽध्यायः ॥

---

## अथ विंशोऽध्यायः ।

अथ प्रकीर्णकाध्यायो व्याख्यायते । अप्रकृतानि प्रकृतोपयोगीनि लक्षणानि प्रकीर्णकान्युच्यन्ते । तत्र प्रथमं यथोक्तफलकर्तॄणां ग्रहाणां परस्परसहायत्वस्य लक्षणमाह —

स्वर्क्षतुङ्गमूलत्रिकोणगाः
कण्टकेषु यावन्त आस्थिताः ।
सर्व एव तेऽन्योन्यकारकाः
कर्मगस्तु तेषां विशेषतः ॥ १ ॥

इति । कण्टकेषु स्वर्क्षतुङ्गमूलत्रिकोणगाः यावन्त आस्थिताः ते सर्व एव अन्योन्यकारका भवन्तीत्यन्वयः । कण्टकेषु जन्मलग्नकेन्द्रेष्विति यावत् । तत्रापि तेषां कर्मगः विशेषतः कारको भवति ॥ १ ॥

---

१. 'शुक्रे कान्त; सु', २. 'नुस्सुप्र' ख. पाठः. ३. 'ति । कान्तः मनोहरः । सु', ४. 'प' ख. पाठः. ५. 'यक्ष भ' क. ग. पाठः.

अत्रोदाहरणार्थं रथोद्धतामाह—

**कर्कटोदयगते यथोडुपे**
**स्वोच्चगाः कुजयमार्कसूरयः ।**
**कारका निगदिताः परस्परं**
**लग्नगस्य सकलोऽम्बराम्बुगः ॥ २ ॥**

इति । यथा उडुपे कर्कटोदयगते स्वोच्चगाः कुजयमार्कसूरयः परस्परं कारका भवन्तीत्यन्वयः । तत्र स्वर्क्षे लग्नगतश्चन्द्रः उच्चगतो गुरुश्च तथा तुङ्गस्थो मन्दः तौलिगतः ते परस्परं कारका भवन्ति तथा तुङ्गस्थो भौमः सप्तमगतः तदापि सर्वे परस्परं कारकाः यदा तुङ्गस्थो रविः दशमे च तदापि सर्वे परस्परं कारकाः । लग्नगौ गुरुचन्द्रावपि परस्परं कारकौ । अत्र कुजयमार्कसूरिचन्द्रेषु परस्परं कारकेषु सत्सु गुरुचन्द्रयोः दशमगतः सूर्यो विशेषात् कारकः । तथा सूर्यस्य स्वस्माद् दशमस्थः स्वतुङ्गस्थो भौमोऽपि विशेषात् कारकः तथा भौमस्य मन्दः मन्दस्य गुरुचन्द्रौ एवं लग्नवशात् स्वाधिष्ठितराशिवशाच्च लग्नकेन्द्रस्थानां ग्रहाणां परस्परं कारकत्वं भवति । कारकत्वं नाम उपकारकत्वं 'स्वां स्वां दशामुपगताः स्वफलप्रदाः स्यु'रित्युक्तस्य नियमस्यायमपवादः । तथाहि—सूर्यस्य गुरुं प्रति कारकत्वे सूर्यदशाकालेऽपि गुरोः फलानि पुष्टानि स्वस्वकाले भवन्ति । एवं सर्वेषामपि द्रष्टव्यम् । स्वर्क्षतुङ्गमूलत्रिकोणगत्वं विनापि कारकत्वं चतुर्थपादेन दर्शयति—लग्नगस्य सकलोऽम्बराम्बुग इति । लग्नगतस्य ग्रहस्य दशमस्थानगतश्चतुर्थस्थानगतश्च ग्रहः स्वर्क्षादिगतत्वरहितोऽपि कारको भवति । लग्नगस्येति वचनात् परस्परकारकत्वमत्र नेष्यते ॥ २ ॥

पुनरपि कारकत्वविशेषमाह[2]—

**स्वत्रिकोणोच्चगो हेतुरन्यस्य यदि कर्मगः ।**
**सुहृत् तद्गुणसम्पन्नः कारकश्चापि स स्मृतः ॥ ३ ॥**

इति । स्वत्रिकोणोच्चगः हेतुः हेतुशब्देनात्र कारकत्वयोग्यत्वं विवक्षितं स्वत्रिकोणोच्चगो ग्रहः लग्नकेन्द्रगतत्वे कारकत्वयोग्यः सन्

१. 'था स्वतु' ग. पाठः. २. 'षमनुष्टुभमाह', ३. 'ग्मं वि' क. पाठः.

लग्नकेन्द्रादन्यत्र स्थितस्य कर्मगो यदि भवति सुहृत् तद्गुणसम्पन्नः सुहृद्गुणसम्पन्नः अतिबन्धुतां प्राप्त इति यावत् । सोऽपि तस्य स्वस्माच्चतुर्थस्थितस्य कारको भवति । अत्रापि परस्परकारकत्वं नेष्यते । किन्तु अन्यस्य कर्मग इत्युक्त्या सर्वेषां ग्रहाणां दशमगतस्य ग्रहस्य बन्धुत्वे बलवत्त्वे च सति कारकत्वं भवतीति द्रष्टव्यम् ॥ ३ ॥

पुनरन्यल्लक्षणमाह—

**शुभं वर्गोत्तमे जन्म वेसिस्थाने च सद्ग्रहे ।**
**अशून्येषु च केन्द्रेषु कारकाख्यग्रहेषु च ॥ ४ ॥**

इति । वर्गोत्तमे जन्म शुभं ग्रहाणां लग्नस्य च अंशकेषु वर्गोत्तमेषु सत्सु जन्म शुभम् । वेसिस्थाने सद्ग्रहे च दिनकराद् द्वितीयराशौ सद्ग्रहे च सति जन्म शुभम् । अत्र वेसिग्रहणं वास्युभयचर्योरप्युपलक्षणम् । केन्द्रेषु अशून्येषु च सत्सु जन्म शुभम् । कारकाख्यग्रहेषु च केन्द्राणामशून्यत्वे सति कारकाख्यग्रहाश्च सन्ति चेच्छुभतरं जन्मेत्यभिप्रायः ॥ ४ ॥

पुनरपि केन्द्रस्थेषु विशेषं वैतालीयेनाह —

**मध्ये वयसः सुखप्रदाः केन्द्रस्था गुरुजन्मलग्नपाः ।**
**पृष्ठोभयकोदयर्क्षगाः स्वान्त्यान्तःप्रथमेषु पाकदाः ॥ ५ ॥**

इति । केन्द्रस्थाः गुरुजन्मलग्नपाः वयसो मध्ये सुखप्रदा भवन्ति । गुरुर्जन्मराशिपतिर्लग्नाधिपतिश्च केन्द्रस्थिताश्चेद् वयसो मध्ये यौवनकाले शुभप्रदा[1] भवन्ति । अत्र यवनेश्वरः—

"जन्माधिपो लग्नपतिश्च येषां चतुष्टये स्याद् बलवान् गुरुश्च ।
चतुर्षु होरादिषु सङ्गताश्च चतुष्टयं कालफलं प्रदद्यात् ॥"

उदयरविशशाङ्केति सामान्येनोक्तस्य फलदानस्यायं विशेषविधिः । पृष्ठोभयकोदयर्क्षगाः ग्रहाः स्वान्त्यान्तःप्रथमेषु पाकदा भवन्ति । पृष्ठोदयराशिगताः ग्रहाः त्रिधा विभक्तायाः स्वदशाया अन्त्यत्रिभागे फलदा भवन्ति शुभस्याशुभस्य वा फलस्य दातारो भवन्ति । उभयोदयस्थिताः ग्रहाः मध्यत्रिभागे फलदातारः शीर्षोदयस्था ग्रहाः

१. 'शुभप्र' ग. पाठः.

पूर्वत्रिभागे दशाप्रवेशे फलदातारो भवन्ति । एषां पृष्ठोदयादिस्थितिर्दशारम्भकाले चारवशाज्जातापि संवादार्थं विचिन्तनीया । तथाच गार्गिः—

"आ(द्यन्त ? दावन्तेऽन्तः) फलदः शिरःपृष्ठो(द ? भ)येषु च ।
दशाप्रवेशसमये तिष्ठन् वाच्यो दशापतिः ॥"

इति ॥ ५ ॥

ग्रहाणां चारफलस्य कालविशेषं पुष्पिताग्रयाह—

दिनकररुधिरौ प्रवेशकाले
गुरुभृगुजौ भवनस्य मध्ययातौ ।
रविसुतशशिनौ विनिर्गमस्थौ
शशितनयः फलदस्तु सार्वकालम् ॥ ६ ॥

इति । दिनकररुधिरौ भवनस्य प्रवेशकाले फलदावित्यन्वयः । गुरुभृगुजौ भवनस्य मध्ययातौ फलदौ । रविसुतशशिनौ भवनस्य विनिर्गमस्थौ फलदौ । शशितनयस्तु सार्वकालं फलदः । प्रवेशकालशब्देन प्रथमद्रेकाणस्थितिकालः मध्यशब्देन मध्यद्रेकाणस्थितिकालः विनिर्गमशब्देनान्त्यद्रेकाणस्थितिकालः इत्युच्यते । बुधस्तु त्रिष्वपि द्रेकाणेषु स्थितः सदा फलं ददातीत्यर्थः ॥ ६ ॥

इति होराविवरणे प्रकीर्णो नाम विंशोऽध्यायः ॥

---

## अथ एकविंशोऽध्यायः ।

अथ भावस्थानालोकयोगवशेन यथोक्तानां फलानां सङ्कीर्णत्वात् सम्भवासम्भवयोः सन्देहे सति अवश्यवक्तव्यानां पुत्रकलत्रादिफलविशेषाणामसम्भवप्रदर्शकान्यनिष्टयोगलक्षणानि अत्र एकविंशतितमेऽध्याये प्रदर्श्यन्ते । तत्रादावेव सुतहीनजन्मज्ञानार्थं शार्दूलविक्रीडि(तेना ? तमा)ह—

लग्नात्पुत्रकलत्रभे शुभपतिप्राप्तेऽथवालोकिते
चन्द्राद्वा यदि सम्पदस्ति हि तयोर्ज्ञेयोऽन्यथासम्भवः ।
पाथोनोदयगे रवौ रविसुतो मीनस्थितो दारहा
पुत्रस्थानगतश्च पुत्रमरणं पुत्रोऽवनेर्यच्छति ॥ १ ॥

---

१. 'ल उच्य' क. ख. पाठः.

इति । लग्नात् पुत्रकलत्रभे शुभपतिप्राप्ते अथवा आलोकिते तयोः सम्पदस्ति हि, अन्यथा असम्भवो ज्ञेय इत्यन्वयः । पुत्रकलत्रभे पुत्रभे कलत्रभे च शुभपतिप्राप्ते शुभप्राप्ते पतिप्राप्ते च अथवा आलोकिते शुभालोकिते पतिना(?)दृष्टे वा तयोः पुत्रकलत्रयोः सम्पदस्ति हि । हिशब्दः प्रसिद्धौ । अत्र पुत्रस्थाने शुभेन पतिना युक्ते वा दृष्टे वा सति पुत्रसम्पत् सुलभा भवति । तथा शुभग्रहेण युक्ते दृष्टेऽपि पुत्रसम्पद् भवति । तथा अशुभेष्वपि पतिना(?)ग्रहेण युक्ते दृष्टेऽपि सति सन्ततिर्भवतीति तारतम्यं द्रष्टव्यम् । तथैव कलत्रविषयेऽपि योजनीयम् । अत्र पुत्रकलत्रयोः सम्पदस्तीति प्रसज्य प्रतिषेधार्थमनूदितम् । अन्यथा तयोरसम्भवः । पुत्रस्थाने कलत्रस्थाने च अशुभेन युक्ते दृष्टे च अधिपतेरन्येन युक्ते दृष्टे च पुत्रकलत्रयोरसम्भवो ज्ञेयः । योगेक्षणकर्तुरशुभग्रहस्य शुभग्रहराश्यंशकेक्षणादिभिः सम्बन्धेन अत्रापि पुत्रकलत्रसम्पदभावे विशेषा विमृश्याः । चन्द्राद्वा चन्द्रात् पुत्रकलत्रभे शुभपतिप्राप्ते अथवा आलोकिते तयोः सम्पदस्ति । अन्यथासम्भवः, अन्यथा तयोरसम्भव इति योजनीयम् । लग्नचन्द्रयोर्बलाबलेन पुत्रसम्पत् कलत्रसम्पच्च निरूपणीयेति वचनाद् अन्येषामपि भावानां लग्नाच्चन्द्राच्च यथाबलं निरूपणीयत्वं द्योत्यते । अत्रोदाहरणमाह — पार्थोनोदयगे रवौ मीनस्थितो रविसुतो दारहा भवतीत्यन्वयः । कन्यायामुदयस्थिते रवौ मीनस्थितो मन्दः दारहा भवति । अत्र कलत्रस्थानस्य पापयोगः पापदृष्टिश्च भवतः ततो दारहानिर्भवति । तथा पुत्रस्थानगतोऽवनेः पुत्रः पुत्रमरणं यच्छति च । अत्र पुत्रमरणं यच्छतीत्युक्त्या पञ्चमस्थे कुजे पुत्रा जायन्ते म्रियन्ते चेत्युक्तं भवति । ननु पुत्रकलत्रयोः सम्पत्तिर्विपत्तिश्च कारकाभ्यां गुरुशुक्राभ्यामपि[1] निरूपणीयेत्यन्यशास्त्रेषु[2] दृश्यते । तथाहि — "धीचित्पुत्राङ्गसौख्यं सुरगुरुरबलाभोगयानानि शुक्रः" इत्यादीनि शास्त्रान्तरवचनानि बहूनि सन्ति । अत्र च तथा नोक्तम् । मैवम् । अत्रापि पूर्वं "गुरौ त्रिकोणोदयधर्मगेऽपि वा भवत्यपत्यं हि" इत्यत्र गुरोः सन्तानकारकत्वं प्रदर्शितम् । शुक्रस्य कलत्रकारकत्वं पुनरत्र प्रदर्श्यते ॥ १ ॥

---

१. 'भ्यां नि' क. पाठः. २. 'दि' ख. पाठः.

अथ भार्यामरणयोगत्रयं प्रहर्षिण्याह (?) —

**उग्रग्रहैः सितचतुरश्रसंस्थितै-**
**र्मध्यस्थिते भृगुतनयेऽथवोग्रयोः ।**
**सौम्यग्रहैरसहितसन्निरीक्षिते**
**जायावधो दहननिपातपाशजः ॥ २ ॥**

इति । सितचतुरश्रसंस्थितैरुग्रग्रहैः दहननिपातपाशजो जायावधो भवतीत्यन्वयः । सितचतुरश्रसंस्थितैः सिताच्चतुरश्रे चतुर्थेऽष्टमे च संस्थितैरुग्रग्रहैः रविकुजमन्दैः जायावधः कलत्रमरणं दहननिपातपाशजः दहनेन[1] अग्निना जनितो वा निपातेन गर्भपातेन जनितो वा 'गर्भे निपतिते तीक्ष्णमि'त्यादिषु निपतनशब्दस्य गर्भविमोचनार्थत्वदर्शनादत्र निपातशब्देन गर्भनिपातो लक्ष्यते । पाशेन उद्बन्धनसाधनेन जनितो वा जायावधो भवति । पक्षान्तरमाह — अथवा भृगुतनये उग्रयोर्मध्यस्थिते सति द्विद्वादशस्थयोः क्रूरयोरेकराशौ स्वस्मात् पूर्वापरस्थयोर्वा मध्यस्थिते भृगुतनयेऽपि दहननिपातपाशजो जायावधो भवति । तदपवादत्वेन विशेषणमाह—सौम्यग्रहैरसहितसन्निरीक्षिते इति । शुभग्रहैरसहिते अनिरीक्षिते च शुक्रे उक्तं योगफलं भवति । शुक्रस्य शुभयुक्तत्वे शुभदृष्टत्वे वा[2] जायावधो न भवेदित्यभिप्रायः । कलत्रकारकस्य शुक्रस्य क्रूरैरुक्तयोगसम्भवेऽपि शुभदृष्टियोगे कलत्रसम्पद् भवतीति यावत् । अत्र शुक्रस्य चतुरश्रयोः क्रूरस्थितिः क्रूरयोर्मध्यस्थितिश्च सौम्यग्रहयोगनिरीक्षणाभावश्चेति त्रयो जायावधयोगाः । जायावधाश्च दहनजः निपातजः पाशजश्चेति क्रमात् त्रयो भवन्तीति केचिद् व्याचक्षते । तत्पक्षे कलत्रकारकस्य शुक्रस्य पापग्रहोक्तयोगाभावेऽपि शुभग्रहयोगनिरीक्षणाभावेन केवलस्यापि कलत्रारिष्टकारित्वमुद्बन्धनप्रवर्तकं प्रसज्यते ।

तथाच गार्गिः —

चतुर्थाष्टमगैः शुक्रात् सौराराकैर्हुताशनात् ।
तेषां द्वितीयमध्यस्थे तथा शुक्रे निपातनात् ॥
शुक्रे सद्योगदृग्घीने पाशात् भार्यावधो भवेत् ॥

---

१. 'ज इति द' क. ग. पाठः. २. 'वापि जा' क. पाठः. ३. 'ष्टत्व' ग. पाठः.

इति । उग्रग्रहैः सितचतुरश्रसंस्थितैरिति सूर्यस्य शुक्राच्चतुर्थादिष्वसम्भवेऽपि बहुवचनप्रयोगेण तमोग्रहयोरपि उपरागानन्तरसमीपसमयगतत्वादिबलसम्भवे क्रूरग्रहेष्वन्तर्भावो द्योत्यते ॥ २ ॥

अथ विकलदारजन्मज्ञानार्थं वसन्ततिलकेनाह —

**लग्नाद्व्ययारिगतयोः शशितिग्मरश्म्योः**
**पत्न्या सहैकनयनस्य वदन्ति जन्म ।**
**द्यूनस्थयोर्नवमपञ्चमसंस्थयोर्वा**
**शुक्रार्कयोर्विकलदारमुशन्ति जातम् ॥ ३ ॥**

इति । शशितिग्मरश्म्योः लग्नाद् व्ययारिगतयोः पत्न्या सह एकनयनस्य जन्म वदन्तीत्यन्वयः । शशिनि लग्नाद् व्ययगते तिग्मरश्मौ षष्ठगते अथवा रवौ व्ययगते चन्द्रे षष्ठगते सति एकनयनस्य काणस्य पत्न्या सह एकनयनया पत्न्या सहेति । एवंविधयोगे जातस्य विवाहकाले पत्नी चैकनयना भवतीत्यर्थः । "व्ययगृहगतश्चन्द्रो वामं हिनस्त्यपरं रविः" इत्युक्तयोगेन लग्नस्य व्यये रविचन्द्रयोरेकेन युक्ते पुरुषस्यैकनेत्रत्वं भवति । तथा सप्तमस्य 'लग्नदेहादिभावै'रित्यत्रोक्तमार्गेण सप्तमभावस्य कलत्रलग्नत्वे सति तद्व्ययभूते षष्ठे रविचन्द्रयोरेकेन युक्ते पत्नी चैकनयना भवतीत्युक्तं भवति । शुक्रार्कयोर्द्यूनस्थयोः नवमपञ्चमसंस्थयोर्वा सतोः जातं विकलदारमुशन्तीत्यन्वयः । शुक्रे अर्के चैकस्मिन् राशौ द्यूनस्थयोः सप्तमस्थयोरथवा नवमेस्थयोरथवा पञ्चमेस्थयोः जातं विकलदारम् अङ्गविकलया भार्यया युक्तम् उशन्ति आचक्षते शास्त्रविद इत्यर्थः । अत्र नवमपञ्चमयोः शुक्रार्कयोः कैश्चिद् यथासंख्यम् एको योगो व्याख्यातः । तच्चायुक्तम् । यस्माद् गार्गिः —

"पञ्चमे नवमे द्यूने सहितौ रविभार्गवौ ।
यस्य कस्य भवेद् भार्या तस्यैकाङ्गविवर्जिता ॥"

इति ॥ ३ ॥

---

१. 'कारण' ख. ग. पाठः. २. 'ना संभ' क. पाठः. ३., ४. 'मस्थितयोः' क. ग. पाठः. ५. 'लभा' ग. पाठः.

पुनरपि कलत्रगतं विशेषमाह[1]—

**कोणोदये भृगुतनयेऽस्तचक्रसन्धौ**
**वन्ध्यापतिर्यदि न सुतर्क्षमिष्टयुक्तम् ।**
**पापग्रहैर्व्ययमदलग्नराशिसंस्थैः**
**क्षीणे शशिन्यसुतकलत्रजन्म धीस्थे ॥ ४ ॥**

इति । कोणोदये अस्तचक्रसन्धौ भृगुतनये च जातो वन्ध्यापतिरित्यन्वयः । कोणस्य मन्दस्य उदये अस्तचक्रसन्धौ अस्तलग्ने चक्रसन्धौ शशिभवनालिझषान्ते स्थिते शुक्रे सति जातो वन्ध्यापतिः वन्ध्यायाः पतिः । तस्य भार्या[2] वन्ध्या प्रसवहीना भवतीत्यर्थः । सुतर्क्षम् इष्टयुक्तं न यदि पुत्रभम् इष्टयुक्तं शुभयुक्तं न चेद् भवति उक्तयोगे पुत्रस्थाने इष्टग्रहोऽस्ति चेद् वन्ध्यापतिर्न भवेदित्यर्थः । क्षीणे शशिनि धीस्थे पापग्रहैः व्ययमदलग्नराशिसंस्थैरसुतकलत्रजन्म भवति क्षीणचन्द्रे पुत्रस्थानगते पापग्रहैरर्कारमन्दैः द्वादशे सप्तमे लग्ने च यथायोगं स्थितैः असुतकलत्रजन्म असुतस्य अकलत्रस्य च जन्म पुत्रकलत्रविहीनस्य जन्म भवेदित्यर्थः ॥ ४ ॥

पुनरपि कलत्रगताल्लँक्षणविशेषान् हरिण्याह—

**असितकुजयोर्वर्गेऽस्तस्थे सिते तदवेक्षिते**
**परयुवतिगस्तौ चेत् सेन्दू स्त्रिया सह पुंश्चलः ।**
**भृगुजशशिनोरस्तेऽभार्यो नरो विसुतोऽपि वा**
**परिणततनू स्त्रीत्रेर्दृष्टौ शुभैः प्रमदापती ॥ ५ ॥**

इति । सिते असितकुजयोर्वर्गे अस्तस्थे तदवेक्षिते सति परयुवतिगो भवतीत्यन्वयः । असितकुजयोः मन्दभौमयोः वर्गे वर्गगते अस्तस्थे सप्तमस्थे शुक्रे तदवेक्षिते सति[3] । एतदुक्तं भवति । अस्तराशौ मन्दस्य भौमस्य वा वर्गगते शुक्रे मन्दभौमाभ्यां दृष्टे जातः पारदारिको[4] भवति । अत्रैव योगे विशेषमाह—तौ सेन्दू चेत् स्त्रिया

१. 'षं हरिण्याह (?)', २. 'र्या प्र', ३. 'ति म', ४. 'परदारगो भ' 'त' ग. पाठः,

सह पुंश्चल इति । तौ अस्तस्थितस्य असितकुजवर्गस्थितस्य शुक्रस्य द्रष्टारौ मन्दभौमौ अर्थाल्लग्नगतौ सेन्दू चेत् चन्द्रेण सहितौ चेत् स्त्रिया सह पत्न्या सह पुंश्चलो भवति । स्वयं पारदारिकः[1] तस्य पत्नी च पुंश्चली भवतीत्यर्थः । भृगुजशशिनोरस्ते तौ मन्दभौमौ चेज्जातो नरः अभार्यो विसुतोऽपि वा भवति । चन्द्रशुक्रयोरेकराशिगतयोः सप्तमस्थौ मन्दभौमौ यदि भवतः तदा जातः पुमान् भार्यारहितः भार्याकार्यपुत्ररहितोऽपि वा भवति । पुनरपि योगविशेषमाह — स्त्रीत्रोरस्ते शुभैर्दृष्टौ तौ चेत् प्रमदापती परिणततनू भवतः । स्त्रीत्रोः स्त्री च ना च स्त्रीनरौ स्त्रीग्रहस्य पुरुषग्रहस्य च एकलग्नस्थयोः सप्तमे मन्दभौमौ शुभग्रहैर्दृष्टौ यदि भवतः तदा प्रमदापती परिणततनू वार्धकयुक्तशरीरौ भवतः । चन्द्रशुक्रयोरेकस्मिञ्जीवार्कयोरेकस्मिंश्च युगपल्लग्नस्थितयोः सतोः सप्तमे मन्दभौमाभ्यां शुभग्रहदृष्टाभ्यां युक्ते सति जातस्य पुरुषस्य वृद्धत्वे वृद्धा[2] भार्या भवेदित्युक्तं भवति ॥ ५ ॥

इति दिङ्मात्रेण कानिचित् कलत्रारिष्टलक्षणान्युक्त्वा साम्प्रतमनि[3]ष्टयोगान्तराणि मन्दाक्रान्तयाह—

**वंशोच्छेत्ता खमदसुखगैश्चन्द्रदैत्येज्यपापैः**
**शिल्पी त्र्यंशे शशिसुतयुते केन्द्रसंस्थार्किदृष्टे ।**
**दास्यां जातो दितिसुतगुरौ रिःफगे सौरिभागे**
**नीचोऽर्केन्द्वोर्मदनगतयोर्दृष्टयोः सूर्यजेन ॥ ६ ॥**

इति । खमदसुखगैः चन्द्रदैत्येज्यपापैः वंशोच्छेत्ता भवतीत्यन्वयः । दशमस्थेन चन्द्रेण सप्तमस्थेन शुक्रेण[4] सुखगताभ्याम् आरमन्दाभ्यां च जातो वंशोच्छेत्ता भवति कुलोच्छेदकरो भवति । शशिसुतयुते त्र्यंशे केन्द्रसंस्थार्किदृष्टे शिल्पी भवति । बुधाधिष्ठितद्रेक्काणे लग्नकेन्द्रगतेन सौरेण दृष्टे सति जातः शिल्पी भवति । नष्टसर्वस्वः शिल्पमात्रेण जीवतीत्यर्थः । त्र्यंशग्रहणं पूर्णदृष्टिरेवात्र ग्राह्येति द्योतयितुम् । मेषप्रथमद्रेक्काणस्थे बुधे[5] तुलाप्रथमद्रेक्काणस्थेन शनैश्चरेण दृश्यमाने पूर्णदृष्टिर्भवति । तुलान्त्यस्थेन दृश्यमाने मेषादिस्थे बुधे

१. 'परदारगः त' ग. पाठः. २. 'द्ध' क. ख. पाठः. ३. 'रि' क. पाठः, ४. 'ण सुखगतैः सु' ख. ग. पाठः. ५. 'षे' ख. पाठः.

'षष्ठं द्वितीयभवनं द्वादशमेकादशं न पश्यन्ति' इत्युक्तस्य दृष्ट्यभावस्थानस्य आसन्नगतत्वेन दृश्यस्य बुधस्य द्रष्टुर्मन्दस्य दृष्टिरल्पैव भवति। ततः पूर्णदृष्टिरत्र ग्राह्येति त्र्यंशग्रहणं कृतम्। दितिसुतगुरौ सौरिभागे रिःफगे सति जातो दास्यां जातो भवति। तस्य माता परप्रेष्येति यावत्। मदनगतयोरर्केन्द्वोः सूर्यजेन दृष्टयोः सतोः जातो नीचो भवति अनुचितकर्मा भवतीत्यर्थः ॥ ६ ॥

अथान्यानरिष्टयोगान् शार्दूलविक्रीडितेनाह—

**पापालोकितयोः सितावनिजयोरस्तस्थयोर्वातरुक्**
**चन्द्रे कर्कटवृश्चिकांशकगते पापैर्युते गुह्यरुक्।**
**श्वित्री रिःफधनस्थयोरशुभयोश्चन्द्रोदयेऽस्ते रवौ**
**चन्द्रे खेऽवनिजेऽस्तगे च विकलो यद्यर्कजो वेसिगः॥७॥**

इति। सितावनिजयोः पापालोकितयोः अस्तस्थयोर्वातरुग् भवतीत्यन्वयः। पापालोकितयोरित्यत्र पापशब्देन तमोग्रहावपि गृह्येते। अन्यथा मन्दालोकितयोरित्येव वक्तव्यत्वात्। कफानिलात्मा सितः, पैत्तिको भौमः, उभयोः पापदृष्टयोः वातशोणितरोगः स्यादित्यर्थः। चन्द्रे पापैर्युते कर्कटवृश्चिकांशकगते गुह्यरुग् भवतीत्यन्वयः। कर्कटवृश्चिकयोरदृश्यदेशचारिणोरंशकात्मकयोः स्थिते चन्द्रे रुधिरात्मके कर्कटांशे वृश्चिकांशे स्थिते वा इत्यर्थः। पापैर्युते गुह्यरुग् भवति। अदृश्यरोगः रक्तदोषसम्भवो विद्रधिभगन्दरादिः सम्भवति। चन्द्रोदये रिःफधनस्थयोरशुभयोः रवौ अस्ते च[3] सति श्वित्री भवति। चन्द्रस्योदये व्ययधनस्थयोः कुजमन्दयोः अस्तगते रवौ च सति जातः श्वित्री भवति। श्वित्रं नाम शुक्लत्वग्रोमा कुष्ठविशेषः तद्युक्तो भवति। चन्द्रे खे अवनिजे अस्तगे च अर्कजो वेसिगो यदि जातः पुमान् विकलो भवति। लग्नाद् दशमस्थे चन्द्रे सप्तमस्थे कुजे च अर्काद् द्वितीयस्थे मन्दे सति जातो विकलः वैकल्यवान् भवति ॥ ७ ॥

अथान्यानप्यनिष्टयोगान् वसन्ततिलकेनाह—

**अन्तश्शशिन्यशुभयोर्मदगे पतङ्गे**
**श्वासक्षयप्लिहकविद्रधिगुल्मभाजः।**

---

१. 'शग', २. 'शात्म', ३. 'च श्वि' क. ग. पाठः.

**शोषी परस्परगृहांशगयो रवीन्द्वोः**
**क्षेत्रेऽथवा युगपदेव तयोः कृशो वा ॥ ८ ॥**

इति । पतङ्गे लग्नान्मदगे शशिनि यत्रकुत्रचिदशुभयोर्मध्यस्थिते च सति जाताः श्वासक्षयप्लिहकविद्रधिगुल्मभाजो भवन्तीति सम्बन्धः। श्वासास्तमकादयः क्षयो राजयक्ष्मा प्लिहकः रुधिराशयरोगः विद्रधिः पिटकाविशेषः गुल्मो जठरशूलः। एषां विशेषाश्चन्द्रार्काधिष्ठितराशिबला-बलवशान्निर्देश्याः । तद्यथा — चन्द्रस्याशुभमध्यस्थत्वं शनिक्षेत्रे यदि श्वासः जीवक्षेत्रे क्षयः बुधक्षेत्रे प्लिहकः कुजक्षेत्रे विद्रधिः शुक्रक्षेत्रे गुल्मम् इति विशेषः। अत्र केचिन्मृगगे पतङ्ग इति पठन्ति। तत्पक्षे चन्द्राधिष्ठित-राशिवशाच्छ्वासादिषु विशेषनिर्देशः। राशीनां विशेषद्योतकत्वं पञ्च-भूतवशेनेति द्रष्टव्यम् । रवीन्द्वोः परस्परगृहांशगयोः शोषी भवति । चन्द्रे अर्के च परस्परगृहांशगे सति चन्द्रे सिंहे सिंहांशके वा रवौ कर्कटके कर्कटकांशके वा स्थिते सति जातः शोषी भवति क्षयरोगी भवति । अत्र केचित्—सिंहे सिंहांशकस्थे चन्द्रे कर्कटे कर्कटांशस्थे सूर्य इति च व्यावर्णयन्ति । तच्चायुक्तम् । यस्माद् गार्गिः—

> परस्परगृहे यातौ यदि वापि तदंशगौ ।
> भवेतामर्कशीतांशू तदा शोषी प्रजायते ॥

इति । अथवा तयोः क्षेत्रे युगपत् स्थितयोः सतोः शोषी भवति । अंशकनिषेधार्थं क्षेत्रे इत्युक्तम्। परस्परस्य क्षेत्रे युगपत् स्थितयोः चन्द्र-क्षेत्रे कर्कटके सहस्थितयोः चन्द्रार्कयोः, तथा सूर्यक्षेत्रे सहस्थितयो-श्चन्द्रार्कयोश्च जातः क्षयरोगी भवति । अस्मिन्योगे पक्षान्तरमाह — कृशो वेति । कृशशरीरो भवति वेत्यर्थः ॥ ८ ॥

त्वग्दोषलक्षणं वसन्ततिलकेनाह —

**चन्द्रेऽश्विमध्यझषकर्किमृगाजभागे**
**कुष्ठी समन्दरुधिरे तदवेक्षिते वा ।**
**यातैस्त्रिकोणमलिकर्किवृषैर्मृगे च**
**कुष्ठ्येव पापसहितैरवलोकितैर्वा ॥ ९ ॥**

इति । चन्द्रे अश्विमध्यझषकर्किमृगाजभागे समन्दरुधिरे सति तदवेक्षिते वा सति कुष्ठी भवतीत्यन्वयः । अश्वी धनुः तस्य मध्यं मध्यद्रेक्काणः सिंहांशकमिति केचित् । तथा झषकर्किमृगाजभागाः यत्रतत्र राशौ स्थिता अश्विमध्यझषकर्किमृगाजनवांशानामन्यतमे यत्रकुत्रचिद्राशौ वा स्थिते चन्द्रे मन्देन वा रुधिरेण वा सहिते सति अथवा मन्दरुधिरयोरेकतरेण अवलोकिते वा तादृशे चन्द्रे जातः पुमान् कुष्ठी भवति कुष्ठयुक्तो भवति । अष्टादशानां कुष्ठविशेषाणामन्यतमेन युक्तो भवति । शुभाशुभराश्यंशकयोगेक्षणवशात् कुष्ठविशेषा वाच्याः । अस्मिन् विषये योगान्तरमाह— अलिकर्किवृषैः त्रिकोणं यातैः मृगे च त्रिकोणं यात इत्यर्थात् सिध्यति । पापसहितैः पापावलोकितैर्वा जातः कुष्ठ्येव भवतीति सम्बन्धः । त्रिकोणं यातैः लग्नपञ्चमनवमस्थानगतैरलिवृषकर्किमकरैः पापानामन्यतमेन युक्तैरवलोकितैर्वा जातः कुष्ठ्येव भवतीत्यर्थः ॥ ९ ॥

अथ नयनारिष्टं वैतालीयेनाह—

**निधनारिधनव्ययस्थिता**
**रविचन्द्रारयमा यथातथा ।**
**बलवद्ग्रहदोषकारणा-**
**न्मनुजानां जनयन्त्यनेत्रताम् ॥ १० ॥**

इति । रविचन्द्रारयमाः यथातथा निधनारिधनव्ययस्थिताः बलवद्ग्रहदोषकारणात् मनुजानामनेत्रतां जनयन्तीत्यन्वयः । यथातथा यथोक्तैर्ग्रहैर्यथोक्तेषु स्थानेषु यथासम्भवं तिष्ठद्भिरित्यर्थः । बलवद्ग्रहदोषकारणाद् एषां चतुर्णां मध्ये यो बलवान् तस्य यो दोष उक्तः वातपित्तकफेष्वन्यतमः तेन कुपितेन कारणभूतेन अनेत्रतां नेत्राभावं जनयन्तीत्यर्थः । चन्द्रो बहुवातकफः मन्दः कफानिलात्मा अतोऽस्मिन् योगे तयोर्बलवत्त्वे श्लेष्मरोगेण वातयुक्तेन नेत्रदोषो भवति । तथोक्तं वाहटेन— "चक्षुस्तेजोमयं तस्य विशेषाच्छ्लेष्मतो

१. 'क इति' क. ग. पाठः. २. 'ध्ये' ग. पाठः. ३. 'पालो' क. ग. पाठः.

भयम् " इति । तथा रविकुजयोर्बलवत्त्वे 'पित्तेन पित्तं वह्विर्वह्विजं वा' इत्युक्त्या तेजोमयं पित्तं, तेजसापि नेत्रहानिर्भवति । तथाचोक्तम्—

"अश्मनो जन्म लोहस्य तत एव च तीक्ष्णता ।
कुण्ठता च ततः पश्चात् तथा नेत्रस्य तेजसः ॥"

इति । द्वितीयस्थानगतेन क्रूरेण अष्टमस्थग्रहदृष्टेन दक्षिणदृष्टेरभावः । व्ययस्थेन षष्ठस्थदृष्टेन वामदृष्टेश्चाभाव इति विशेषोऽत्र द्रष्टव्यः । अत्रापि राश्यंशकयोगेक्षणवशात् तारतम्यं विमृश्य वक्तव्यम् ॥ १० ॥

श्रोत्रारिष्टं[1] वैतालीयेनाह—

**नवमायतृतीयधीयुता**
**न च सौम्यैरशुभा निरीक्षिताः ।**
**नियमाच्छ्रवणोपघातदा**
**रदवैकृत्यकराश्च सप्तमे ॥ ११ ॥**

इति । नवमायतृतीयधीयुताः सौम्यैश्च न निरीक्षिता अशुभाः नियमात् श्रवणोपघातदा भवन्तीत्यन्वयः । तृतीयनवमस्थिता अशुभाः शुभैरदृष्टाः दक्षिणकर्णस्योपघातं कुर्वन्ति । एकादशपञ्चमस्थिताः वामकर्णस्योपघातं कुर्वन्ति । प्रत्येकं चतुर्ष्वपि स्थिताः रविचन्द्रारमन्दाः[2] बुधगुरुशुक्रैरदृष्टाः उभयोरपि कर्णयोरुपघातं कुर्वन्ति । मुखानिष्टयोगमाह — सप्तमे रदवैकृत्यकराश्च दन्तवैरूप्यकराश्च भवन्ति । रदशब्दः[3] जिह्वामूलजिह्वादन्तच्छदानामप्युपलक्षणम् । सप्तमराशिवशेन मुखगतान्यनिष्टानि वक्तव्यानीत्यर्थः ॥ ११ ॥

अथानिष्टान्तराणि वैतालीयेनाह —

**उदयत्युडुपेऽसुरास्यगे**
**सपिशाचोऽशुभयोस्त्रिकोणयोः ।**
**सोपप्लवमण्डले रवा-**
**वुदयस्थे नयनापवर्जितः ॥ १२ ॥**

इति । असुरास्यगे उडुपे उदयति त्रिकोणयोरशुभयोश्च सतो जातः सपिशाचो भवतीत्यन्वयः । असुरास्यगे असुरस्य राहोरास्यगते,

---

१. 'नि' ग. पाठः. २. 'यमाः बु' क. ग. पाठः. ३. 'दन्तश' ख. ग. पाठः.

सोमग्रहणचन्द्र इति यावत् । त्रिकोणयोः पञ्चमे नवमे च पापयोः मन्दभौमाभ्यामन्यतमेन युक्तयोरित्यर्थः । सपिशाचः पिशाचावेशयुक्तः असमञ्जवत् । रवौ सोपप्लवमण्डले उदयस्थे नयनापवर्जितः भवति । सोपप्लवमण्डलः ग्रहणकालीन इति यावत् । नयनापवर्जितः नेत्ररहित [1]इत्यर्थः ॥ १२ ॥

अथोन्मादलक्षणं शार्दूलविक्रीडितेनाह —

**संस्पृष्टः पवनेन मन्दगयुते द्यूने विलग्ने गुरौ**
**सोन्मादोऽवनिसूनुनास्तभवने जीवे विलग्नाश्रिते ।**
**तद्वच्चाह यमोदयेऽवनिसुते धर्मात्मजद्यूनगे**
**याते वा ससहस्ररश्मितनये क्षीणे व्ययं शीतगौ ॥ १३ ॥**

इति । गुरौ विलग्ने द्यूने मन्दगयुते सति पवनेन संस्पृष्ट इत्यन्वयः । पवनेन वातरोगेण संस्पृष्टः । जीवे विलग्नाश्रिते अस्तभवने अवनिसूनुना सोन्मादो भवति उन्मादसहितो भवति । यमोदये अवनिसुते धर्मात्मजद्यूनगे च तद्वदाह । यमस्योदये, यमो मन्दः मिथुनराशिरिति केचित्, तस्योदये अवनिसुते भौमे धर्मात्मजद्यूनगे धर्मे आत्मजे द्यूने वा स्थिते सति तद्वदाह तद्वत् पूर्वोक्तवत् सोन्मादो भवतीत्यर्थः । क्षीणे शीतगौ ससहस्ररश्मितनये व्ययं याते वा तद्वद् भवति । क्षीणे चन्द्रे मन्देन सह व्ययस्थिते सति जातोऽपि सोन्मादः स्यादित्यर्थः ॥ १३ ॥

अथान्यानरिष्टयोगान् वसन्ततिलकेनाह —

**राश्यंशपोष्णकरशीतकरामरेड्यै-**
**र्नीचाधिपांशकगतैररिभागगैर्वा ।**
**एभ्योऽल्पमध्यबहुभिः क्रमशः प्रसूता**
**ज्ञेयाः स्युरभ्युपगमक्रयगर्भदासाः ॥ १४ ॥**

इति । राश्यंशपोष्णकरशीतकरामरेड्यैः नीचाधिपांशकगतैः अरिभागगैर्वा जाता दासा भवन्तीत्यन्वयः[2] । राशिनाथश्च अंशनाथश्च शीतकरश्चोष्णकरश्चामरेड्यश्च[3] एतैः पञ्चभिः नीचाधिपांशकगतैः नीचा-

---

१. 'इति यावत् ॥', २. 'ति सम्बन्धः' क. ग. पाठः. ३. 'ड्यश्च राश्यंशपोष्णकरामरेड्याः तैः प' क. पाठः.

धिपस्यांशकं प्राप्तैः शत्रुभागगतैर्वा जाताः दासा भवन्ति । दासविशेषमाह — प्रसूताः एभ्यः अल्पमध्यबहुभिः अभ्युपगमक्रयगर्भदासाः भवन्ति । एभ्यः अल्पैरेकद्वैः मध्यैः त्रिचतुरैः बहुभिः चतुर्भिः पञ्चभिर्वा प्रसूताः क्रमेण अभ्युपगमदासाः क्रयदासा गर्भदासाश्च भवन्ति । अनर्हत्वेऽपि स्वयमङ्गीकृतदासवृत्तयः अभ्युपगमदासाः । अदासा अपि विक्रयेण दासीभूताः क्रयदासाः । दास्या गर्भसमुद्भवाः गर्भदासाः ॥

अथान्यान् अरिष्टयोगान् हरिण्याह—

**विकृतदशनः पापैर्दृष्टे वृषाजहयोदये**
**खलतिरशुभक्षेत्रे लग्ने हये वृषभेऽपि वा ।**
**नवमसुतगे पापैर्दृष्टे रवावदृढेक्षणो**
**दिनकरसुते नैकव्याधिः कुजे विकलः पुमान् ॥ १५ ॥**

इति । वृषाजहयोदये पापैर्दृष्टे विकृतदशनो भवतीत्यन्वयः । विकृतदशनः दन्तविकारवान् भवतीत्यर्थः । तथा अशुभक्षेत्रे (अशुभक्षेत्राणि) मेषसिंहवृश्चिकमकरकुम्भाः तेषु वा वृषे हयेऽपि वा लग्ने पापैर्दृष्टे खलतिर्भवति । खलतिस्त्वैन्द्रलुप्तिकः मस्तकाग्रे केशशून्यः । अत्र वृषाजहयोदये पापैर्दृष्टे विकृतदशनः खलतिश्च भवति, सिंहवृश्चिकमकरकुम्भोदये पापैर्दृष्टे खलतिर्भवतीत्युक्तं भवति । रवौ नवमसुतगे पापैर्दृष्टे सति अदृढेक्षणो भवति । अदृढेक्षणः सूक्ष्मेक्षणाशक्त इत्यर्थः । दिनकरसुते नवमसुतगे पापैर्दृष्टे नैकव्याधिः अनेकरोगयुक्तो भवति । कुजे नवमसुतगे पापैर्दृष्टे सति जातः पुमान् विकलो भवति ॥ १५ ॥

अन्यानप्यरिष्टयोगान् पुष्पिताग्रयाह —

**व्ययधनसुतधर्मगैरसौम्यै-**
**र्भवनसमाननिबन्धना विकल्प्याः ।**
**भुजगनिगलपाशभृद्दृगाणै-**
**र्बलवदसौम्यनिरीक्षितैश्च तद्वत् ॥ १६ ॥**

इति । असौम्यैः व्ययधनसुतधर्मगैः भवनसमाननिबन्धनाः विकल्प्या इत्यन्वयः । व्ययधनसुतधर्मान् प्राप्तैः पापग्रहैः जाताः भवनसमाननिबन्धनाः लग्नराश्यनुरूपबन्धनयुक्ताः विकल्प्याः विमृश्य

---

१. 'पि क' ग. पाठः. २. 'ति दन्त', ३. 'त्यन्वयः। त' क. ग. पाठः. ४. 'ति ॥ १५' ख. ग. पाठः.

कल्पनीया इत्यर्थः[1]। तद् यथा—मेषः पाशेन वृषश्च पाशेन नवमराशि-रश्वत्वात् पाशेनैव। मिथुनकन्यातुलाकुम्भानामन्यतमे विलग्ने निगलैर्ब-ध्यते। शृङ्खलयेत्यर्थः। तथा कर्कटसिंहमीनाः शरीरबन्धनं विना दुर्गे क्षिप्त्वा बध्यन्ते। वृश्चिकः श्वभ्रे पिधानेन बध्यते। मृगो दुर्गे क्षिप्तः पाशेन बध्यते। तत्र बन्धनस्य चिरकालादि चरस्थिरोभयवशात् कल्प-नीयम्। तत्र बन्धनस्य विशेषं दर्शयति—व्ययगः पापो दुर्बलश्चेद् वेश्यास्त्रिया बध्यते, ऋणदासत्वं वा। धनगो दुर्बलश्चेद् राजानं दूष-यति। तेन स्वस्य बन्धनं च भवति। सुतगतः पापो दुर्बलश्चेत् पुत्रेण बध्यते। धर्मगो बलहीनश्चेद् गुरुजननिमित्तं बन्धनम्। एवं युक्त्या विचिन्त्य वक्तव्यम्। बलवदसौम्यनिरीक्षितैः भुजगनिगलपाशभृद्दृ-गाणैश्च तद्वत्। बलवद्भिः पापग्रहैः, भुजगभृच्च निगलभृच्च पाशभृच्च द्रेकाणाः भुजगनिगलपाशभृद्दृगाणाः, तैश्च लग्नस्थितैः पापनिरीक्षितैः तद्वद् अत्र योगे जाताः बन्धनयुक्ता विकल्प्या इत्यर्थः। अत्र केचित् पा(प? श)द्रेक्काणाभावाद् भुजगभृत् निगलपाशभृत् इति व्याचक्षते। भुजगभृत् कुलीरे तृतीयः, वृश्चिके प्रथमद्वितीयौ, मीने तृतीयश्च। निगलपाशभृत् मकरान्त्यद्रेक्काणः॥ १६॥

अथान्यानरिष्टयोगान् हरिण्याह—

**परुषवचनोऽपस्मारार्तः क्षयी च निशापतौ**
**सरवितनये वक्रालोकं गते परिवेषगे।**
**रवियमकुजैः सौम्यादृष्टैर्नभःस्थलमाश्रितै-**
**र्भृतकमनुजः पूर्वोद्दिष्टैर्वराधममध्यमाः॥ १७॥**

इति। निशापतौ सरवितनये वक्रालोकं प्राप्ते परिवेषगे सति जातः पुमान् परुषवचनः अपस्मारार्तः क्षयी च भवतीत्यन्वयः। परि-वेषगे,

"धूमो वेदगृहैस्त्रयोदशभिरप्यंशैः समेते रवौ
स्यात् तस्मिन् व्यतिपातको विगलिते चक्रादथास्मिन् युते।
षड्भिर्भैः परिवेषः"

इत्युक्तलक्षणं परिवेषं प्राप्त इत्यर्थः[2]। अत्र चन्द्रमसस्त्रयः प्रकाराः व्याख्याताः त्रयो दोषाश्च। यस्यैकप्रकारश्चन्द्रमा भवति तस्यैको दोषः।

१. 'र्थः। बलव' ख. पाठः. २. 'र्थः। रवि' ग. पाठः.

द्विप्रकारयुक्तस्य दोषद्वयं, त्रिप्रकारयुक्तस्य सर्वमपि वक्तव्यम् । रवियमकुजैः सौम्यादृष्टैः नभःस्थलमाश्रितैः दशमराशिगतैः भृतकमनुजो भवति भृत्यमनुजो भवति । पूर्वोद्दिष्टैः बह्वल्पमध्यैः क्रमाद् वराधममध्यमाः वरः श्रेष्ठभृत्यः अधमभृत्यः मध्यमभृत्यश्च भवति । तत्र रविश्चेत् श्रेष्ठभृत्यः यमश्चेद् अधमभृत्यः कुजश्चेन्मध्यमभृत्यः । अल्पमध्यबहुभिः अभ्युपगमक्रयगर्भभृत्या इति केचित् ॥ १७ ॥

इति होराविवरणे अनिष्टयोग एकविंशोऽध्यायः ॥

---

## अथ द्वाविंशोऽध्यायः ।

लग्नराशिवशाद् ग्रहस्थितिवशाच्च पुरुषजातकविषयान्[1] इष्टानिष्टयोगानुपदिश्यानन्तरं स्त्रीजातकविषयान् विशेषान् द्वाविंशेनाध्यायेन दर्शयति । तत्र प्रथमं पुरुषजन्मोक्तफलातिदेशं वसन्ततिलकेनाह—

**यद्यत् फलं नरभवे क्षममङ्गनानां**
**तत्तद् वदेत् पतिषु वा सकलं विधेयम् ।**
**तासां तु भर्तृमरणं निधने वपुस्तु**
**लग्नेन्दुगं सुभगतास्तमये पतिश्च ॥ १ ॥**

इति । नरभवे फलं यद्यद् अङ्गनानां क्षमं तत्तत् तासां वदेदित्यन्वयः । पुरुषजातकोक्तेषु फलेषु यानि यानि फलानि अङ्गनानां क्षमाणि तानि तानि वदेद्, यानि पुनरङ्गनानामक्षमाणि तानि फलानि तासां न वक्तव्यानीत्यर्थः । अत्र क्षमाणि सद्योमरणायुरादिफलानि । अक्षमाणि राजयोगादिफलानि । अथवा पतिषु सकलं विधेयम् । राजयोगादिषु जातायाः यो भर्ता भवति, तस्य राजत्वादयः सम्भवन्तीत्यर्थः । स्त्रीणामेव वक्तव्यान्यसाधारणफलान्याह—तासां तु निधने भर्तृमरणं वक्तव्यम् । स्त्रीणां जन्मन्यष्टमस्थानेन भर्तृमरणं, भर्तृमरणस्यात्ममरणकारकत्वेन स्त्रीणां तदेवाष्टमेन वक्तव्यम् । वपुस्तु लग्नेन्दुगम् । वपुः शरीरसौष्ठवं लग्नेन्दुगं लग्नवशाच्चन्द्रवशाच्चावगन्तव्यमित्यर्थः । अस्तमये सुभगता पतिश्च । अस्तराशिना सुभगत्वं भर्तृस्वरूपलक्षणं च वक्तव्यम् ॥

---

१. 'ति — य' ख. ग. पाठः.

वपुस्तु लग्नेन्दुगमिति यदुक्तं तत्प्रदर्शनार्थं वसन्ततिलकेनाह —

**युग्मेषु लग्नशशिनोः प्रकृतिस्थिता स्त्री**
**सच्छीलभूषणयुता शुभदृष्टयोश्च ।**
**ओजस्थयोस्तु पुरुषाकृतिशीलयुक्ता**
**पापा च पापयुतवीक्षितयोर्गुणोना ॥ २ ॥**

इति । लग्नशशिनोः युग्मेषु स्थितयोः सतोः स्त्री प्रकृतिस्थिता स्यादित्यन्वयः । युग्मराशयो वृषकुलीरादयः स्त्रीराशयः । तेष्वेकतमे(?) लग्ने चन्द्रे च स्थिते सति जाता स्त्री प्रकृतिस्थिता स्त्रीस्वभावयुक्ता भवतीत्यर्थः । लग्नशशिनोः शुभदृष्टयोः सच्छीलभूषणयुता च भवति । तादृशौ लग्नचन्द्रौ शुभदृष्टौ चेत् सच्छीलभूषणयुता शीलं जनमनोहर-स्वभावः सत् शोभनं शीलमेव भूषणं सच्छीलभूषणं तेन युता च भव-तीत्यर्थः । अथवा सच्छीलैः भूषणैराभरणैश्च युता । अर्थादेव अशुभ-दृष्टौ चेत् शरीरसौन्दर्ययुता विशीला च भवतीति सिद्धम् । लग्नशशिनो-रोजस्थयोस्तु पुरुषाकृतिशीलयुक्ता भवति । लग्ने चन्द्रे च ओजस्थयोः मेषमिथुनादिपुरुषराशिस्थितयोः सतोः जाता स्त्री पुरुषाकृतिशील-युक्ता भवति । तत्रापि पापयुतवीक्षितयोर्गुणोना पापा च भवति । ओजस्थयोर्लग्नशशिनोः[2] पापयुतवीक्षितयोश्च सतोर्जाता गुणरहिता पापाचारा च भवतीत्यर्थः ॥ २ ॥

अथ भौमक्षेत्रे भौमादित्रिंशांशके जातायाः स्वरूपज्ञानार्थम् इन्द्रवज्रयाह —

**कन्यैव दुष्टा व्रजतीह दास्यं**
**साध्वी समाया कुचरित्रयुक्ता ।**
**भूम्यात्मजर्क्षे क्रमशोंऽशकेषु**
**भौमार्किजीवेन्दुजभार्गवाणाम्[3] ॥ ३ ॥**

इति । भूम्यात्मजर्क्षे भौमार्किजीवेन्दुजभार्गवाणामंशकेषु[4] स्थितयोः लग्नशशिनोः जाताः स्त्रियः (क्रमशः) एवंविधा भवन्तीति सम्बन्धः ।

---

१. 'र्थः । लग्नश' ख. ग. पाठः. २. 'नोः जाता स्त्रियः एवंविधा भवन्तीति सम्बन्धः ॥ २ ॥' क. पाठः. ३, ४. 'वक्रार्कि' क. पाठः.

भूम्यात्मजर्क्षे मेषे वृश्चिके च। अंशकेषु त्रिंशांशकेषु। तत्र भौमराशौ भौमत्रिंशांशके स्थिते लग्ने चन्द्रे वा जाता कन्यैव दुष्टा भवति। मन्दत्रिंशांशके इह दास्यं व्रजति। गुरुत्रिंशांशके साध्वी भवति पतिव्रता भवति। बुधत्रिंशांशके समाया मायायुक्ता भवति। शुक्रत्रिंशांशके कुचरित्रयुक्ता भवति। कुचरित्रयुक्ता कुत्सितचारित्रयुक्ता भवतीत्यर्थः ॥ ३ ॥

अथ शुक्रबुधक्षेत्रयोः कुजादित्रिंशांशजातायाः फलम् इन्द्रवज्रयाह —

दुष्टा पुनर्भूः सुगुणा कलाज्ञा
ख्याता गुणैश्चासुरपूजितर्क्षे।
स्यात् कापटी क्लीबसमा सती च
बौधे गुणाढ्या प्रविकीर्णकामा ॥ ४ ॥

इति। असुरपूजितर्क्षे तुलायां वृषभे च कुजादित्रिंशांशकेषु दुष्टादयो भवन्ति। तत्र कुजत्रिंशांशके दुष्टा, मन्दत्रिंशांशके पुनर्भूः द्विवारमूढा, गुरुत्रिंशांशके सुगुणा, बुधत्रिंशांशके कलाज्ञा, शुक्रत्रिंशांशके गुणैः ख्याता च भवति। बौधे मिथुने कन्यायां च कुजादित्रिंशांशकेषु लग्नशशिनोः जाताः कापट्यादयः स्युः। तत्र कुजत्रिंशांशके जाता कापटी स्यात्। कापटी कपटयुक्ता। मन्दत्रिंशांशके क्लीबसमा नपुंसकतुल्या, गुरुत्रिंशांशके सती पतिव्रता, बुधत्रिंशांशके गुणाढ्या, शुक्रत्रिंशांशके प्रविकीर्णकामा नियमरहितकामेत्यर्थः ॥ ४ ॥

अथ चन्द्ररविगुरुमन्दक्षेत्रेषु कुजादित्रिंशांशफलं शार्दूलविक्रीडितेनाह —

स्वच्छन्दा पतिघातिनी बहुगुणा शिल्पिन्यसाध्वीन्दुभे
त्वाचारा कुलटार्कभे नृपवधूः पुंश्चेष्टितागम्यगा।
जैवे नैकगुणाल्परत्यतिगुणा विज्ञानयुक्ता सती
दासी नीचरतार्किभे पतिरता दुष्टाप्रजा(चां?श्वां)शकैः॥

इति। इन्दुभे कर्कटके कुजादित्रिंशांशकेषु लग्नशशिनोः स्थितयोः सतोः स्वच्छन्दादयो भवन्ति। तत्र कुजत्रिंशांशके स्वच्छन्दा स्वतन्त्रा, मन्दत्रिंशांशके पतिघातिनी, गुरुत्रिंशांशके बहुगुणा बहुगुणयुक्ता,

१. 'ती, बु' ख. ग. पाठः.

बुधत्रिंशांशके शिल्पिनी शिल्पज्ञानान्विता, शुक्रत्रिंशांशके असाध्वी पुंश्चली। अर्कभे सिंहे कुजादित्रिंशांशकेषु क्रमात् आचारादयः स्युः। तत्र कुजत्रिंशांशके आचारा पुरुषाचारा, मन्दत्रिंशांशके कुलटा, गुरुत्रिंशांशके नृपवधूः, बुधत्रिंशांशके पुंश्चेष्टिता पुरुषस्वभावयुक्ता, शुक्रत्रिंशांशके अगम्यगा व्यभिचारिणी भवति। जैवे धनुषि मीने च कुजादित्रिंशांशकेषु नैकगुणादयः स्युः। तत्र कुजत्रिंशांशके नैकगुणा अनेकगुणा, मन्दत्रिंशांशके अल्परतिरल्पमदनेत्यर्थः, गुरुत्रिंशांशके अतिगुणा, बुधत्रिंशांशके विज्ञानयुक्ता, शुक्रत्रिंशांशके सती चारित्रयुक्ता भवति। आर्किभे मकरे कुम्भे च कुजादीनां त्रिंशांशकैर्दास्यादयः स्युः। तत्र कुजत्रिंशांशके दासी, मन्दत्रिंशांशके नीचरता, गुरुत्रिंशांशके पतिरता, बुधत्रिंशांशके दुष्टा, शुक्रत्रिंशांशके अप्रजा(च? श्च) भवति ॥ ५ ॥

'एतत् त्रिंशांशकैरिति ज्ञानार्थमनुष्टुभमाह —

**शशिलग्नसमायुक्तैः फलं त्रिंशांशकैरिदम् ।**
**बलाबलविकल्पेन तयोरुक्तं विचिन्तयेत् ॥ ६ ॥**

इति। शशिलग्नसमायुक्तैः त्रिंशांशकैरुक्तमिदं फलं तयोर्बलाबलविकल्पेन विचिन्तयेदित्यर्थः ॥ ६ ॥

स्त्रीणामनिष्टयोगमाह —

**दृक्संस्थावसितसितौ परस्परांशे**
**शौक्रे वा यदि घटराशिसम्भवोऽशः ।**
**स्त्रीभिः स्त्री मदनविषानलं प्रदीप्तं**
**संशान्तिं नयति नराकृतिस्थिताभिः ॥ ७ ॥**

इति। असितसितौ परस्परांशे दृक्संस्थौ, अथवा शौक्रे राशौ घटराशिसम्भवोऽशो यदि भवति तदा स्त्री नराकृतिस्थिताभिः स्त्रीभिः प्रदीप्तं मदनविषानलं संशान्तिं नयतीत्यन्वयः। असितसितौ शनैश्चरशुक्रौ परस्परांशे शुक्रांशे मन्दः मन्दांशे शुक्रः दृक्संस्थौ अन्योन्यं सप्तमस्थौ इत्येको योगः। तथा शौक्रे शुक्रक्षेत्रे वृषभे तुलायां वा घट-

---

१, २, ३, ४, ५. 'कैः' क. पाठः. ६. 'त्यन्वयः ॥ ६ ॥' क. ग. पाठः.

राशिसम्भवोंऽशः कुम्भनवांशः वृषभे कुम्भांशे वा तुलायां कुम्भांशे वा यदि जन्म भवतीति द्वितीयो योगः । अनयोर्योगयोरेकत्र जाता स्त्री नराकृतिस्थिताभिः स्त्रीभिः प्रदीप्तं मदनविषानलं मदनः स्वयं दुर्वारः तस्य विषत्वेन रूपणं व्यामोहजनकत्वेन, तस्य मदनविषस्यापि अनलत्वेन रूपणमसह्यान्तर्दाहजनकत्वेन, तस्य प्रदीप्तत्वं विशेषणमुक्तं पुरुषैरात्मभावावसानदुर्बलैः शमयितुमशक्यत्वाद् उपर्युपरि वर्धमानत्वं द्योतयति । तादृशं प्रदीप्तं मदनविषानलं नराकृतिस्थिताभिः स्त्रीभिः संशान्तिं नयति । नराकृतिस्थिताभिरिति दृढसन्दानितजघनदेशस्थापिततूलगर्भमूषिकादिमृदुचर्मकृतकृत्रिमलिङ्गाभिः चुम्बनचूषणनखक्षतादिसुरतोपचारकुशलाभिः नरवच्चेष्टमानाभिरित्यर्थः । अत्र योगेऽपि शुभयोगनिरीक्षणाभ्याम् असितसितयोर्बलाबलवशेन च तारतम्यं द्रष्टव्यम्[1] । एतद्योगद्वयं पुरुषजातकेऽपि चिन्तनीयम् ॥ ७ ॥

अस्तमये पतिश्चेति यदुक्तं तद्विज्ञानं शार्दूलविक्रीडितेनाह —

**शून्ये कापुरुषोऽबलेऽस्तभवने सौम्यग्रहावीक्षिते**
**क्लीबोऽस्ते बुधमन्दयोश्चरगृहे नित्यं प्रवासान्वितः ।**
**उत्सृष्टा तरणौ कुजे तु विधवा बाल्येऽस्तराशौ स्थिते**
**कन्यैवाशुभवीक्षितेऽर्कतनये द्यूने जरां गच्छति ॥ ८ ॥**

इति । अस्तभवने शून्ये अबले सौम्यग्रहावीक्षिते सति कापुरुषः पतिर्भवति इत्यन्वयः । शून्यत्वं ग्रहरहितत्वम् । अबले बलरहिते च सति सौम्यग्रहावीक्षिते शुभग्रहदृष्टिरहितेऽपि सति यः कश्चित् कापुरुषः कुत्सितपुरुषः पतिर्भवति । अस्तराशेर्बलवत्त्वं शुभग्रहदृष्टिश्चात्रापवादो भवतीत्यभिप्रायः । अशून्यत्वेऽपि पापग्रहयोगफलमाह — अस्ते बुधमन्दयोः क्लीबः षण्डः । अस्ते चरगृहे सति भर्ता नित्यं प्रवासान्वितो भवति । चरग्रहणं स्थिरोभययोरपि स्वगुणप्रदर्शकत्वोपलक्षणम् । अस्ते तरणौ उत्सृष्टा भर्त्रा उपेक्षितेति यावत् । कुजे तु अस्तराशौ[2] स्थिते सति बाल्ये विधवा भवति । अर्कतनये अशुभवीक्षिते द्यूने सति कन्यैव जरां गच्छति । शनैश्चरे सप्तमस्थे अर्कभौमयोरन्यतरेण दृष्टे सति जाता स्त्री कन्यैव जरां गच्छतीत्यर्थः[3] ॥ ८ ॥

1. 'मू ॥ ७ ॥ ख. ग. पाठः. २. 'शि' क. पाठः. ३. 'त्यर्थः । आ' ख. ग. पाठः

पुनरपि विशेषं शार्दूलविक्रीडितेनाह —

आग्नेयैर्विधवास्तराशिसहितैर्मिश्रैः पुनर्भूर्भवेत्
क्रूरे हीनबलेऽस्तगे स्वपतिना सौम्येक्षिते प्रोज्झिता ।
अन्योन्यांशगयोः सितावनिजयोरन्यप्रसक्ताङ्गना
द्यूने वा यदि शीतरश्मिसहिते भर्तुस्तदानुज्ञया ॥ ९ ॥

इति । अस्तराशिसहितैराग्नेयैः विधवा भवतीत्यन्वयः । आग्नेयः सूर्यः भौमश्च । बहुवचनग्रहणेन 'शिखीति केतुरि' ति संज्ञाध्याये निर्दिष्टस्तमोग्रहः केतुरत्र गृह्यते । आग्नेयैरर्ककुजकेतुभिरित्यर्थः । मिश्रैः पुनर्भूर्भवेद् आग्नेयैः सौम्यैश्च मिश्रैः पुनर्भूः, प्रथमस्य भर्तुरपायेऽन्येन परिणीता पुनर्भूः तथा भवतीत्यर्थः । हीनबले क्रूरे अस्तगे सौम्येक्षिते सति विधवा न भवति । किन्तु स्वपतिना प्रोज्झिता उपेक्षिता भवतीत्यर्थः । सितावनिजयोरन्योन्यांशगयोः सतोः जाता अङ्गना अन्यप्रसक्ता भवति । अन्योन्यांशगयोः सितांशगते अवनिजे अवनिजांशगते सिते चेत्यर्थः । अथवा तौ सितावनिजौ द्यूने द्यूनराशौ शीतरश्मिसहितौ यदि भवतः अस्तराशौ चन्द्रः कुजः सितश्च यदि सह तिष्ठन्ति तदा जाताङ्गना भर्तुरनुज्ञया अन्यप्रसक्ता भवति अन्यस्मिन् पुरुषे प्रकर्षेण सक्ता भवतीत्यर्थः[1] ॥ ९ ॥

अथ बन्धकीत्वादिलक्षणं शालिन्याह —

सौरारर्क्षे लग्नगे सेन्दुशुक्रे
मात्रा सार्धं बन्धकी पापदृष्टे ।
कौजेऽस्तांशे सौरिणा व्याधियोनि-
श्चारुश्रोणी वल्लभा सद्ग्रहांशे ॥ १० ॥

इति । सेन्दुशुक्रे पापदृष्टे सौरारर्क्षे लग्नगे सति मात्रा सार्धं बन्धकी भवतीत्यन्वयः । सौरारर्क्षे सौरस्य वा आरस्य वा ऋक्षे मेषवृश्चिकमकरकुम्भेष्वन्यतमे[2] लग्नगे लग्नत्वं प्राप्ते चन्द्रेण शुक्रेण च युक्ते क्रूरग्रहदृष्टे च सति जाता मात्रा सार्धं[3] मात्रा सह माता च स्वयं च

१. 'त्यर्थः ॥ सौ' ख. ग. पाठः. २. 'कुम्भानामन्य', ३. 'र्धं बन्धकी माता' क. ग. पाठः.

बन्धकी भवति पुंश्चली भवतीत्यर्थः । सुभगतास्तमये इत्युक्तं विवृणोति — अस्ते कौजांशे सौरिणा व्याधियोनिर्भवतीत्यन्वयः । अस्तलग्नस्य अस्तमयमाने कुजसम्बन्धिन्यंशके सौरिणा युक्ते सति व्याधियोनिः योनिरोगयुक्ता भवति । अस्ते सद्ग्रहांशे चारुश्रोणी वल्लभा भवति । अस्तराशौ शुभग्रहस्यांशके अस्तमयति सति सुभगा भवतीत्यर्थः ॥ १० ॥

अस्तराश्यंशकवशेन स्त्रीणां पतिविशेषान्[२] शालिन्याह —

**वृद्धो मूर्खः सूर्यजर्क्षेंऽशके वा**
**स्त्रीलोलः स्यात् क्रोधनश्चावनेये ।**
**शौक्रे कान्तोऽतीव सौभाग्ययुक्तो**
**विद्वान् भर्ता नैपुणज्ञश्च बौधे ॥ ११ ॥**

इति । सूर्यजर्क्षे अंशके वा अस्तमये स्थिते सति वृद्धः मूर्खश्च भर्ता भवतीत्यन्वयः । वृद्धो वयोधिकः । मूर्खो ज्ञानरहितः । आवनेये राशौ अंशके वा अस्तमये स्थिते सति स्त्रीलोलः क्रोधनश्च भर्ता स्यादित्यन्वयः । (अ ? आ)वनेये आवनेयसम्बन्धिनि भौमक्षेत्रे अंशके वा इत्यर्थः । स्त्रीलोलः स्त्रीषु चपलः क्रोधनः क्रोधशीलः । शौक्रे राशौ अंशके वा अस्तमये स्थिते सति कान्तः अतीव सौभाग्ययुक्तः स्यात् । कान्तः कमनीयः अत्यन्तं सौभाग्ययुक्तश्च भर्ता भवति । बौधे राशौ अंशके वा अस्तमये स्थिते सति विद्वान् नैपुणज्ञश्च भर्ता स्यात् । नैपुणज्ञः कौशलज्ञः ॥ ११ ॥

पुनरपि विशेषं पुष्पिताग्रयाह —

**मदनवशगतो मृदुश्च चान्द्रे**
**त्रिदशगुरोर्गुणवान् जितेन्द्रियश्च ।**
**अतिमृदुरतिकर्मकृच्च सिंहे**
**भवति गृहेऽस्तमये स्थितेंऽशके वा ॥ १२ ॥**

इति । चान्द्रे राशौ अंशके वा अस्तमये स्थिते सति मदनवशगतः मृदुश्च भर्ता स्यात् । मदनवशगतः कामाधीनः मृदुः मार्दव-

१. 'जें' क. ग. पाठः. २. 'षमाह —' ख. ग. पाठः. ३. 'ज्ञश्च भर्ता भवति ॥ ११ ॥' क. पाठः.

गुणयुक्तश्च भवति । त्रिदशगुरोः राशौ अंशके वा अस्तमये स्थिते सति गुणवान् जितेन्द्रियश्च भर्ता भवति । जितेन्द्रियः स्ववशेन्द्रियः । सिंहे राशावंशके वा अस्तमये स्थिते सति अतिमृदुः अतिकर्मकृच्च भवति । अतिमृदुः मृदुमतिक्रान्तः कठिनस्वभाव इत्यर्थः । अतिकर्मकृद् बहुव्यापारकारी ॥ १२ ॥

अथ वपुस्तु लग्नेन्दुगमित्युक्तं विवरीतुं वसन्ततिल(केना ? कमा)ह—

ईर्ष्यान्विता सुखपरा च सितेन्दुलग्ने
ज्ञेन्द्वोः कलासु निपुणा सुखिता गुणाढ्या ।
शुक्रज्ञयोस्तु सुभगा रुचिरा कलाज्ञा
त्रिष्वप्यनेकवसुसौख्यगुणा शुभेषु ॥ १३ ॥

इति । सितेन्दुलग्ने[3] ईर्ष्यान्विता सुखपरा च भवति । ईर्ष्यान्विता अक्षमा ईर्ष्या । ज्ञेन्द्वोर्लग्नगतयोः कलासु निपुणा सुखिता गुणाढ्या च भवति । कलासु आभ्यन्तरीषु बाह्यासु च चतुष्षष्टिकलासु च निपुणा । शुक्रज्ञयोः लग्नगतयोस्तु सुभगा रुचिरा कलाज्ञा च भवति । त्रिष्वपि शुभेषु लग्नगतेषु अनेकवसुसौख्यगुणा भवति । त्रिषु ज्ञेन्दुशुक्रेषु त्रिष्वपि अनेकानि वसूनि सौख्यानि गुणाश्च यस्याः सा[4] तथा ॥ १३ ॥

भर्तृमरणं निधने इति यदुक्तं तद्विज्ञानार्थं वसन्ततिल(केना ? कमा)ह —

क्रूरेऽष्टमे विधवता निधनेश्वरोंऽशे
यस्य स्थितो वयसि तस्य समे प्रदिष्टा ।
सत्स्वर्थगेषु मरणं स्वयमेव तस्याः
कन्यालिगोहरिषु चाल्पसुतत्वमिन्दौ ॥ १४ ॥

इति । क्रूरे अष्टमे स्थिते सति जातायाः विधवता वैधव्यं भवति । क्रूरे क्रूरग्रहे । तद् वैधव्यं कस्मिन् काले भवतीत्यत्राह — निधनेश्वरः यस्य अंशे स्थितः तस्य अंशाधिपस्य समे वयसि सा विधवता प्रदिष्टा ।

---

१. 'शयेन मृदुरकठि' क. पाठः. २. 'रा शशिशुक्ल', ३. 'शशिशुक्ल' ख. पाठः. ४. 'सा अनेकवसुसौख्यगुणा' क. ग. पाठः.

निधनेश्वरः अष्टमाधिपतिः यस्य ग्रहस्य अंशे स्थितः तस्य तुल्ये वयसि यथोक्ते निसर्गदशाकाले । चन्द्रारेन्दुजानां बाल्ये शुक्रस्य यौवने गुरोर्मध्यवयसि सूर्यस्य वार्धके मन्दस्यातिवार्धक इत्यर्थः । अत्र केचिद् दशान्तर्दशाकालौ वयःशब्देन ब्रुवते । अष्टमाधिपतिर्यस्यांशके व्यवस्थितः तस्य यान्तर्दशा तस्यां विवाहात् परं विधवता प्रदिष्टेति । सत्सु अर्थगेषु तस्याः स्वयमेव मरणं भवति । क्रूरग्रहे अष्टमगते शुभग्रहे धनगते च सति तस्याः स्त्रियाः स्वयमेव मरणम् आत्ममरणमेव भवति न वैधव्यमित्यर्थः । कन्यालिगोहरिषु इन्दौ अल्पसुतत्वं भवति कन्याचन्द्रे वृश्चिकचन्द्रे वृषभचन्द्रे सिंहचन्द्रे च जातायाः स्त्रिया अल्पसुतत्वं भवतीति दिङ्मात्रेण सन्तानचिन्ता दर्शिता । स्त्रीणामन्यशास्त्रेषूक्तं नवमभावस्य पुत्रस्थानत्वम् । यथा —

"सौन्दर्यं लग्नगृहे पतिसौभाग्यं सुखं च जामित्रे ।
वैधव्यं निधनगृहे विचिन्तयेत् पुत्रसम्पदं नवमे ॥"

इति । एतदाचार्येणात्र न दर्शितम् । 'गुरौ त्रिकोणोदयधर्मगेऽपि वा'[1] इत्यत्र स्त्रीपुरुषयोः सामान्येन सन्तानचिन्तायांस्त्रिकोणविषयत्वस्य[2] सूचितत्वात् ॥ १४ ॥

पुनरपि स्त्रीगतं विशेषं शार्दूलविक्रीडितेनाह —

**सौरे मध्यबले बलेन रहितैः शीतांशुशुक्रेन्दुजैः**
**शेषैर्वीर्यसमन्वितैः पुरुषिणी यद्योजराश्युद्गमे ।**
**जीवारास्फुजिदैन्दवेषु बलिषु प्राग्लग्नराशौ समे**
**विख्याता भुवि नैकशास्त्रकुशला स्त्री ब्रह्मवादिन्यपि [॥ १५ ॥**

इति । सौरे मध्यबले शीतांशुशुक्रेन्दुजैः बलेन रहितैः शेषैः वीर्यसमन्वितैश्च ओजराश्युद्गमे जाता यदि पुरुषिणी भवतीत्यन्वयः । ओजराश्युद्गमे मेषमिथुनादिपुरुषराश्युदये शीतांशुशुक्रयोः स्त्रीग्रहयोः स्त्रीनपुंसकस्य बुधस्य च बलशून्यत्वे सति तथा पुन्नपुंसकस्य सौरस्य मध्यबलत्वे च सति पुरुषग्रहाणाम् अर्कारगुरूणां वीर्याधिकत्वे च सति जाता स्त्री पुरुषिणी भवति पौरुषयुक्ता भवतीत्यर्थः । प्राग्लग्नराशौ समे

१. 'मभवने प' क. ग. पाठः.   २. 'यां त्रिको' ख. पाठः.

वृषकुलीरादिस्त्रीराशीनामन्यतमे सति जीवारास्फुजिदैन्दवेषु गुरुकुज-शुक्रबुधेषु बलिषु वीर्यान्वितेषु सत्सु जाता स्त्री भुवि विख्याता नैक-शास्त्रकुशला बहुशास्त्रकुशला ब्रह्मवादिन्यपि भवति ॥ १५ ॥

अथ प्रव्रज्यायोगज्ञानार्थं प्रहर्षिणीमाह —

**पापेऽस्ते नवमगतग्रहस्य तुल्यां**
**प्रव्रज्यां युधतिरुपैत्यसंशयेन ।**
**उद्वाहे वरणविधौ प्रदानकाले**
**चिन्तायामपि सकलं विधेयमेतत् ॥ १६ ॥**

इति । पापे अस्ते सति जाता स्त्री नवमगतग्रहस्य तुल्यां प्रव्रज्यामसंशयेनोपैतीत्यन्वयः । नवमगतग्रहस्य तुल्यामिति नवमगते भौमे शाक्यपरिव्राजिका भवतीत्यादि पूर्वं भौमादीनां प्रदर्शिताः शाक्यादिप्रव्रज्याविशेषा भवन्तीत्यर्थः । एतदत्र स्त्रीजातकाध्यायोक्तं सकलम् उद्वाहे वरणविधौ प्रदानकाले चिन्तायामपि (सकलं ?) विधेयम् । मुहूर्तलग्ने प्रश्नलग्ने च योजनीयमित्यर्थः । एवमुक्तेषु द्वाविंशत्यध्यायेषु राशिग्रहवियोन्यध्यायरहितैरेकोनविंशत्यध्यायैरुक्तानि जातकलक्षणानि सामान्यविशेषरूपतया "विप्रतिषेधे परं कार्यमि"ति न्यायेन परस्परविरोधरहितानि सर्वाण्यपि मुहूर्तविषये प्रश्नविषये च यथासम्भवं योजयितव्यानीति उद्वाहे वरणविधौ प्रदानकाले चिन्तायामपि सकलं विधेयमेतदित्यनेन द्योत्यते ॥ १६ ॥

इति होराविवरणे स्त्रीजातकाख्यो द्वाविंशोऽध्यायः ॥

---

## अथ त्रयोविंशोऽध्यायः ।

जातस्य हि ध्रुवो मृत्युरित्यवश्यभाविनः पूर्वानीतायुर्दायकालावसानसम्भवस्य शरीराज्जीवात्मनिर्याणस्वरूपस्य मृत्योर्लक्षणमिदानीं त्रयोविंशाध्यायेन प्रदर्श्यते । तत्र प्रथमं निर्याणकारणं निर्याणदेशं च सामान्येन शार्दूलविक्रीडितेनाह —

**मृत्युर्मृत्युगृहेक्षणेन बलिभिस्तद्धातुकोपोद्भव-**
**स्तत्संयुक्तभगात्रजो बहुभवो वीर्यान्वितैर्भूरिभिः ।**

---

१. 'निपुणा ब्रह्मवादिनी मोक्षशास्त्रकुशलेत्यर्थः ॥ १५ ॥' क. पाठः. २. 'नोपदिशति —' ख. ग. पाठः.

अग्न्यम्ब्वायुधजो ज्वरामयकृतस्तृट्क्षुत्कृतश्चाष्टमे
सूर्याद्यैर्निधने चरादिषु परस्वाध्वप्रदेशेष्विति ॥ १ ॥

इति । मृत्युगृहेक्षणेन मृत्युर्भवतीत्यन्वयः । मृत्युगृहस्य अष्टम-स्थानस्य ग्रहकृतेनेक्षणेन[1] जातस्य मृत्युरादेष्टव्यः । केन ग्रहेण कृतेने-त्याशङ्कायामाह[2] — बलिभिरिति । अष्टमनिरीक्षकेषु ग्रहेषु यो बला-धिकः तत्कृतेन मृत्युगृहेक्षणेन मृत्युः । ईक्षणेन कथं मृत्युरित्यत्राह — तद्धातुकोपोद्भव इति । यो ग्रहो मृत्युगृहं पश्यति तस्य धातोः संज्ञा-ध्यायोक्तस्य वातादेः कोपेन उद्भवो यस्य स तद्धातुकोपोद्भवः । सूर्यो बलवान् मृत्युगृहं पश्यति चेत् पित्तकोपोद्भवो मृत्युः, चन्द्रः पश्यति चेद् वातानुगतकफकोपोद्भवः, कुजश्चेत् पित्तोद्भवः, बुधश्चेद् वातपित्त-कफोद्भवः, गुरुश्चेत् कफोद्भवः, शुक्रश्चेत् कफवातोद्भवः, शनैश्चरो मृत्यु-गृहं पश्यति चेत् कफानुगतवातोद्भव इति द्रष्टव्यम् । तद्धातुकोपोद्भवः शरीरे कुत्रेत्यत्राह — तत्संयुक्तभगात्रज इति । तेन मृत्युगृहेक्षकग्रहेण संयुक्ते वराङ्गादिगात्रे कुपितेन पित्तादिना जनितः तत्संयुक्तभगात्रजः । तथाविधो मृत्युर्भवतीत्यर्थः । मृत्युगृहं बहवः पश्यन्ति चेत् कथमि-त्यत्राह — वीर्यान्वितैः भूरिभिः बहुभवो मृत्युः वीर्यान्विता बहवो ग्रहा मृत्युगृहेक्षका भवन्ति चेद् बहुभवः तत्तदुक्तधातुकोपैः तत्तदधि-ष्ठिताङ्गभवैः बहुभिः कारणैः सम्भूतो मृत्युरादेष्टव्यः । मृत्युगृहेक्षकै-रिति सामान्येन मृत्युकारणमुक्त्वा मृत्युगृहावस्थितैस्तद्विशेषमाह — अष्टमे सूर्याद्यैरग्न्यम्ब्वायुधजः ज्वरामयकृतः तृट्क्षुत्कृतश्च मृत्युर्भव-तीत्यन्वयः । अष्टमस्थेन[3] सूर्येण अग्निजः बाह्याग्निना जठराग्निना वा जनितः । चन्द्रेणाम्बुकृतः बाह्यजलेन अन्तर्जलकोपेन वा जनितः । कुजेन आयुधकृतः । अष्टमस्थेन बुधेन ज्वरकृतः । गुरुणा (आमयकृतः) आ-मयोऽपरिज्ञातव्याधिः तेन कृतः । अष्टमस्थेन शुक्रेण तृट्कृतः पिपा-साकृतः । मन्देन क्षुत्कृतः क्षुधाकृतो मृत्युरादेष्टव्यः । निर्याणदेश-माह — निधने चरादिषु परस्वाध्वप्रदेशेष्विति । अष्टमराशौ चरगृहे परदेशे मृत्युः, स्थिरगृहे स्वदेशे मृत्युः, उभयगृहे अध्वप्रदेशे मृत्युः ।

१. 'तेत्या' क. ग. पाठः. २. 'त्याह —' ग. पाठः. ३. 'स्थाने सू' क. पाठः.

इतिशब्दः प्रकारवचनः । "इति हेतुप्रकरणप्रकारादिसमाप्तिषु"[1] इति यादवः ॥ १ ॥

इति मृत्युस्थानग्रहयोगेक्षणाभ्यां सामान्येन मृत्युकारणमुक्त्वा विचित्राणि मृत्यु-कारणानि[2] शार्दूलविक्रीडितेनाह—

**शैलाग्राभिहतस्य सूर्यकुजयोर्मृत्युः खबन्धुस्थयोः**
**कूपे मन्दशशाङ्कभूमितनयैर्बन्ध्वस्तकर्मस्थितैः ।**
**कन्यायां स्वजनाद्धिमोष्णकरयोः पापग्रहैर्दृष्टयोः**
**स्यातां यद्युभयोदयेऽर्कशशिनौ तोये तदा मज्जतः ॥**

इति । सूर्यकुजयोः खबन्धुस्थयोः शैलाग्राभिहतस्य मृत्युः[3] स्यादित्यन्वयः । दशमे सूर्ये चतुर्थे कुजे च सति जातस्य शैलाग्राभिघातेन मृत्युः स्यादित्यर्थः । मन्दशशाङ्कभूमितनयैः बन्ध्वस्तकर्मस्थितैः कूपे मृत्युः मन्दे चतुर्थे सप्तमे चन्द्रे दशमे कुजे च स्थिते सति जातस्य कूपे मृत्युः । कन्यायामुदये हिमोष्णकरयोः पापग्रहैर्दृष्टयोश्च सतोः स्वजनान्मृत्युर्भवति । उभयोदये मीनराशावुदयस्थे अर्कशशिनौ पापदृष्टौ यदि स्यातां तदा तोये मज्जतो मृत्युर्भवति ॥ २ ॥

राशिग्रहयोगकृतानि मृत्युकारणानि शार्दूलविक्रीडितेनाह—

**मन्दे कर्कटके जलोदरकृतो मृत्युर्मृगाङ्के मृगे**
**शस्त्राग्निप्रभवः शशिन्यशुभयोर्मध्ये कुजर्क्षस्थिते ।**
**कन्यायां रुधिरोत्थशोषजनितस्तद्वत् स्थिते शीतगौ**
**सौरर्क्षे यदि तद्वदेव हिमगौ रज्ज्वग्निपातैर्वधः ॥ ३ ॥**

इति । मन्दे कर्कटके मृगाङ्के मृगे[4] च सति जातस्य मृत्युः जलोदरकृतः जलोदराख्येन महोदरव्याधिविशेषेण कृतो मृत्युर्भवतीत्यन्वयः । तथा शशिनि अशुभयोर्मध्ये कुजर्क्षस्थिते सति जातस्य शस्त्राग्निप्रभवः शस्त्रेणाग्निना वा निमित्तभूतेन जातो मृत्युः स्यात् । शीतगौ कन्यायामशुभयोर्मध्ये तद्वत् स्थिते सति रुधिरोत्थशोषजनितो मृत्युर्भवति रुधिरोत्थितेन शोषेण जनितो मृत्युर्भवति । सौरर्क्षे हिमगौ तद्वदेव

१. 'त्यमरः ॥ १ ॥' ख. पाठः. २. 'न्युपदिशति श्लोकनवकेन' ख. ग. पाठः. ३. 'त्युः द', ४. 'ह', ५. 'मकरे च' क. पाठः.

स्थिते जातो यदि तस्य रज्ज्वग्निपातैर्वधो भवति । रज्ज्वग्निपातैः रज्जुना अग्निना पातेन वा मरणं भवति ॥ ३ ॥

अथान्यानरिष्टयोगान् शार्दूलविक्रीडितेनाह —

**लग्नाद्धीनवमस्थयोरशुभयोः सौम्यग्रहादृष्टयो-**
**र्द्रेक्काणैश्च सपाशसर्पनिगलैश्छिद्रस्थितैर्बन्धनात् ।**
**कन्यायामशुभान्वितेऽस्तमयगे चन्द्रे सिते मेषगे**
**सूर्ये लग्नगते च विद्धि मरणं स्त्रीहेतुकं मन्दिरे ॥ ४ ॥**

इति । अशुभयोर्लग्नाद्धीनवमस्थयोः सौम्यग्रहादृष्टयोः सतोः जातस्य छिद्रस्थितैः सपाशसर्पनिगलैर्द्रेक्काणैश्च निमित्तभूतैः बन्धनान्मृत्युर्भवतीत्यन्वयः । अशुभान्विते चन्द्रे कन्यायामस्तमयगे सिते मेषे स्थिते च सूर्ये लग्नगते च सति जातस्य मन्दिरे स्त्रीहेतुकं मरणं विद्धीत्यन्वयः ॥ ४ ॥

अथान्यानरिष्टयोगान् शार्दूलविक्रीडितेनाह —

**शूलोद्भिन्नतनुः सुखेऽवनिसुते सूर्येऽपि वा खे यमे**
**सप्रक्षीणहिमांशुभिश्च युगपत्पापैस्त्रिकोणाद्यगैः ।**
**बन्धुस्थे च रवौ वियत्यवनिजे क्षीणेन्दुसंवीक्षिते**
**काष्ठेनाभिहतः प्रयाति मरणं सूर्यात्मजेनेक्षिते ॥ ५ ॥**

इति । सुखे अवनिसुते सूर्ये वा स्थिते तथा खे दशमे यमे मन्दे च स्थिते सति शूलोद्भिन्नतनुः मरणं प्रयातीत्यन्वयः । सप्रक्षीणहिमांशुभिः पापैः क्षीणचन्द्रसहितैः अर्कारमन्दैर्युगपत् त्रिकोणाद्यगैः त्रिकोणयोर्लग्ने च स्थितैश्च शूलोद्भिन्नतनुर्मरणं प्रयाति । लग्नपञ्चमनवमेषु यथासम्भवं स्थितैः क्षीणेन्द्वर्कारमन्दैश्च शूलमरणं भवतीत्यर्थः । बन्धुस्थे रवौ अवनिजे वियति दशमेस्थिते क्षीणेन्दुसंवीक्षिते च सति जातः शूलोद्भिन्नतनुर्मरणं प्रयाति । अत्रैव योगे क्षीणेन्दुसंवीक्षितत्वं विना सूर्यात्मजेनेक्षिते सति काष्ठेनाभिहतो मरणं प्रयाति । अत्र चतुर्थस्थे रवौ दशमस्थे भौमे च द्वौ योगावुक्तौ । तत्रैको भौमस्य क्षीण-

१., २. 'ससर्पपाशनि' ख. पाठः. ३. 'मे', ४. 'णमेति' क. ग. पाठः.

चन्द्रदृष्टत्वे सति शूलमरणफलः, अपरो भौमस्य सूर्यात्मजदृष्टत्वेन काष्ठाभिघातान्मरणप्रद इति । अत्र श्लोके शूलमरणयोगास्त्रयः प्रदर्शिताः काष्ठान्मरणयोगश्चैकः ॥ ५ ॥

अथान्यानरिष्टयोगान् वसन्ततिलकेनाह —

**रन्ध्रास्पदाङ्गहिबुकैर्लकुटाहताङ्गः**
**प्रक्षीणचन्द्ररुधिरार्कसुतार्कयुक्तैः ।**
**तैरेव कर्मनवमोदयपुत्रसंस्थै-**
**र्धूमाग्निबन्धनशरीरनिकुट्टनान्तः ॥ ६ ॥**

इति । रन्ध्रास्पदाङ्गहिबुकैः प्रक्षीणचन्द्ररुधिरार्कसुतार्कयुक्तैः लकुटाहताङ्गः मरणं प्रयाति । रन्ध्रे क्षीणेन्दुना दशमे भौमेन लग्ने अर्कसुतेन चतुर्थे अर्केण च युक्ते सति जातः लकुटाहताङ्गो मरणं प्रयाति । लकुटो दण्डविशेषः । तैरेव तैः प्रक्षीणचन्द्ररुधिरार्कसुतार्कैरेव यथाक्रमं कर्मनवमोदयपुत्रसंस्थैः जातस्य धूमाग्निबन्धनशरीरनिकुट्टनान्तो भवति, धूमेन अग्निना वा बन्धनेन वा शरीरनिकुट्टनेन वा अन्तो मृत्युर्भवति । शरीरनिकुट्टनं काष्ठपाषाणादिभिः शरीराभिहननम् ॥ ६ ॥

अथान्यानप्यरिष्टयोगान् वसन्ततिलकेनाह —

**बन्ध्वस्तकर्मसहितैः कुजसूर्यमन्दै-**
**र्निर्याणमायुधशिखिक्षितिपालकोपात् ।**
**ज्ञेयः क्षतक्रिमिकृतश्च शरीरपातः**
**सौरेन्दुभूमितनयैः स्वसुखास्पदस्थैः ॥ ७ ॥**

इति । बन्ध्वस्तकर्मसहितैः कुजसूर्यमन्दैरायुधशिखिक्षितिपालकोपात् निर्याणं बन्ध्वादिभिः यथाक्रमं कुजादियुक्तैः जातस्यायुधेनाग्निना राजकोपेन वा निर्याणं भवतीत्यर्थः । सौरेन्दुभूमितनयैः यथाक्रमं स्वसुखास्पदस्थैः जातस्य शरीरपातः क्षतक्रिमिकृतः ज्ञेयः, क्षतभवैः क्रिमिभिः कृतो ज्ञेयः ॥ ७ ॥

---

१. 'यः का', २. 'रह्' ख. पाठः.

अथान्यानप्यरिष्टयोगान् शार्दूलविक्रीडितेनाह —

**खस्थेऽर्केऽवनिजे रसातलगते यानप्रपाताद् वधो**
**यन्त्रोत्पीडनजः कुजेऽस्तमयगे सौरेन्द्विनाभ्युद्गमे ।**
**विण्मध्ये रुधिरार्किशीतकिरणैर्जूकाजसौरर्क्षगै-**
**र्यातैर्वा गलितेन्दुसूर्यरुधिरैर्व्योमास्तबन्ध्वाह्वयान् ॥ ८॥**

इति । खस्थे अर्के अवनिजे रसातलगते यानप्रपाताद् वधः यानाद् हयगजरथशिबिकाद्यन्यतमात् प्रपातेन वधो भवति । अत्र पूर्वं 'शैलाग्राभिहतस्य सूर्यकुजयोर्मृत्युः खबन्धुस्थयोरि'त्यत्रोक्तस्य योगस्य पुनरप्युपादानेन फलान्तरनिर्देशेन च सर्वेषामत्रोक्तानां योगानां राश्यंशयोगेक्षणवशाद् व्यभिचारो बुद्धिमद्भिरभ्यूह्य इति द्योत्यते । कुजे अस्तमयगे सौरेन्द्विनाभ्युद्गमे यन्त्रोत्पीडनजो वधः । चन्द्रादित्यमन्दानामुदये सप्तमस्थे कुजे च जातस्य यन्त्रोत्पीडनजो वधो भवति । यन्त्रोत्पीडनजः कुजेऽस्तमयगे क्षीणेन्दुसंवीक्षिते इति[1] वा पाठः । रुधिरार्किशीतकिरणैः जूकाजसौरर्क्षगैः जातः विण्मध्ये म्रियते सौरर्क्षं मकरो वा कुम्भो वा । विण्मध्ये मलमध्ये । गलितेन्दुसूर्यरुधिरैः व्योमास्तबन्ध्वाह्वयान् यातैर्वा विण्मध्ये म्रियते । गलितेन्दुः गलितशब्देन बलशून्यत्वमत्रोच्यते । विण्मध्यमरणं मरणवेलायाम् अकृतशौचस्य मलमध्यशायित्वम् ॥ ८ ॥

अथान्यानप्यरिष्टयोगान् वैतालीयेनाह —

**वीर्यान्वितवक्रवीक्षिते**
**क्षीणेन्दौ निधनस्थितेऽर्कजे ।**
**गुह्योद्भवरोगपीडया**
**मृत्युः स्यात् कृमिशस्त्रदाहजः ॥ ९ ॥**

इति । क्षीणेन्दौ वीर्यान्वितवक्रवीक्षिते अर्कजे निधनस्थिते सति गुह्योद्भवरोगपीडया कृमिशस्त्रदाहजः मृत्युः स्यादित्यन्वयः । चन्द्रस्य क्षीणत्वं बलवत्कुजदृष्टिश्च यत्र तत्र स्थितस्यापि रक्तकोपकरत्वं जनयति । अर्कजस्य अष्टमराशिगतस्य व्यञ्जनहानिकरत्वं

१. 'नां रा' क. ग. पाठः. २. 'ध्ये मृत्युः । जूकगते अजगते सौ' ग. पाठः.

च युगपत् सम्भवति चेद् गुह्यरोगेण कृमिशस्त्रदाहजनितः मृत्युर्भवतीत्यर्थः ॥ ९ ॥

अथान्यानप्यरिष्टयोगान् वसन्ततिलकेनाह—

**अस्ते रवौ सरुधिरे निधनेऽर्कपुत्रे**
**क्षीणे रसातलगते हिमगौ खगान्तः ।**
**लग्नात्मजाष्टमतपःस्विनभौममन्द-**
**चन्द्रैस्तु शैलशिखराशनिकुड्यपातैः ॥ १० ॥**

इति । रवौ अस्तगते सरुधिरे अर्कपुत्रे निधनस्थिते क्षीणे हिमगौ रसातलगते च जातस्य खगान्तः खगैरन्तो भवति पक्षिभिर्भक्ष्यमाणस्य मरणं भवतीत्यर्थः । इनभौममन्दचन्द्रैः यथाक्रमं लग्नात्मजाष्टमतपस्सु स्थितैः जातस्य शैलशिखराशनिकुड्यपातैरन्तो भवति । शैलशिखरपतनेन वा अशनिपतनेन वा कुड्यपतनेन वा मृत्युर्भवतीत्यर्थः ॥ १० ॥

एवमत्रोक्तानां विचित्रमृत्युकारणयोगानामभावे पूर्वप्रदर्शितयोर्मृत्युगृहस्य ग्रहयोगेक्षणयोरप्यभावे सति ध्रुवत्वेन भाविनः मृत्योः कारणं वैतालीयेनाह —

***द्वाविंशतिमस्तु कारणं**
**द्रेक्काणो निधनस्य सूरिभिः ।**
**तस्याधिपतिर्भपोऽपि वा**
**निर्याणं स्वगुणैः प्रयच्छति ॥ ११ ॥**

इति । द्वाविंशतिमो द्रेक्काणस्तु निधनस्य कारणं सूरिभिः कथित इति शेषः । द्वाविंशतिमः जन्मद्रेक्काणादारभ्य द्वाविंशतिमः अष्टमराशिस्थो द्रेक्काण इति यावत् । स द्रेक्काणः मरणस्य कारणं कथितः । कथमित्यत्राह — तस्याधिपतिर्भपोऽपि वा स्वगुणैर्निर्याणं प्रयच्छतीत्यन्वयः । तस्याधिपतिः द्वाविंशतिमद्रेक्काणाधिपतिः भपोऽपि वा अष्टमराश्यधिपोऽपि वा स्वगुणैः यथोक्तैरात्मीयगुणैः वातादिभिर्निर्याणं प्रयच्छतीत्यर्थः ॥ ११ ॥

---

१. 'त्यर्थः ॥ ९ ॥ अस्ते' ख. ग. पाठः. २. 'द्रेक्ष' क. पाठः.

---

* 'द्वाविंशः कथितस्तु कारणम्' इत्यन्यत्र मुद्रितः पाठस्तु समीचीनः ।

परस्वाध्वप्रदेशेष्विति पूर्वं प्रदर्शितस्य विशेषकथनार्थं वसन्ततिल(केना ? कमा)ह—

**होरानवांशकपयुक्तसमानभूमौ**
**योगेक्षणादिभिरतः परिकल्प्यमन्यत् ।**
**मोहस्तु मृत्युसमयेऽनुदितांशतुल्यः**
**स्वेशेक्षिते द्विगुणितस्त्रिगुणः शुभैस्तु ॥ १२ ॥**

इति । होरानवांशकपयुक्तसमानभूमौ मरणं भवतीति सम्बन्धः । होरा लग्नं तत्र यो नवांशक उदीयमानः तस्य योऽधिपतिः स यत्र स्थितः तत्समानायां भूमौ मेषवृषयोर्दिवा अरण्यक्षेत्रे रात्रौ ग्रामे च इत्यादि राशीनां स्वस्वगोचरवशाद् वक्तव्यम् । अतोऽन्यदपि योगेक्षणादिभिः परिकल्प्यं ग्रहयोगेन च ग्रहेक्षणेन च तद्भूमिगता विशेषा वक्तव्याः । मृत्युसमये मोहस्तु निर्याणकाले मोहः इन्द्रियाज्ञानम् अनुदितांशतुल्यः लग्नराशौ यावन्तोंऽशका अनुदिताः तावन्तो मोहा भवन्ति अन्तरान्तरा ज्ञानसम्भवेन मोहानां बहुत्वम् । पुनरपि मोहप्रमाणमाह — स्वेशेक्षिते द्विगुणितः लग्नस्य लग्नाधिपदर्शने सति अनुदितांशतुल्या मोहा द्विगुणिता वक्तव्याः । शुभैस्तु त्रिगुणः लग्नस्य शुभदृष्टौ सत्याम् अनुदितांशतुल्यप्रमाणा मोहावस्थास्त्रिगुणा भवन्ति । अत्र प्रदर्शितैः कारणैरुत्पाद्यश्चरमोच्छ्वासकालः कदा भवतीति जिज्ञासायां पूर्वत्र प्रदर्शितायुर्दायाध्यायनिर्णेयस्यायुषोऽवसाने निर्याणमिति प्रतिपत्तिरङ्गीकर्तव्या । सा चायुर्वेदोपदेशेन विरुध्यते । तथाहि —

"मरणं प्राणिनां दृष्टमायुःपुण्योभयक्षयात् ।
तयोरप्यक्षयाद् दृष्टं विषमापरिहारिणाम् ॥"

अस्यार्थः । प्राणिनां मरणम् आयुःपुण्योभयक्षयाद् दृष्टम् । आयुःक्षये पुण्यक्षये आयुःपुण्ययोरुभयोरपि क्षये प्राणिनां मरणं दृष्टम् । अपिच — आयुःपुण्ययोः शेषे विद्यमानेऽपि विषमापरिहारिणां मरणं दृष्टम् इति । तस्मादवान्तरेषु दशान्तर्दशासन्धिषु च निर्याणं

---

१. 'स्य', २. 'श उ' ख. पाठः. ३. 'रा ज्ञा', ४. 'हः स्वे ग. पाठः. ५. 'त्र द' ख. पाठः.

भवतीति पूर्वाचार्यप्रदर्शितो मार्गः तदविरोधार्थमङ्गीकर्तव्यः । अथायुर्दायोक्तसङ्ख्याविशेषाणां सङ्ख्येयैः कालांशकैः सम्बन्धः । कालांशकाश्च बहुविधाः "अयनक्षणवासरर्तवो मासोऽर्धं च समाश्च भास्कराद्" इति प्रदर्शिताः । "अत्युत्कटैः पुण्यपापैरिहैव फलमश्नुते" इत्यादिवचनबलाद् अत्युत्कटपुण्यकरणेन मासवासरघटिका वर्षमासदिवसा भवेयुः । तथैवात्युत्कटपापकरणेन वर्षमासदिवसा मासदिवसघटिकाश्च भवेयुरित्यवगम्यते । अतो निर्याणकालज्ञानं पूर्वाचार्यप्रदर्शितैर्निर्याणयोगैः शनिगुरुरविचन्द्रचारानिष्पन्नैरपि निरूपणीयम् । तथाच पूर्वाचार्या ब्रुवते—

"लग्नपगुरुरविचन्द्रान् शशिना संयोज्य यद्भवेत्तारम् ।
शनिगुरुरविचन्द्राणां तस्मिन्नृक्षे किलान्त्य उच्छ्वासः ॥"

अत्रायं सम्प्रदायः जन्मकाले लग्नाधिपस्य गुरो रवेश्चन्द्रस्य च मन्दस्य च स्फुटवाक्यानि तत्कालगुलिकवाक्यं च पृथक् पृथग् विन्यस्य निर्याणयोगनिरूपणं क्रियते । तत्र प्रथमं लग्नस्फुटं मन्दस्फुटं च संयोज्य तस्मिन् गुलिकं च योजयेत् । तत्र यन्नक्षत्रं भवति तत्र निर्याणमन्दः । पुनस्तत्रैव गुरुं संयोज्य गुलिकं योजयेत् तन्नक्षत्रे निर्याणगुरुः । पुनरपि तत्रैव रविं संयोज्य गुलिकं योजयेत् तन्नक्षत्रे निर्याणरविः । पुनश्च तस्मिंश्चन्द्रं संयोज्य गुलिकं योजयेत् तन्नक्षत्रे निर्याणचन्द्रः । शनिगुरुरविचन्द्रेषु चारवशादेवमानीतनक्षत्रेषु यथाक्रमं युगपत् स्थितेषु सत्सु अन्त्योच्छ्वास इत्येको निर्याणयोगः । पुनरन्यथापि निर्याणलक्षणमुच्यते—

"लग्नाधिपस्थितनवांशकराशितुल्यं-
रन्ध्राधिपस्य गृहमापतितो घटेशः ।
तस्मिन्वदेन्मरणमेतदनेकशास्त्र-
संक्षुण्णभिन्नमतिभिः परिकीर्तितं तत् ॥

---

१. 'ताः । तेषाम् अत्यु' क. ग. पाठः. २. 'कं च यो' ख. पाठः. ३. 'ल्यं' ग. पाठः.

मृतीशनाथस्थितभांशकेशयोर्यमदृगाणाधिपयोर्बलीयसः(?) ।
दशागमे मृत्युपयुक्तभांशकत्रिकोणगे देवगुरौ तनुक्षयः ॥
प्राग्लग्नमान्दिस्फुटयोगभांशे निर्याणमासं प्रवदन्ति तज्ज्ञाः ।
निर्याणचन्द्रं गुलिकेन्दुयोगे राशिं च मान्दीन्दुविलग्नयोगे ॥"

इत्यादिषु पूर्वाचार्यप्रदर्शितेषु बहुविधेषु निर्याणयोगेषु स्वगुरूपदिष्टेन मार्गेण निर्याणसमयो निर्देष्टव्यः । निर्याणं नाम देहिनो जीवात्मनो देहात् शुक्लशोणितोत्पन्नात् पाञ्चभौतिकात् कियन्तं कालमावासभूतान्निर्गमनम् ॥ १२ ॥

तस्मिन् निर्याणे देहिनो देहस्य च पृथग्भावे सति शवभूतस्य देहस्य परिणामश्चतुर्विधो भवति । तत्रैकोऽग्निसंस्कारे भस्मीभावः । द्वितीयो जलगतत्वेन (क्ली ? क्ले)दीभावः । तृतीयो वातातपसंस्पर्शवशाच्छुष्कभावः । चतुर्थः क्रव्यादभक्षणवशान्मलीभाव इति । तेषां लक्षणं मालिन्याह—

दहनजलविमिश्रैर्भस्मसंक्लेदशोषै-
निधनभवनसंस्थैर्व्यालवर्गैर्विडन्तः ।
इति शवपरिणामश्चिन्तनीयो यथोक्तं
पृथुविरचितशास्त्राद् गत्यनूकं च चिन्त्यम् ॥ १३ ॥

इति । निधनभवनसंस्थैः दहनजलविमिश्रैः भस्मसंक्लेदशोषैः शवपरिणामः चिन्तनीय इत्यन्वयः । निधनभवनसंस्थैः अष्टमराशिस्थितैः दहनजलविमिश्रैः ग्रहैर्ग्रहवर्गैर्वा दहनग्रहैरर्ककुजकेतुभिः जलग्रहाभ्यां शशिशुक्राभ्यां मिश्रैः गुरुबुधमन्दैः निमित्तभूतैः भस्मसंक्लेदशोषैः यथाक्रमं भस्मत्वेन क्लेदत्वेन शुष्कत्वेन च शवपरिणामश्चिन्तनीयः । निधनभवनसंस्थैः व्यालवर्गैः विडन्त इति 'इतिशब्दः प्रकारवचने' निधनभवनसंस्थैः व्यालवर्गैः हिंस्रवर्गैः द्रेक्काणरूपैरिति यावत् । विडन्तो भवति शवभक्षैर्भक्षितत्वादन्ते विष्ठा भवतीत्यर्थः । अथ देहान्निर्गतस्य देहिन उत्तरावस्थां देहप्रवेशात् पूर्वावस्थां च संक्षेपेण सूत्रयति । पृथुविरचितशास्त्राद् यथोक्तं गत्यनूकं च चिन्त्यं पृथुविरचितशास्त्राद् यवनादिभिः पृथुत्वेन विरचिताच्छास्त्राद् यथोक्तं तत्र यथाप्रतिपादितं गत्यनूकं गतिरुत्तरावस्था अनूकं

१. 'ष्ठु नि' क. पाठः. २. 'ण हि स' ग. पाठः. ३. 'शवशा' ख. पाठः.

पूर्वजन्मावस्था एतद् द्वितयं च जन्मकालग्रहस्थितिवशेन चिन्तनीय-मित्यर्थः ॥ १३ ॥

तत्प्रकारं च संक्षेपेण मालिन्याह—

**गुरुरुडुपतिशुक्रौ सूर्यभौमौ यमज्ञौ**
**विबुधपितृतिरश्चो नारकीयांश्च कुर्युः ।**
**दिनकरशशिवीर्याधिष्ठितत्र्यंशनाथाः**
**प्रवरसमनिकृष्टास्तुङ्गभागादनूके ॥ १४ ॥**

इति । तत्र प्रथममनूकमाह—गुरुः उडुपतिशुक्रौ सूर्यभौमौ यमज्ञौ क्रमेण अनूके विबुधपितृतिरश्चः नारकीयांश्च कुर्युः इत्यन्वयः । तत्र गुरुरनूके देवं करोति देवलोकादागतं करोति । उडुपतिशुक्रौ पितृलोकादागतं कुरुतः । सूर्यभौमौ तिर्यञ्चः पशुपक्ष्यादयः तत्सङ्घादागतं कुरुतः । यमज्ञौ नारकीयान् नरकादागतं कुरुतः । पितृलोकशब्देन प्रेतभूतमानुषावस्थानदेश उच्यते । कीदृशा गुर्वादयो देवादीन् कुर्वन्तीत्यत्राह—दिनकरशशिवीर्याधिष्ठितत्र्यंशनाथा इति । दिनकरश्च शशी च दिनकरशशिनौ तयोर्यो वीर्यवान् तेनाधिष्ठितस्य त्र्यंशस्य द्रेकाणस्य योऽधिपतिः स दिनकरशशिवीर्याधिष्ठितत्र्यंशनाथः स गुरुश्चेद् देवलोकादागतं करोति । तादृशौ उडुपतिशुक्रौ चेत् पितृलोकादागतं कुरुतः इत्यादि द्रष्टव्यम् । तुङ्गभागात् प्रवरसमनिकृष्टभाः परमनीचादारभ्य परमोच्चान्तःप्रदेशस्तुङ्गशब्देनोच्यते षड्राश्यात्मके तस्मिन् त्रिधा विभक्ते यो भागः तद्वशात् प्रवरसमनिकृष्टाः देवादयो भवन्ति । तत्र परमोच्चासन्ने राशिद्वये प्रवरः, तदधस्तने मध्यराशिद्वये गुर्वादयश्चेन्मध्यः, तदधः नीचासन्नराशिद्वये गुर्वादयश्चेन्निकृष्टा देवादयो भवन्तीत्यर्थः । तुङ्गहानादिति केचित् पठन्ति । हानं च्युतिः तद्वशादित्यर्थः । अस्मिन् पक्षेऽपि पूर्वोक्त एव प्रकारः ॥ १४ ॥

अथ निर्याणान्तरभवां गतिं[2] मालिन्याह—

**गतिमपि रिपुरन्ध्रत्र्यंशपोऽस्तस्थितो वा**
**गुरुरथ रिपुकेन्द्रच्छिद्रगः स्वोच्चसंस्थः ।**

---

१. 'बे म' क. पाठः. २. 'तिं दर्शयति—' ख. ग. पाठः.

**उदयति भवनान्ते सौम्यभागे च मोक्षो**
**यदि भवति बलेन प्रोज्झितास्तत्र शेषाः ॥ १५ ॥**

इति । रिपुरन्ध्रत्र्यंशपः रिपुत्र्यंशपः षोडशद्रेक्काणाधिपः रन्ध्रत्र्यंशपः द्वाविंशति(त)म द्रेक्काणाधिपः गुर्वादिष्वन्यतमो ग्रहो बलवान् गतिं करोति यथोक्तक्रमेण देवलोकादिगतिं करोति । अस्तस्थितो वा सप्तमराशिस्थितो ग्रहो वा । अर्थात् षष्ठस्थितो रन्ध्रस्थितोऽपि । ग्रहाभावे खलु द्रेक्काणाधिपेन फलं वक्तव्यम् । तस्मात् षष्ठस्थितः सप्तमस्थितोऽष्टमस्थितोऽपि वा बलवान् गुर्वादिष्वन्यतमो ग्रहः यथोक्तां गतिं प्रयच्छति । त्रिष्वपि स्थानेषु ग्रहाभावे सति षोडशद्रेक्काणाधिपो द्वाविंशति(त)म द्रेक्काणाधिपो वा बलाधिकः स्वकीयां देवलोकादिगतिं प्रयच्छतीत्यर्थः । गुरुः देवलोकगतिम्, उडुपतिशुक्रौ मनुष्ययोनिगतिं, सूर्यभौमौ तिर्यग्योनिगतिं, यमज्ञौ नरकगतिं च कुर्वन्तीत्यर्थः । अथ भवनान्ते सौम्यभागे उदयति स्वोच्चसंस्थः गुरुः रिपुकेन्द्रच्छिद्रगः यदि तदा मोक्षो भवतीत्यन्वयः । तत्र शेषाः बलेन प्रोज्झिताः भवनान्ते सौम्यभागे । भवनान्त इत्यत्रान्तशब्देन अन्त्यद्रेक्काणः । तत्र च सौम्यभागे अन्त्यद्रेक्काणान्त्यवर्तिनि बुधांशे जीवांशे वा उदयति उदयलग्ने सति स्वोच्चसंस्थः कर्कटस्थो गुरुः शत्रुस्थाने वा केन्द्रेषु वा अष्टमे वा स्थितो यदि भवति तदा मोक्षो भवति । अपुनर्जन्मनां निर्याणं भवतीत्यर्थः । अपिशब्देन मरणसमयेऽप्येवं गुरुः स्थितश्चेत् मोक्षो भवतीति द्योत्यते । तत्र शेषाः गुरोरन्ये ग्रहाः बलरहिताश्च यदि भवन्ति तदैव मोक्षो भवेदित्यर्थः । मेषादीनां राशीनामन्त्यनवांशे धनुःकन्यामिथुनमीनानामन्यतमस्मिन् (?) नवांशके उदयति परमोच्चस्थे गु(रु? रौ) लग्ने चतुर्थे षष्ठे सप्तमेऽष्टमे दशमे वा स्थिते सति शेषा ग्रहा बलहीनाश्चेन्मोक्षः स्यादित्यर्थः ॥ १५ ॥

इति होराविवरणे निर्याणाध्यायस्त्रयोविंशः ॥

---

१. 'तो वा' ग. पाठः. २. 'लवान् स्व' ख. पाठः. ३. 'द्रसंस्थः य' क. ग. पाठः. ४. 'तिं स्वस्वो' ख. पाठः. ५. 'नेषु वा' क. पाठः. ६. 'र्थः । तत्र', ७. 'शके ष' ख. ग. पाठः. ८. 'ति स्वकृते बृहज्जातकवि', ९. 'व्यस्त्रयोविंशोऽध्यायः ॥' क. पाठः.

## अथ चतुर्विंशोऽध्यायः।

विज्ञातजन्मसमयानां तात्कालिकलग्नग्रहस्थितिवशेन जननादिनिर्याणान्तसमयसम्भव-फलविशेषलक्षणानि प्रदर्श्य इदानीमविज्ञातजन्मनामपि पृच्छकानां दृष्टजातकवल्लक्षणकथ-नाय तदुपादानभूतनष्टजातकज्ञानोपायप्रदर्शनमारभ्यते चतुर्विंशाध्यायेन। तत्र प्रथमं तदिति-कर्तव्यतामिन्द्रवज्रयाह[1] —

**आधानजन्मापरिबोधकाले**
**सम्पृच्छतां जन्म वदेद् विलग्नात्।**
**पूर्वापरार्धे भवनस्य विद्याद्**
**भानावुदग्दक्षिणगे प्रसूतिम्॥ १॥**

इति। आधानजन्मापरिबोधकाले सम्पृच्छतां जन्म विलग्नाद् वदेदित्यन्वयः। आधानं च जन्म च आधानजन्मनी तयोरपरिबोध-काले सम्पृच्छतां सम्यक् पृच्छतां जिज्ञासया शुभवारे शुभनक्षत्रे शुभतिथौ भक्त्या सह पृच्छतां जन्म जातकं विलग्नात् विशिष्टलग्नात् प्रश्नविशिष्टसमयसम्भवाद् उदयलग्नात् "ल्यब्लोपे पञ्चमी" लग्नं विज्ञाय तेन साधनेन वदेदित्यर्थः। सम्यक्प्रश्नप्रकारस्तु[2] महायात्राया-मुक्तः —

"तस्मान्नृपः कुसुमरत्नफलाग्रहस्तः
प्रातः प्रणम्य रवये हरिदिङ्मुखस्थः।
होराङ्गतन्त्रकुशलान् हितकारिणश्च
सङ्गृह्य दैवगणकान् सकृदेव पृच्छेत्॥"

इति। तत्रैव दैवज्ञस्य इतिकर्तव्यताप्युक्ता — "अथ नृपतिसमीपे दैव-वित् पृष्टमात्रः फलमुदयनिमित्तैस्तर्कयेच्छास्त्रबुद्ध्या" इति। अत्र पृष्टमात्रो दैवविद् उदयनिमित्तैः शास्त्रबुद्ध्या फलं तर्कयेद् इत्युक्तौ शास्त्रोपस्कृतया बुद्ध्या फलनिरूपणस्य साधनतयोक्तानि उदयनिमि-त्तानि। तत्रोदय[3] उदयलग्नं, निमित्तानि प्रेक्ष्यप्रेक्षकतटस्थगतानि तात्का-लिकभक्ष्याहृताकाररुतादीनि विशेषसूचकानि लक्षणानि। तत्रोदय-लग्नानयनं 'होरेत्यहोरात्रविकल्पमि'त्यत्र सूत्रितमत्र कर्तव्यम्। तेन

१. 'व्यमाह —', २. 'प्रकारकस्तु', ३. 'दयलग्नमिति' ख. ग. पाठः.

समतलविन्यस्तशङ्कुच्छायाविपरीतगणितलब्धदिनगतनाडिकाविना - डिकादिसम्यगुत्पादितेन विलग्नेन जन्म जननकालं वदेत् । आधानकालज्ञानस्य गर्भविषयभावाभावपुष्ट्यपुष्टिप्रसवकालविशेषज्ञानमात्रेणोपक्षीणफलत्वाद् अल्पप्रयोजनत्वेन जन्मकालस्य तु निर्देष्टव्यत्वमाचार्येणोक्तम् । जन्मकालज्ञानेन हि यावज्जीवितसम्भवानि नित्यानि नैमित्तिकानि च बहुविधानि फलानि वक्तव्यानि । निषेककालजननकालयोरान्तरालिकफलविशेषाणामपि केनचिज्जिज्ञासितत्वे तान्यपि तत्काललग्नवशाद् वक्तव्यानीति द्योतयितुं वा निषेककालस्य दुरवबोधत्वेन गर्भकालफलानि प्रश्नकालविलग्नेन वक्तव्यानीति द्योतयितुं वा अत्राधानप्रश्नस्य प्रसङ्गः कृत इति द्रष्टव्यम् । नष्टजातकप्रश्ने सामान्येन गुरुरविचन्द्रलग्नानां चतुर्णां स्वरूपमादेष्टव्यम्, अन्येषां प्रायशस्तन्मुखेनावगन्तव्यत्वात् । तत्र अयनर्तुमासानां सूर्यसम्बन्धित्वात् तज्ज्ञानाय प्रथममयनज्ञानोपायमाह — पूर्वेति । भवनस्य पूर्वापरार्धे भानौ उदग्दक्षिणगे प्रसूतिं विद्यादित्यन्वयः । भवनस्य उदयलग्नराशेः पूर्वार्धे लग्नगते सति भानौ उदग्गे उत्तरायणगते सति प्रसूतिं विद्यात् । तथा राशेरपरार्धे लग्नगते सति दक्षिणगे दक्षिणायनगते भानौ प्रसूतिं विद्यादित्यर्थः । अत्र पूर्वापरार्धशब्देन आदित्यहोरायामुत्तरायणे चन्द्रहोरायां दक्षिणायने जन्म इत्यपि द्योत्यते । दूतचेष्टां च दर्शयति — शरीरे दक्षिणभागे स्पृशति चेद् उत्तरायणे, वामभागे दक्षिणायने । स्वावस्था च वायौ दक्षिणस्थ उत्तरायणे, वामे दक्षिणायने जन्म इति च द्रष्टव्यम् ॥ १ ॥

गुरुज्ञानार्थमिन्द्रवज्रामाह —

> लग्नत्रिकोणेषु गुरुं त्रिभागै-
> विकल्प्य वर्षाणि वयोनुमानात् ।
> ग्रीष्मोऽर्कलग्ने कथितास्तु शेषै-
> रन्यायनर्तावृतुरर्कचारात् ॥ २ ॥

---

१. 'कादि', २. 'न्मका' ग. पाठः.

इति । लग्नत्रिकोणेषु त्रिभागैः गुरुं विद्यात् । लग्नस्य त्रिकोणेषु द्रेक्काणैः — लग्नस्य प्रथमद्रेक्काणे लग्नगतं गुरुं विद्यात्, द्वितीयद्रेक्काणे पञ्चमगतं, तृतीयद्रेक्काणे नवमगतं गुरुं विद्यात् । वर्षाणि वयोनुमानाद् विकल्प्य विद्यात् । वर्षाणि गुरोर्वर्षाणि द्वादशराशिचारजनितानि वर्षाणि । तेषु गुरोरावृत्तयः कति गता इति वयोनुमानात् प्रष्टुर्वयसोऽनुमानात् ज्ञातव्या इत्यर्थः । अत्र नुमानादिति पञ्चाशता द्रेक्काणद्वादशांशः सूचितः । तेन स्वभादिकेन वा मेषादिकेन वा गुरुवर्षावृत्तयः कल्प्या इत्युपदेशार्थः । ऋतुलक्षणमाह — ग्रीष्म इति । अर्कलग्ने ग्रीष्मः ऋतुः ज्ञेयः । पूर्वं संज्ञाध्याये अर्कस्य ऋतुसम्बन्धो न दर्शित इति अत्रोक्तं ग्रीष्मोऽर्कलग्ने इति । अर्थादर्कस्य द्रेक्काणेऽपि ग्रीष्म इति द्रष्टव्यम् । शेषैस्तु कथिताः । शेषैः शशुरुचज्ञग्वादिषु कथिताः शिशिरादयः शिशिरवसन्तग्रीष्मप्रावृट्शरद्धेमन्ता ऋतवः क्रमेण शशुरुचज्ञग्वादीनामुदयेन द्रेक्काणैर्वा ज्ञेयाः । तत्र शिशिरवसन्तग्रीष्मा उत्तरायणस्था ऋतवः । अन्ये दक्षिणायनस्थाः । ऋतुज्ञाने विशेषमाह — अन्यायनर्तौ अर्कचाराद् ऋतुरिति । अयनस्य ऋतोश्च अन्यत्वे लक्षणवशात् प्राप्ते सति उत्तरायणे दक्षिणायनर्तौ दक्षिणायने उत्तरायणर्तौ च प्राप्ते सति अर्कचारोऽयनं तद्वशाद् ऋतुरेव परिवर्तनीयः । अयनं यथाप्राप्तमेव ज्ञेयमित्यर्थः ॥ २ ॥

ऋतुपरिवर्तनप्रकारामिन्द्रवज्रयाह—

> चन्द्रज्ञजीवाः परिवर्तनीयाः
> शुक्रारमन्दैरयने विलोमे ।
> द्रेक्काणभागे प्रथमे तु पूर्वो
> मासोऽनुपाताच्च तिथिर्विकल्प्या ॥ ३ ॥

इति । अयने विलोमे चन्द्रज्ञजीवाः शुक्रारमन्दैः परिवर्तनीया इत्यन्वयः । प्रावृड्वसन्तौ शरद्ग्रीष्मौ हेमन्तशिशिरौ च परिवर्तनीया इत्यर्थः । अर्कस्यापि बुधेन परिवृत्तिः कुजवद् द्रष्टव्या । प्रथमे द्रेक्काणभागे पूर्वो मासः । द्रेक्काणे द्विधा विभक्ते सति तत्पूर्वार्धे लग्नगतं चेन्मासद्वयात्मकस्य ऋतोः प्रथमे मासि, द्वितीयार्धे चेद् द्वितीये मासि

१. 'तनुस्व' क, 'तनुस्वभावादि' ग. पाठः.

जन्मेति वक्तव्यम् । तत्रापि मासि अनुपातात् तिथिश्च विकल्प्या । अनुपातात् त्रैराशिकात् । तिथिः मासे गता दिवसाः । तथाहि — पञ्चभिर्द्रेकाणभागैरेक(त्रिं?स्त्रिं)शद्दिनात्मको मासः ततो दशभिर्लिप्ताभिरेको दिवसो लभ्यते इति क्रमेण द्रेकाणगतलिप्ताभिः मासगतास्तिथयो ज्ञेया इत्यर्थः । एवमयनर्तुमासैर्लक्षणावगतैर्जन्मसमयार्काधिष्ठितराश्यंशकला ज्ञेया इत्युक्तं भवति ॥ ३ ॥

अथ शुक्लप्रतिपदादितिथिलक्षण[1]मिन्द्रवज्रयाह —

**अत्रापि होरापटवो द्विजेन्द्राः**
**सूर्यांशतुल्यां तिथिमुद्दिशन्ति ।**
**रात्रिद्युसंज्ञेषु विलोमजन्म**
**भागैश्च वेलाः क्रमशो विकल्प्याः ॥ ४ ॥**

इति । अत्र होरापटवो द्विजेन्द्राः तिथिं सूर्यांशतुल्यामुद्दिशन्तीत्यन्वयः । सूर्यांशतुल्यां सूर्याधिष्ठितराशेरंशाः त्रिंशदात्मका भागाः तत्तुल्यसङ्ख्यां, प्रश्नकालार्काधिष्ठितराशौ यावत्सङ्ख्योंऽशो वर्तते तावत्सङ्ख्यायां शुक्लप्रतिपदादितस्तावत्सङ्ख्यायां तिथौ जन्मेति वदन्ति । एवमानीता तिथिः पूर्वानीताज्जन्मकालार्काद् यावति राशौ चन्द्रे स्थिते सम्भवति तत्र राशौ जन्मचन्द्र इत्युक्तं भवति । रात्रिद्युसंज्ञेषु विलोमजन्म उद्दिशन्ति । रात्रिराशिषु लग्नगतेषु तद्विलोमे दिवसे जन्म, दिवाराशिषु लग्नगतेषु रात्रौ जन्म वक्तव्यमिति शेषः । भागैः वेलाश्च क्रमशो विकल्प्याः । भागैरुदयलग्नगतभागैः क्रमशः दिवसे रात्रौ च जननवेला विकल्प्याः । लग्नगतस्य दिवाराशेः यावत्सङ्ख्यो भागो वर्तते रात्रौ तावत्यां नाडिकायां जन्म । तथा लग्नगतस्य रात्रिराशेः यावत्सङ्ख्यो भागो वर्तते दिवसस्य तावती नाडिका जननवेला वक्तव्या । पूर्वानीतस्य जन्मार्कस्य राशेरारभ्य राशिप्रमाणवशाद् गण्यमाने यथोक्तजननवेलायां यो राशिः सम्भवति स राशिर्जन्मलग्नमित्युक्तं भवति ॥ ४ ॥

---

1. 'णमाह —' ख. ग. पाठः.

चान्द्रमासावगमनमिन्द्रवज्रयाह[1] —

**केचिच्छशाङ्काध्युषितान्नवांशा-**
**च्छुक्लान्तसंज्ञं कथयन्ति मासम् ।**
**लग्नत्रिकोणोत्तमवीर्ययुक्तं**
**भं प्रोच्यतेऽङ्गालभनादिभिर्वा ॥ ५ ॥**

इति । केचित् शशाङ्काध्युषितात् नवांशात् शुक्लान्तसंज्ञं मासं कथयन्तीत्यन्वयः। प्रश्नकाले शशाङ्काध्युषितो यो नवांशराशिः तस्मिन् नवर्क्षचरणात्मकत्वान्नवधा विभक्ते यत् नक्षत्रचरणं भवति तेन नक्षत्रेण सञ्जातसंज्ञो यः शुक्लान्तमासः चान्द्रमास इति यावत् । "दर्शावधिं[2] मासमुशन्ति चान्द्रम्" इत्युक्तत्वाद् दर्शस्य[3] च चन्द्रस्य शुक्लात्यन्ताभावसम्भवात्[4] शुक्लान्तश्चान्द्रमासः । तस्य नक्षत्रेण संज्ञासम्भवश्च[5] अमरसिंहेनोक्तः —

"पुष्ययुक्ता पौर्णमासी पौषी मासे तु यत्र सा ।
नाम्ना स पौषो माघाद्याश्चैवमेकादशापरे ॥"

बौधायनेन[6][7] चोक्तम् —

"चित्रादितारकाद्वन्द्वं यदा पूर्णेन्दुसंयुतम् ।
तदा चैत्रादयो मासास्त्रिभिः षष्ठान्त्यसप्तमाः ॥"

इति । प्रश्नकालचन्द्रे नवभिर्गुणिते नवांशराशिस्फुटं भवति। तत्र यन्नक्षत्रं वर्तते तेन नक्षत्रेण चित्रादितारकाद्वन्द्वेष्वन्यतमेन पूर्णेन्दुयोगे यस्य मासस्य संज्ञा जायते तस्मिंश्चान्द्रमासे प्रष्टुर्जन्म केचित् कथयन्तीत्यर्थः। जन्मचन्द्रज्ञानोपायमाह — लग्नेति । लग्नत्रिकोणोत्तमवीर्ययुक्तं भं प्रोच्यते। तद्विद्भिरिति शेषः। लग्नत्रिकोणेषु लग्नपञ्चमनवमेषु उत्तमवीर्ययुक्तं त्रिष्वपि तेषु यो राशिरधिकबलवान् भवति सः भं जन्मभं जन्मकालचन्द्राधिष्ठितराशिरित्यर्थः । तत्रापि संशये सति विशेषज्ञानोपायमाह — अङ्गालभनादिभिर्वेति । अङ्गालभनं अङ्गस्पर्शनम् । आदिशब्देन पृच्छकारूढराश्यादयः। प्रश्नकाले पृच्छको वराङ्गादिषु यदङ्गं स्पृशति स्थिरचक्रे च यस्मिन् राशौ तिष्ठति, यद्राशिसम्बद्धमक्षरं वा

---

१. 'नमाह —', २. 'धिर्मास', ३. 'स्य चन्द्र' ख. ग. पाठः. ४. 'क्लान्तभाव' ग. पाठः. ५. 'वत्वात्' क. ग. पाठः. ६. 'बौ', ७. 'नीयेन' ग. पाठः.

प्रथमं ब्रूते तादृशैर्निमित्तैः तत्रापि बहूनां सम्भवे बलवशेन प्रष्टुर्जन्मचन्द्रं वदेदित्यर्थः ॥ ५ ॥

अत्र प्रकारान्तराणीन्द्रवज्रयाह—

**यावद्गतः शीतकरो विलग्ना-**
**च्चन्द्राद् वदेत् तावति जन्मराशिम् ।**
**मीनोदये मीनयुगं प्रदिष्टं**
**भक्ष्याहृताकाररुतैश्च चिन्त्यम् ॥ ६ ॥**

इति । शीतकरो विलग्नाद् यावद् गतः चन्द्रात् तावति जन्मराशिं वदेदित्यन्वयः । प्रश्नकालचन्द्राल्लग्ने विशोधिते यच्छिष्यते तं शेषं चन्द्रे संयोज्य जातं राशिं जन्मराशिं वदेदित्यर्थः । मीनोदये मीनयुगं प्रदिष्टम् । मीनराश्युदये प्रश्ने सति मीनयुगं प्रदिष्टं मीनराशिरेव जन्मराशिरित्याचार्यैरुक्तम् । तथा भक्ष्याहृताकाररुतैश्च चिन्त्यम् । भक्ष्येण आहृतेन आकारेण रुतेन च जन्मराशिर्विचिन्तनीयः । भक्ष्येण मेषादीनां भक्ष्यविशेषेण । आहृतेन भक्ष्यादितरेणापि राशिसम्बन्धिना अजचर्मशृङ्गवीणागदादिना । तद्यथा — स्नुहीदलार्कपत्रतृणादिभिः मेषभक्ष्यैः प्रश्नकाले यदृच्छयोपगतैः मेषो जन्मराशित्वेन चिन्त्यः, पलालतृणादिभिः वृषभराशिः, ताम्बूलशयनवीणादिभिः मिथुनराशिः, मृज्जलजीर्णपर्णादिभिः कर्कटः, मृगवराहगजादिभिः सिंहः, सस्यालातजलतरणसाधनादिभिः कन्या, विक्रेयद्रव्यमानसाधनप्रस्थतुलादिभिस्तुला, विषविषधरविषवैद्यादिभिर्वृश्चिकः, धनुर्धानुष्कशरतुरगप(र्ण ? र्या)णादिभिर्धनुः, गजचर्मशृङ्गतद्भक्षितशेषजलचरवस्त्वादिभिर्मकरः, कुम्भकुम्भकारजलपात्रादिभिः कुम्भः, जलबडिशवागुरादिभिः मीनराशिश्चिन्त्यः । प्रश्नकाले यदृच्छयोपगतैरेतैर्जन्मराशिर्निरूपणीयः, नतु पूर्वमेव प्रत्यक्षसन्निहितैरिति द्रष्टव्यम् । आकारः तेषां प्रतिरूपाणि आलेख्यगतानि वा दारुदन्तलोहादिनिर्मितानि वा यदृच्छया प्रश्नकालदृष्टानि जन्मराशिं द्योतयन्ति । तथा रुतानि मेषादीनां वाशितानि, अथवा तत्काले केनचिद् यदृच्छयोदीरिता मेषादिराशिवाचकशब्दाः तैश्च सहसा श्रूयमाणैर्जन्मराशिसन्देहनिर्णयो भवति ॥ ६ ॥

१. 'र्वं' क. पाठः. २. 'भिश्चापराशिः, मृगच' क. ग. पाठः. ३. 'या वाग' ख. पाठः. ४. 'नि', ५. 'णं' न', ६. 'तीत्यर्थः ॥' क. ग. पाठः.

अथ जन्मलग्नपरिज्ञानार्थेन्द्रवज्रामाह[1] —

**होरानवांशप्रतिमं विलग्नं**
**लग्नाद् रविर्यावति वा दृगाणे।**
**तस्माद् वदेत् तावति(मं?थं) विलग्नं**
**प्रष्टुः प्रसूताविति शास्त्रमाह ॥ ७ ॥**

इति। होरानवांशप्रतिमं होरा लग्नं तस्य यो नवांशः तत्तुल्यं, लग्नराशौ मेषांशे वर्तमाने मेषराशिर्नष्टजातकजन्मलग्नमित्यर्थः। विलग्नं होरानवांशप्रतिमम् इत्यन्वयः। अथवा रविः लग्नाद् यावति दृगाणे स्थितः तस्मात् तावति(मं?थं) राशिं प्रष्टुः प्रसूतौ विलग्नं वदेदित्यन्वयः। तस्माल्लग्नादित्यर्थः। लग्नात् लग्नद्रेक्काणादारभ्य गण्यमाने यावत्सङ्ख्ये द्रेक्काणे रविः स्थितः लग्नात् तावत्सङ्ख्यं राशिं प्रष्टुः प्रसूतिलग्नं वदेत्। षट्त्रिंशत्सु द्रेक्काणेषु द्वादशाधिक्ये द्वादशकमपोह्य[2] चतुर्विंशत्याधिक्ये चतुर्विंशतिमपोह्य शिष्टया सङ्ख्यया लग्नराशेरारभ्य गणने यो राशिर्भवति स राशिः प्रष्टुर्नष्टजातकजन्मलग्नं भवति। इति शास्त्रमाह इति पूर्वशास्त्रेषु दृश्यत इत्यर्थः। अत्र रवेर्द्रेक्काणस्थितिप्रदर्शनेन प्रश्नकाले वक्ष्यमाणेषु षट्त्रिंशद्द्रेक्काणस्वरूपेषु यद्द्रेक्काणस्वरूपसम्बन्धिनो वस्त्वन्तरस्य प्रश्नकाले यदृच्छया दर्शनं श्रवणं वा भवति तद्द्रेक्काणस्थितो रविः प्रष्टुर्जन्मनि वक्तव्य इति द्योत्यते ॥ ७ ॥

अथ प्रकारान्तरेण लग्नानयनमिन्द्रवज्रयाह (?) —

**जन्मादिशेल्लग्नगे वीर्यगे वा**
**छायाङ्गुलघ्नेऽर्कशुद्धेऽवशिष्टम्।**
**आसीनसुप्तोत्थितोत्तिष्ठतां भं**
**जायासुखाज्ञोदयस्थं प्रदिष्टम् ॥ ८ ॥**

इति। लग्नगे वीर्यगे वा ग्रहे छायाङ्गुलघ्ने अर्कशुद्धे अवशिष्टं जन्म आदिशेदित्यन्वयः। अवशिष्टं जन्म जन्मलग्नं भवति इत्यादिशेत्। लग्नस्थितो ग्रहोऽस्ति चेत् तस्य तत्कालस्फुटं ग्राह्यं, तदभावे

१. 'याह —' ख. ग. पाठः. २. 'श शिष्टया शि' ख. पाठः.

वीर्याधिकग्रहस्य तत्कालस्फुटं ग्राह्यम्। तद् विन्यस्य छायाङ्गुलघ्ने प्रश्न-कालभवद्वादशाङ्गुलशङ्कुच्छायाङ्गुलैस्तस्मिन् गुणिते अर्कशुद्धे द्वादश-भिर्हृते यदवशिष्टं तज्जन्म जन्मलग्नमित्यादिशेत्। लग्नगतस्य ग्रहस्य वीर्याधिकस्य ग्रहस्य वा तात्कालिकस्फुटं राशिभागलिप्तात्मकं यथा-स्थानं विन्यस्य छायाङ्गुलैर्गुणयेत्। यथासम्भवमूर्ध्वोर्ध्वारोपणे कृते राशिस्थानगतेषु द्वादशभिर्हृतेषु यदवशिष्टं तज्जन्मलग्नम्। अथवा राशीनपि भागीकृत्य यथोक्तकर्मणि कृते यदवशिष्टं तज्जन्मलग्नम्। अथवा, भागानपास्य लिप्तास्वेव यथोक्तकर्मणि कृते यदवशिष्टं तज्ज-न्मलग्नं भवतीत्यर्थः। तात्कालिकलक्षणेन लग्नकल्पनामाह — आसी-नेति। प्रष्टा आसीनश्चेत् तस्य जन्मलग्नं लग्नात् सप्तमस्थं राशिं वदेत्। सुप्तः शयानश्चेत् तत्काललग्नात् सुखस्थं चतुर्थं राशिं जन्मलग्नं वदेत्। प्रष्टा उत्थितश्चेद् दशमस्थं राशिं जन्मलग्नं वदेत्। प्रष्टा उत्तिष्ठन् उत्थानं कुर्वन् यदि पृच्छति तदा तत्काललग्नमेव प्र-ष्टुर्जन्मलग्नं वदेदित्यर्थः। एतल्लक्षणं तटस्थगतानां तत्कालदृष्टानाम-प्येतादृशानामुपलक्षणम्॥ ८॥

अथान्यप्रकारेण नष्टजातकप्रदर्शनाय राशीनां ग्रहाणां च गुणकारानाह[6]—

**गोसिंहौ जुतुमाष्टमौ क्रियतुले कन्यामृगौ च क्रमात्**
**संवर्ग्या दशकाष्टसप्तविषयैः शेषाः स्वसङ्ख्यागुणाः।**
**जीवारास्फुजिदैन्दवाः प्रथमवच्छेषा ग्रहाः सौम्यवद्**
**राशीनां नियतो विधिर्ग्रहयुते कार्या च तद्वर्गणा॥**

इति। गोसिंहौ जुतुमाष्टमौ क्रियतुले कन्यामृगौ च एते रा-शयः क्रमाद् दशकाष्टसप्तविषयैः संवर्ग्यौ इत्यन्वयः। गोसिंहौ वृषराशिः सिंहराशिश्च दशकेन संवर्ग्यः गुणनीयः। तथा जुतुमाष्टमौ मिथुनवृ-श्चिकौ अष्टभिर्गुणनीयौ। क्रियतुले मेषजूकौ सप्तभिर्गुणनीयौ। कन्यामृगौ विषयैः पञ्चभिर्गुणनीयावित्यर्थः। शेषाः स्वसङ्ख्यागुणाः शेषा अनु-क्ताश्चत्वारो राशयः स्वसङ्ख्यागुणाः निजनिजसङ्ख्यया गुणनीयाः।

---

१. 'तग्र', २. 'स्य वा वी' क. पाठः. ३. 'स्थं वि', ४. 'वा राशिभा' ग. पाठः. ५. 'न' ख. ग. पाठः. ६. 'निन्द्रवज्रयाह—', ७. 'णितव्यः।' क. पाठः.

तत्र कर्कटकः स्वसङ्ख्यया चतुर्भिर्गुणनीयः। चापराशिर्नवभिर्गुणनीयः। कुम्भराशिरेकादशभिर्गुणनीयः। मीनो द्वादशभिर्गुणनीय इत्यर्थः। ग्रह-गुणकारानाह — जीवारास्फुजिदैन्दवाः प्रथमवत् संवर्ग्या इत्यन्वयः। प्रथमवत् पूर्वोक्तवत् क्रमेण संवर्ग्या इत्यर्थः। तत्र जीवो दशकेन सं-वर्ग्यः। आरोऽष्टभिः संवर्ग्यः। आस्फुजिच्छुक्रः सप्तभिः संवर्ग्यः। ऐन्दवो बुधः पञ्चभिः संवर्ग्य इति भावः। शेषा ग्रहाः सौम्यवत् सौम्योक्त-वत्। पञ्चभिरित्यर्थः। शेषा अर्केन्दुसौराः पञ्चभिर्गुणनीयाः। गुणन-स्येतिकर्तव्यतामाह—राशीनां विधिः नियतः। येन राशिना कर्मेष्यते तस्य राशेः स्वोक्तगुणकारेण गुणनविधिर्नियतः। ग्रहयुते तद्गुणा च कार्या तत्र राशौ ग्रहेण युते सति ग्रहोक्तेन गुणकारेण च गुणनं क-र्तव्यम्। ग्रहाभावे तु राशिगुणकार एव कर्तव्य इति द्योतयितुं नियतो विधिरित्युक्तम्॥ ९॥

उक्तेन विधिना जन्मनक्षत्रानयनं वसन्ततिलकेनाह—

**सप्ताहतं त्रिघनभाजितशेषमृक्षं**
**दत्त्वाथवा नव विशोध्य नवाथवास्मात्।**
**एवं कलत्रसहजात्मजशत्रुभेभ्यः**
**प्रष्टुर्वदेदुदयराशिवशेन तेषाम्॥ १०॥**

इति। उदयलग्नं निजेन राशिगुणकारेण हत्वा तत्र ग्रहाणां योगे सति तत्स्फुटानि च स्वस्वगुणकारेण हत्वा संयोजितेषु जातं गुणपिण्डं ग्रहाभावे स्वोक्तगुणकारेण गुणितमुदयलग्नमेव गुणपिण्डं तत्सप्ताहतं त्रिघनभाजितशेषमृक्षं भवति। सप्तभिर्गुणपिण्डं हत्वा त्रिघनेन त्रयाणां घनेन "समत्रिघातस्तु घनः प्रदिष्टः" इत्युक्तलक्षणेन सप्तविंश(तिभि-रि ? त्ये)त्यर्थः। सप्तविंश(तिभिर्भा ? त्या भा)जिते यच्छिष्यते तत् प्रष्टु-र्जन्मर्क्षं भवति। अथवा शेषे नव दत्त्वा, अथवा नव विशोध्य अस्माच्छेषा-न्नव विशोध्य प्रष्टुर्जन्मर्क्षं भवति। लग्नद्रेक्काणवशाद् यथाप्राप्तेन वा नवक-दानसिद्धेन वा नवकविशोधनसिद्धेन वा त्रिघनभाजितशेषेण प्रष्टुर्जन्मर्क्षं भवति। जन्मत्रयरूपेषु नक्षत्रेषु इदं जन्मर्क्षमिति निर्णीयत इत्यर्थः।

---

१. 'क्तेन गु', २. 'पि', ३. 'रः कर्तव्य एव इ' क. पाठः. ४. 'नमाह—' ख, ग. पाठः.

एवमुदयराशिवशेन कलत्रसहजात्मजशत्रुभेभ्यः तेषां कलत्रादीनां जन्मर्क्षं वदेदित्यन्वयः। उदयराशिवशेन उदयराशौ षड्राशीन् क्षिप्त्वा कलत्रभावमुत्पाद्य तस्य राशिगुणकारगुणनं[1] यथासम्भवं ग्रहगुणकारगुणनं च कृत्वा संयोजिते गुणपिण्डे सप्ताहते त्रिघनभाजिते सति शेषेण पूर्ववत् कलत्रजन्मर्क्षं वदेत्। तथैवोदयलग्ने राशिद्वयं क्षिप्त्वा जातेन सहजभावेन पूर्ववद् यथोक्तकर्मणा सहजजन्मर्क्षं वदेत् । तथैवोदयलग्ने राशिचतुष्टयं क्षिप्त्वा जातेन पञ्चमभावेन यथोक्तकर्मणि कृते पुत्रस्य जन्मर्क्षं वदेत्[2] । तथैवोदयलग्ने राशिपञ्चकं क्षिप्त्वा जातेन षष्ठभावेन शत्रोर्जन्मर्क्षमपि ज्ञेयम् । एवमुदयराशिवशेन प्रष्टुर्जन्मर्क्षं तत्कलत्रभ्रातृपुत्रशत्रूणामपि जन्मर्क्षाणि निर्देष्टव्यानीत्यर्थः ॥ १० ॥

इति गोबलीवर्दन्यायेन वक्ष्यमाणनष्टजातकप्रकाराभ्यन्तरमपि बहुविधकर्मोपयोगित्वाज्जन्मनक्षत्रानयनं प्रदर्श्य सामान्येन गुणपिण्डावगन्तव्यानि नष्टजातकवस्तून्याह—

वर्षर्तुमासतिथयो द्युनिशे ह्युडूनि
वेलोदयर्क्षनवभागविकल्पनाद्याः ।
भूयो दशादिगुणिते स्वविकल्पभक्ते
वर्षादयो नवकदानविशोधनाभ्याम् ॥ ११ ॥

इति । अत्र पूर्वोक्तप्रकारेण राशिगुणकारेण यथासम्भवं ग्रहगुणकारैश्च गुणितं राश्यंशकलात्मकमुदयलग्नमेकान्ते स्थापयेत् । गोसिंहादिगुणने[3] द्वौ पक्षौ विद्येते । भूयोगुणनं पृथग्गुणनं चेति । तत्र भूयोगुणनं यथा — राशिभागकलात्मकमुदयलग्नं विन्यस्य राशिगुणकारेण गुणित्वा पुनर्ग्रहगुणकारेणापि तमेव गुणितं गुणयेत् । ग्रहगुणकारा द्वित्राः सन्ति चेत् तैरपि गुणितं गुणयेत् । अत्र भूयोगुणने क्रमो न विवक्षितः यथासम्भवैर्गुणकारैर्गुणनं कर्तव्यमित्येव नियमः । पृथग्गुणने तु उदयलग्नं राश्युक्तेन गुणकारेण गुणयेत् । लग्ने ग्रहसम्भवे सति ग्रहाणां स्फुटानि लग्नान्न्यूनानि समान्यधिकानि वा पृथग् विन्यस्य स्वस्वगुणकारेण सङ्गुण्य तानि संयोजयेत्। एवं भूयोगुणनेन वा पृथग्गुणनेन वा स्वसम्प्रदायसिद्धेन गुणपिण्डमुत्पाद्य

---

१. 'जनाज्जाते' क. ग. पाठः. २. 'भवेत्', ३. 'नं प्रथमं भूयो राशिगु' क. पाठः.

स्थापयेत् । तत्र च लग्नस्य प्रथमद्रेक्काणे सति नवकदानं कर्तव्यम् । म-
ध्यद्रेक्काणे न नवकदानं शोधनं वा कर्तव्यम् । लग्नस्य अन्त्यद्रेक्काणगतत्वे
नवकशोधनं कर्तव्यम् । तथाकृतो गुणपिण्डः कर्मयोग्यो भवति । नव-
कदानविशोधनाभ्यां कर्मयोग्ये गुणपिण्डे भूयो दशादिगुणिते स्वविक-
ल्पभक्ते क्रमेण वर्षर्तुमासतिथयो द्युनिशे उडूनि वेलोदयर्क्षनवभाग-
विकल्पनाद्याश्च इति प्रोक्ता वर्षादयो भवन्ति हि इत्यन्वयः । भूयो
दशादिगुणिते दशादयः दशकाष्टसप्तविषयाः । वर्षर्तुमासतिथयः वर्षाणि
लोकशास्त्रप्रसिद्धानि प्रभवादीनि षष्टिवर्षाणि । ऋतवः पूर्वोक्ताः शिशि-
रादयः षट् । मासाश्चैत्रादयो द्वादश । तिथयः शुक्लप्रतिपदादयस्त्रिंशत् ।
एते दशकगुणितेन गुणपिण्डेन द्युनिशे दिनं रात्रिश्च, एते द्वे अष्टगुणि-
तेन उडूनि अश्विन्यादीनि सप्तविंशतिनक्षत्राणि, एतानि सप्तगुणितेन
गुणपिण्डेन वेलोदयर्क्षनवभागविकल्पनाद्याः वेला दिनमाननाडिकाः
रात्रिमाननाडिका वा त्रिंशद्, उदयर्क्षं द्वादशराशिष्वेकतमं,(?) नवभागाः
नवांशाः । आदिशब्देन द्विविकल्पा होरा राश्यर्धरूपाः, त्रिविकल्पा द्रे-
क्काणाः, द्वादशविकल्पाः द्वादशांशाः, पञ्चविकल्पाः त्रिंशांशकाश्च गृ-
ह्यन्ते । एते पञ्चगुणिते गुणपिण्डे स्वविकल्पभक्ते स्वः विकल्पः स्ववि-
कल्पः वर्षविकल्पः षष्टिः, ऋतुविकल्पः षडित्यादयो यथोक्ताः स्वस्व-
सङ्ख्याविशेषाः, तैर्भक्ते गुणपिण्डे शिष्टसङ्ख्यया नष्टजातकस्था वर्षादयो
ज्ञेया इत्यर्थः । एतदुक्तं भवति । एकान्तस्थापितं गुणपिण्डं प्रतिराश्य
यथोक्तं नवकदानविशोधनं विधाय कर्मयोग्यं कृत्वा चतुर्षु स्थानेषु
स्थापयित्वा एकं दशभिर्गुणयेद् । द्वितीयमष्टभिः, तृतीयं सप्तभिः,
चतुर्थं पञ्चभिश्च गुणयेत् । ततो दशभिर्गुणितं प्रतिराश्य वर्षविकल्पेन
ष(ष्टिभिर्हृ ? ष्ट्या हृ)त्वा शिष्टेन प्रभवादिवर्षेषु एतावति(मे ? थे) वर्षे
प्रष्टुर्जन्मेति वक्तव्यम् । पुनरपि तमेव प्रतिराश्य ऋतुविकल्पेन षट्केन
हृत्वा शिष्टेन अस्मिन् ऋतौ जन्मेति वक्तव्यम् । पुनरपि प्रतिराश्य

१. 'णे नव', २. 'वा न क', ३. 'ते', ४. 'का वा उ' क., 'काश्चि'
ख. पाठः. ५. 'शाः त्रिं' क. ख. पाठः. ६. 'तेन गु', ७. 'ण्डेन स्व' क. पाठः.
८. 'स्थया व' ख. पाठः. ९. 'व्यम् । अत्र केचिद् दशगुणितं गुणपिण्डं वर्षविकल्पेन
परमायुःप्रमाणेन विंशत्यधिकशतेन हृत्वा योऽवशिष्यते तत्समस्तस्य वर्षो वर्तत इति व-
दन्ति । पु' क. पाठः.

मासविकल्पेन द्वादशकेन हृत्वा[1] शिष्टेन मासो वाच्यः । पुनस्तमेव कर्मयोग्यं विन्यस्य त्रिंश(द्भिः? ता) तिथिविकल्पैः हृत्वा शुक्लप्रतिपदादिदर्शान्तासु तिथिषु अस्यां तिथौ जन्मेति वक्तव्यम्[2] । पुनरष्टगुणितं गुणपिण्डं विन्यस्य द्युनिशाविकल्पेन द्विकेन हृत्वा शिष्टेनैकेन दिनं द्वाभ्यां रात्रिः । पुनः सप्तगुणितं विन्यस्य नक्षत्रानयनप्रकारः पूर्वमेवोक्तः । पुनः पञ्चगुणितं कर्मयोग्यं विन्यस्य दिनमानेन रात्रिमानेन वा त्रिंशता हृत्वा शिष्टेन जननवेला ज्ञेया । द्वादशहृतशिष्टेनोदयलग्नं ज्ञेयम् । नवहृतशिष्टेन नवांशो ज्ञेयः । द्वाभ्यां हृतशिष्टेन राश्यर्धं ज्ञेयम् । त्रिभिः द्रेक्काणः, द्वादशभिः द्वादशांशकः । त्रिंश(द्भिः ?ता)त्रिंशांशको ज्ञेय इत्यर्थः । अत्र राश्यंशकलात्मकस्य लग्नस्य राशिस्थानहृतशिष्टेन वा भागीकृत्य हृतशिष्टेन वा[3] लिप्तीकृत्य हृतशिष्टेन वा परस्परविरोधपरिहाराः कर्तव्याः । नवकदानं गुणपिण्डे नवानां रूपाणां दानं तत्प्रथमद्रेक्काणगतलग्नराशिसम्भवगुणपिण्डे कर्तव्यं, मध्यद्रेक्काणगतलग्नराशिसम्भवे गुणपिण्डे नवकदानं नवकविशोधनं वा न कर्तव्यम् । अन्त्यद्रेक्काणगतलग्नराशिसम्भवगुणपिण्डे नवानां रूपाणां विशोधनं कर्तव्यम् ॥ ११ ॥

पुनरन्येन प्रकारेण जन्मनक्षत्रानयनमार्ययाह[4] —

**संस्कारनाममात्रा द्विगुणाश्छायाङ्गुलैः समायुक्ताः ।**
**त्रिनवकभक्ताः शेषं नक्षत्रं तद्धनिष्ठादि ॥ १२ ॥**

इति । द्विगुणाः संस्कारनाममात्राः छायाङ्गुलैः समायुक्ताः त्रिनवकभक्ताः कर्तव्या इत्यन्वयः । संस्कारनाममात्राः नामकरणवेलायां यन्नाम बालस्य क्रियते तत् संस्कारनाम । तत्र ह्रस्वानामेकमात्रत्वं दीर्घाणां द्विमात्रत्वं हलामर्धमात्रत्वं च परिकल्प्य तत्सङ्कलितेन[5] या सङ्ख्या भवति तां सङ्ख्यां द्विगुणीकृत्य सूक्ष्मैः प्रश्नकालद्वादशाङ्गुलशङ्कुच्छायाङ्गुलैः संयोज्य त्रिनवकेन सप्तविंशत्या भाजयेदित्यर्थः । तत्र त्रिनवकभक्ते यच्छिष्यते तच्छेषं धनिष्ठादिनक्षत्रं भवति । (ननु) 'मेषाश्विप्रथमा' इत्यत्र नक्षत्राणामश्विन्यादित्वं प्रदर्शितम् । अत्र तु धनिष्ठादीनि नक्षत्राणीत्युक्तिः कथं घटते[6] । सत्यम् । केचिदयनद्वयात्म-

१. 'त्वा मा' ग. पाठः. २. 'व्यम् । एते दशगुणितेन । पु' क. पाठः. ३. 'वा प' ख. पाठः. ४. 'माह' ख. ग. पाठः. ५. 'त्कलिपतेन' ख. पाठः. ६. 'ते ननु स' क. ख. पाठः.

कस्य वत्सरस्य उत्तरायणादितः प्रवृत्तिमिच्छन्ति। उत्तरायणस्य च धनिष्ठादित्वमाचार्येण संहितायां दर्शितम् —

"आश्लेषार्धाद् दक्षिणमुत्तरमयनं तथा धनिष्ठाद्यम्।
पूर्वं कदाचिदासीद् यत् प्रोक्तं पूर्वशास्त्रेषु॥
साम्प्रतमयनं सवितुः कर्कटकाद्यं मृगादितश्चान्यत्।"

इति। अतो वज्रादियोगकथनवत् पूर्वशास्त्रानुसारेण उत्तरायणादित्वाद्धनिष्ठादित्वमुक्तम्। श्रीपतिना चायं पक्षो निर्युक्तिकत्वेन प्रदर्शितः —

"दिनप्रवृत्तिर्मरुतामजादौ तुलाधरादौ च निशाप्रवृत्तिः।
ते कल्पिते यैर्मृगकर्कटाद्योरत्रोपपत्तिं तु न ते ब्रुवन्ति॥"

इति। वर्षस्य उत्तरायणादित्वे निर्युक्तिकेऽपि सति आचार्येणात्र नक्षत्राणां धनिष्ठादित्वोक्त्या सामान्येन नक्षत्राणामश्विन्यादित्वमुचितम्। किन्तु कदाचिन्नक्षत्राणां धनिष्ठादित्वेन नष्टजातकविषये परस्परविरोधः परिहर्तव्य इति द्योत्यते॥ १२॥

पुनरन्यथापि नक्षत्रानयनं प्रदर्शयति —

**द्वित्रिचतुर्दशदशतिथिसप्त त्रिगुणा नवाष्ट चैन्द्राद्याः।**
**पञ्चदशघ्नास्तत्तद्दिङ्मुखान्वितं भं धनिष्ठादि॥ १३॥**

इति। ऐन्द्राद्याः दिशः द्वित्रिचतुर्दशदशतिथिसप्त त्रिगुणाः नव अष्ट च भवन्ति इत्यन्वयः। द्वे च तिस्रश्च चतुर्दश च दश च तिथयश्च सप्त च इति द्वन्द्वसमासः। त्रिगुणा नव सप्तविंशतिरष्ट च इति यथाक्रमम् ऐन्द्र्यादिदिक्षु पृच्छकाधिष्ठितौ सङ्ख्या ग्राह्येत्यर्थः। अतो दैवज्ञेन यस्यां दिशि स्थितः पृच्छको दृश्यते तस्यां दिशि ऐन्द्रादिगाद्युक्तासु द्वित्र्यादिसङ्ख्यासु या सङ्ख्या भवति सात्र कर्मयोग्येत्यर्थः। तत्कर्माह — पञ्चदशघ्ना इति। सा पृच्छकारूढदिग्भवा सङ्ख्या पञ्चदशभिर्गुणिता त्रिनवकभक्ता कर्तव्या। तत्र यच्छेषं तच्च तद्दिङ्मुखान्वितं तद्दिङ्मुखाः पृच्छकारूढदिङ्मुखा यावन्तः पुरुषाः प्रश्नकाले भवन्ति तावत्या सङ्ख्ययान्वितं कार्यमित्यर्थः। तद् धनिष्ठादिनक्षत्रं भवति। तत् प्रष्टुर्जन्मनक्षत्रमिति वक्तव्यम्॥ १३॥

१. 'यां प्रद' ग. पाठः. २. 'त्र' ख. पाठः. ३. 'तु' क. पाठः. ४. 'तासु स' क. ख. पाठः. ५. 'ङ्ख्यासु ग्रा' क. पाठः. ६. 'तेन दै' ग. पाठः. ७. 'स्य' क. पाठः. ८. 'खैः', ९. 'द्रष्टव्यम्' ग. पाठः.

नष्टजातकविधानमुपसंहरन्नार्यामाह[1]—

**इति नष्टजातकमिदं बहुप्रकारं मया विनिर्दिष्टम्।**
**ग्राह्यमदः सच्छिष्यैः परीक्ष्य यत्नाद्यथा भवति॥ १४॥**

इति। इति मया इदं नष्टजातकं बहुप्रकारं विनिर्दिष्टम् इत्यन्वयः। इदमिति अत्याश्चर्यभूतम् अतिदुष्करमपि नष्टजातकं पुरोवर्तिवद् ग्राह्यमित्यर्थः। नष्टजातकं नष्टमदृष्टम्। अदर्शनस्य द्वौ प्रकारौ। तत्र पृच्छकेनाप्यविज्ञातत्वमेकः प्रकारः, दैवज्ञेनाविज्ञातत्वं द्वितीयः प्रकारः। पूर्वस्मिन् प्रकारे पृच्छकस्यात्मीयजातकस्वरूपजिज्ञासा प्रश्नहेतुः। द्वितीयस्मिन् पृच्छकस्य दैवज्ञं प्रति परीक्षाप्रयतनं प्रश्नहेतुः। द्विविधेऽपि नष्टजातकप्रश्ने दैवज्ञेनादृष्टत्वं समानम्। तस्मादात्मनाप्यविज्ञातस्य पृच्छकजननकालस्य स्वरूपं जीवार्कचन्द्रलग्नानां तात्कालिकस्फुटात्मकं दैवज्ञेन प्रश्नकालोदयलग्नारूढादिभिर्निर्देष्टव्यं[3] जातकं नष्टजातकशब्देनोच्यते। बहुप्रकारमित्यत्र निर्देष्टव्यानां प्रकाराणाम् इयत्त्वे विद्यमानेऽपि बहुशब्देन विशेषितत्वादन्येषामत्रानुक्तानामपि सम्प्रदायागतानां नष्टजातकानयनप्रकाराणां सत्ता द्योत्यते। किञ्च 'आधानजन्मापरिबोधकाल' इत्यत्र परिबोधशब्देनाक्षरसङ्ख्यया एकद्वित्रिनवसङ्ख्याद्योतकेन 'लग्नत्रिकोणोत्तमवीर्ययुक्तं भं प्रोच्यते' इत्यस्य तथा 'पूर्वापरार्धे भवनस्य विद्याद् भानावुदग्दक्षिणगे प्रसूतिमित्यस्य च तथा 'लग्नत्रिकोणेषु गुरुमि'त्यस्य च तथैव 'होरानवांशप्रतिमं विलग्नमि'त्यस्य च जन्मकालचन्द्रार्कजीवलग्नज्ञापकेषु सारत्वं द्योतयितुं क्रमेण नष्टजातकप्रश्नोदयलग्नस्य गुणकाराः प्रदर्शिताः। नवसङ्ख्याद्योतकस्य धकारस्यानन्तरोक्तेन कालशब्देन प्रश्नकालदिनगतनाडीविनाड्यात्मकं[5] प्रकल्प्य नवभिर्गुणयित्वा जातेन स्फुटेन वा[6] तन्नवांशेन वा प्रष्टुर्जन्मचन्द्रनक्षत्रं च लभ्यत इति द्योत्यते। एवमादीनि बहुविधानि नष्टजातकरहस्यानि गुरुमुखादवगन्तव्यानि। एवं बहुप्रकारनिर्देशेन परोक्षस्यापि नष्टजातकस्य त्रिचतुरलक्षणसंवादे प्रत्यक्षवन्निर्देष्टव्यत्वं[7] भवेदित्यनुसन्धेयम्। अदः सच्छिष्यैः तथा ग्राह्यं यत्नात्

१. 'रति—' ख. ग. पाठः. २. 'मिति न' ख. पाठः. ३. 'व्यं न' क, 'व्यजातं न' ख. पाठः. ४. 'त्र च त' ख. पाठः. ५. 'कं भागलिप्तात्मकं प्र' क. पाठः. ६. 'वा प्र' ख. पाठः. ७. 'ह्यम् इ' क. ख. पाठः.

परीक्ष्य यथा भवति तथा ग्राह्यम् । इदं नष्टजातकं सच्छिष्यैः सांवत्सर-सूत्रे विनिर्दिष्टगुणयुक्तैः सद्भिः शिष्यैः—

"स्वस्थचित्तो विविक्तस्थः सम्यग्गणितकोविदः ।
ऊहापोहपटुः सिद्धमन्त्रो जानाति जातकम् ॥"

इत्याद्युक्तलक्षणगुणयुक्तैः शिष्यैः। शिष्यैरित्युक्त्या दैवज्ञमानित्वं विना सदा गुरूपदेशपरतन्त्रैरिति द्योत्यते । दैवज्ञानामेवंगुणत्वाभावे नष्टजा-तकस्य बहुप्रकारोपदेशवशाद् बहुषु नष्टजातकजन्मर्क्षादिषु सम्भवत्सु स्वयं सत्यनक्षत्रादिग्रह(णँ ? णा)कोविदाः नष्टजातकशास्त्रमसत्प्रलाप एव नानेन सत्यं नष्टजातकं वक्तुं शक्यते इति शास्त्रदूषणमेव तादृशा घोषयन्ति तैरिदं शास्त्रं नाध्येतव्यम् । तादृशगुणहीनाय च सम्प्रदा-यविद्भिर्नोपदेशः कर्तव्य इत्यभिप्रायः । गुरुकरुणयैव प्रश्नकाले सत्यज्ञानोपलब्धिर्भवति । गुरुश्च साक्षात्परमेश्वर एवँ । यथोक्तं—

"यावन्नानुग्रहः साक्षाज्जायते परमेश्वरात् ।
तावत् न सद्गुरुं कश्चित् सच्छास्त्रमपि नो (लभेत् ? भजेत्) ॥"

इति । तस्माद्ये ये यत्किश्चनोपदिशन्ति ते ते सर्वे परमेश्वरानुग्रहलब्धाः परमेश्वरस्यावतारभेदा एव इति प्रतिपँत्त्याँ स्वगुरुणा परमेश्वरस्य च मनसा वाचा कर्मणा च पूजा कर्तव्या इत्यपि सच्छिष्यैरिति पदेन द्योत्यते । एवमत्र होराशास्त्रे त्रयोविंश(तिभिर ? त्या)ध्यायैः प्रदर्शितं बहुविधविशेषयुक्तनैसर्गिकफलदशाफलगोचरफलानुभवप्रदर्शनसाधनं जननादिनिर्याणान्तं जीवितकालविषयं जातकलक्षणं दैवज्ञेन जिज्ञासून् प्रति निस्संशयं निर्देष्टव्यमिति द्योतयितुमयं नष्टजातकाध्यायश्चतुर्विं-(शो ? शः) पठितः। अत्र चाध्यायान्ते 'ग्राह्यमदस्सच्छिष्यैः परीक्ष्य यत्नाद्यथा भवति इत्युक्त्या यथानिर्दिष्टस्य जातकलग्नस्यापि सत्यत्वं द्योत्यते । भवति'शब्देनान्ते मङ्गलं च सूचितम् ॥ १४ ॥

इति होराविवरणे नष्टजातकाध्यायश्चतुर्विंशः ॥

---

१. 'सं', २. 'कब', ३. 'णं', ४. 'स्यै' ग. पाठः. ५. 'व । या', ६. 'पाद्य स्व' ख. पाठः. ७. 'त्य', ८. 'शोपदर्शितः ।', ९. 'ति रुद्रकृते बृहज्जातकविवरणे नष्टजातकाख्यश्चतुर्विंशोऽध्यायः ।' क. पाठः.

अथ संज्ञाध्याये पूर्वमनिर्दिष्टानां 'व्यालोद्यदायुधचतुश्चरणाण्डजेष्वि'त्यादिभिरनेकत्र[1] प्रस्तुतानां निजसम्बन्ध्येकदेशमात्रदर्शनप्राह्यकालविशेषोपयोगिनां द्रेकाणानां रूपाणि प्रदर्शयति[2]। तत्रादौ मेषाद्यस्य स्वरूपविज्ञानार्थं वैतालीयमाह—

**कट्यां सितवस्त्रवेष्टितः**
**कृष्णः शक्त इवाभिरक्षितुम्।**
**रौद्रं परशुं समुद्यतं**
**धत्ते रक्तविलोचनः पुमान्॥ १॥**

इति। मेषस्य आदिमो द्रेकाणः कट्यां सितवस्त्रवेष्टितः पुमान् भवति। सितवस्त्रेणाच्छादितकटिप्रदेश इत्यर्थः। कृष्णः स्वयं कृष्णवर्णः। अभिरक्षितुं शक्त इव तारुण्यौदार्यादियोगेन रक्षणसमर्थ इव प्रतीयमानः। तथा रक्तविलोचनः समुद्यतं रौद्रं परशुं धत्ते च। हिंस्र इत्यर्थः[3]॥ १॥

अथ मेषद्वितीयस्य स्वरूपज्ञानार्थमिन्द्रवज्रामाह —

**रक्ताम्बरा भूषणसक्तचित्ता**
**कुम्भाकृतिर्वाजिमुखी तृषार्ता।**
**एकेन पादेन च मेषमध्ये**
**द्रेकाणरूपं यवनोपदिष्टम्॥ २॥**

इति। मेषमध्ये[4] यवनोपदिष्टं द्रेकाणरूपम् एवंविधा स्त्री भवतीति सम्बन्धः। रक्ताम्बरा रक्तेन वस्त्रेण युक्ता। भूषणसक्तचित्ता भूषणाभिनिवेशिनीत्याकारलक्ष्यो मनोधर्म[5] उक्तः। कुम्भाकृतिः महोदरीत्यर्थः। वाजिमुखी अश्वमुखी। तृषार्ता पिपासयाभिभूता। एकेन पादेन उपलक्षिता[6] च। विकलैकपादेत्यर्थः[7]। भूषणभक्षचित्तेति वा पाठः॥

अथ मेषतृतीयज्ञानार्थमिन्द्रवज्रामाह —

**क्रूरः कलाज्ञः कपिलः क्रियार्थी**
**भग्नव्रतोऽभ्युद्यतदण्डहस्तः।**
**रक्तानि वस्त्राणि बिभर्ति चण्डो**
**मेषे तृतीयः कथितस्त्रिभागः॥ ३॥**

---

१. 'कप्र', २. 'ति —', ३. 'र्थः॥ रक्ता' ख. पाठः. ४. 'ध्ये द्रेकाणं यवनोपदिष्टम् एवं' क. पाठः. ५. 'र्मः इत्युक्तः तदुक्त्या कु', ६. 'ता। वि', ७. 'र्थः॥ क्रूरः' ख. पाठः.

इति । मेषे तृतीयस्त्रिभाग एवंविधः[1] कथितः । क्रूरः, कलाज्ञः कलाकुशलः । कपिलः कपिलवर्णः । क्रियार्थी अग्निकार्यार्थनशीलः[2] । भग्नव्रतः व्रतभङ्गवान् । अभ्युद्यतदण्डहस्तः[3] उद्यतदण्डायुधः । रक्तानि वस्त्राणि बिभर्ति । चण्डः घातकश्च भवति ॥ ३ ॥

अथ वृषप्रथमस्वरूपं (तोटके ? दोधके)नाह —

कुञ्चितलूनकचा घटदेहा
दग्धपटा तृषिताशनचित्ता ।
आभरणान्यभिवाञ्छति नारी
रूपमिदं प्रथमं वृषभस्य ॥ ४ ॥

इति[4] । इदं वृषभस्य प्रथमं रूपम् । कुञ्चितलूनकचा नारी कुञ्चिता वक्रा लूनाश्छिन्नाः कचा यस्याः सा तथा । घटदेहा घटाकारोदरप्रधानदेहा । दग्धपटा अग्निदग्धेन पटेन युक्ता । अर्थात् साग्निकोऽयं द्रेकाण इति द्योत्यते । तृषिता अशनचित्ता[5] च । क्षुत्पिपासान्वितेत्यर्थः । आभरणान्यभिवाञ्छति । इङ्गिताकारलक्ष्येण आभरणाभिलाषेण युक्ता च । एवंविधा नारी ॥ ४ ॥

वृषद्वितीयज्ञानार्थं स्वागतामाह —

क्षेत्रधान्यगृहधेनुकलाज्ञो
लाङ्गले सशकटे कुशलश्च ।
स्कन्धमुद्वहति गोपतितुल्यः
क्षुत्परोऽजवदनो मलवासाः[6] ॥ ५ ॥

इति । वृषमध्यद्रेकाण एवंविधः पुरुषः । क्षेत्रधान्यगृहधेनुकलाज्ञः क्षेत्राणां धान्यानां गृहाणां धेनूनां कलाविद्यानां चाभिज्ञः । सशकटे लाङ्गले कुशलश्च शकटकर्मणि लाङ्गलकर्मणि च कुशलः । स्कन्धमुद्वहति उन्नतं[7] स्कन्धं वहति । गोपतितुल्यः वृषभसमानः । क्षुत्परः, अजवदनः छागमुखः । तस्माच्चतुष्पादश्च (?) भवति[8] । मलवासाः मलिनाम्बरः ॥५॥

---

१. 'वं क' ख. पाठः. २. 'कर्मार्थ' क. पाठः. ३. 'ति ॥ कु' ख. पाठः. ४. 'ति । वृषभे प्रथमस्य इदं रू' क. पाठः. ५. 'ता । क्षु', ६. 'वृषमध्यः ॥' ख. पाठः. ७. 'न्धमुद्वह' क. पाठः. ८. 'ति ॥ द्वि' ख. पाठः.

अथ वृषतृतीयस्वरूपं *प्रकटेनाह —

**द्विपसमकायः पाण्डरदंष्ट्रः**
**शरभसमाङ्घ्रिः पिङ्गलमूर्तिः ।**
**अविमृगलोमा व्याकुलचित्तो**
**वृषभवनस्य प्रान्तगतोऽयम् ॥ ६ ॥**

इति । वृषभवनस्य प्रान्तगतोऽयं द्रेक्काणः एवंरू(पं ? पो) भवति । द्विपसमकायः गजवन्महाशरीरः । पाण्डरदंष्ट्रः, दंष्ट्रा दन्ताः । शरभसमाङ्घ्रिः शरभवदतिवेगयुक्तपादः । पिङ्गलमूर्त्तिः । अविमृगलोमा अविवद् दीर्घाणि मृगवद् विचित्राणि च लोमानि यस्य स तथा । व्याकुलचित्तश्च ॥ ६ ॥

अथ मिथुनप्रथमस्वरूपज्ञानार्थं वसन्ततिल(केना ? कमा)ह—

**सूच्याश्रयं समभिवाञ्छति कर्म नारी**
**रूपान्विताभरणकार्यकृतादरा च ।**
**हीनप्रजोच्छ्रितभुजर्तुमती त्रिभाग-**
**माद्यं तृतीयभवनस्य वदन्ति तज्ज्ञाः ॥ ७ ॥**

इति । तज्ज्ञाः तृतीयभवनस्य आद्यद्रेक्काणमेवंरूपं वदन्तीति सम्बन्धः । रूपान्विता नारी आभरणकार्येषु कृतादरा सूच्याश्रयं कर्म समभिवाञ्छति । सूची आश्रयो यस्य कर्मणः तत् सूच्याश्रयम् । हीनप्रजा प्रजारहिता । उच्छ्रितभुजा, ऋतुमती रजस्वला ॥ ७ ॥

अथ मिथुनाद्वितीयस्वरूपमुपेन्द्रवज्रया(?)ह —

**उद्यानसंस्थः कवची धनुष्मान्**
**शूरोऽस्त्रधारी गरुडाननश्च ।**
**क्रीडात्मजालङ्करणार्थचिन्तां**
**करोति मध्ये मिथुनस्य चायम् ॥ ८ ॥**

इति । मिथुनस्य मध्यद्रेक्काणे अयम् एवंविधः पुरुषः । उद्यान-संस्थः । कवची कवचवान् । धनुष्मान् धनुर्धरः । शूरः, अस्त्रधारी । गरुडाननः पक्षिमुखः । क्रीडार्थाम् आत्मजार्थाम् अलङ्करणार्थां च चिन्तां करोति ॥ ८ ॥

---

१. 'त्तः ॥ सू', २. 'ला ॥ उ' ख. पाठः. ३. 'ण एवं' क. पाठः. ४. 'षः गरु', ५. 'ति ॥ भू' ख. पाठः.

---

* वृत्तरत्नाकररीत्या मौक्तिकमालेति नाम भवति ।

अथ मिथुनान्त्यस्वरूपं स्वागतयाह—

**भूषितो वरुणवद् बहुरत्नै-**
**र्बद्धतूणिकवचः सधनुष्कः ।**
**नृत्तवादितकलासु च विद्वान्**
**काव्यकृन्मिथुनराश्यवसाने ॥ ९ ॥**

इति । मिथुनराश्यवसाने द्रेक्काण एवंविधः । वरुणवद् बहुरत्नैः भूषितः बद्धतूणिकवचः सधनुष्कः नृत्तवादितकलासु च विद्वान्, नृत्तेषु वादितेषु कलासु च विद्वान् काव्यकृच्च भवति ॥ ९ ॥

अथ कर्कटाद्यस्वरूपं स्वागतयाह —

**पत्रमूलफलभृद् द्विपकायः**
**कानने मलयगः शरभाङ्घ्रिः ।**
**क्रोडतुल्यवदनो हयकण्ठः**
**कर्कटे प्रथमरूपमुशन्ति ॥ १० ॥**

इति । कर्कटे प्रथमरूपमेवमुशन्ति । पत्रमूलफलभृत् पत्राणि मूलानि फलानि च बिभ्राणः । द्विपकायः बृहच्छरीरः । कानने मलयगः चन्दनवृक्षप्रिय इत्यर्थः । शरभाङ्घ्रिः अतिजवपादः । क्रोडतुल्यवदनः वराहमुखः । हयकण्ठः हयतुल्यदीर्घगलः । अत एव चतुष्पादश्च (?) भवति ॥ १० ॥

अथ (कर्कट)द्वितीयद्रेक्काणस्वरूपमिन्द्रवज्रयाह—

**पद्मार्चिता मूर्धनि भोगियुक्ता**
**स्त्री कर्कशारण्यगता विरौति ।**
**शाखां पलाशस्य समाश्रिता च**
**मध्ये स्थिता कर्कटकस्य राशेः ॥ ११ ॥**

इति । कर्कटकस्य[3] मध्ये स्थिता मध्यद्रेक्काणस्वरूपा स्त्री एवं भवति । पद्मार्चिता पद्मैरलङ्कृता । मूर्धनि भोगियुक्ता शिरसि सर्पेण युक्ता । कर्कशा यौवनवती । अरण्यगता विरौति शब्दं कुरुते । पलाशस्य शाखां समाश्रिता च भवति[4] ॥ ११ ॥

---

१. 'ति ॥ पत्र', २. 'ति ॥ पद्मा' ख. पाठः. ३. 'कराशेर्मध्यस्थि' क. पाठः. ४. 'ति ॥ भा' ख. पाठः.

अथ कर्कटान्त्यं स्वरूपमुपजातिकया(?)ह —

**भार्याभरणार्थमर्णवे**
**नौस्थो गच्छति सर्पवेष्टितः ।**
**हैमैश्च विभूषणैर्युत-**
**श्चिपिटास्योऽन्त्यगतश्च कर्कटे ॥ १२ ॥**

इति । कर्कटे अन्त्यगतस्त्रिभागः एवंरूपः । अर्णवे नौस्थः पुरुषः सर्पवेष्टितः सन् भार्याभरणार्थं गच्छति । हैमैर्विभूषणैर्युतश्च । चिपिटास्यः वृत्ताविस्तीर्णमुखः ॥ १२ ॥

अथ सिंहा(द्यस्वरू)पं रथोद्धतयाह —

**[1]शाल्मलेरुपरि गृध्रजम्बु(क ? कौ)**
**श्वा नरश्च मलिनाम्बरान्वितः ।**
**रौति मातृपितृ(?)विप्रयोजितः**
**सिंहरूपमिदमाद्यमुच्यते ॥ १३ ॥**

इति । [3]शाल्मलीवृक्षस्योपरि गृ(ध्र ? ध्रो) जम्बुकश्च श्वा च मातृपितृविप्रयोजितः मलिनाम्बरः नरश्च रौति शब्दं करोति । इदमेवंविधम् आद्यं सिंहरूपं सिंहस्य प्रथमद्रेक्काणरूपमुच्यते । आचार्यैरिति शेषः ॥ १३ ॥

अथ सिंहद्वितीयं वंशस्थेनाह —

**हयाकृतिः पाण्डरमाल्यशेखरो**
**बिभर्ति कृष्णाजिनकम्बलं नरः ।**
**दुरासदः सिंह इवात्तकार्मुको**
**नताग्रनासो मृगनाथमध्यमः ॥ १४ ॥**

इति । मृगनाथमध्यद्रेक्काण एवंरूपो भवति । हयाकृतिः[5] ह्यायतदीर्घशरीरः । पाण्डरमाल्यशेखरः, कृष्णाजिनकम्बलं बिभर्ति कृष्णाजिनं कम्बलं च बिभर्ति । सिंह इव दुरासदः,[6] आत्तकार्मुकः आयुधधरश्च भवति । नताग्रनासः नतनासिकाग्र इत्यर्थः ॥ १४ ॥

१. 'खः ॥ शा' ख. पाठः. २, ३. 'श' क. पाठः. ४. 'षः ॥ ह', ५. 'तिं । सिं', ६. 'र्थः ॥ ऋ' ख. पाठः.

अथ सिंहान्त्यस्वरूपमुपजातिकयाह —

**ऋक्षाननो वानरतुल्यचेष्टो**
**बिभर्ति दण्डं फलमामिषं च ।**
**कूर्ची मनुष्यः कुटिलैश्च केशै-**
**र्मृगेश्वरस्यान्त्यगतस्त्रिभागः ॥ १५ ॥**

इति । मृगेश्वरस्यान्त्यगतस्त्रिभाग एवंरूपो मनुष्यः । ऋक्षाननः ऋक्षोऽच्छभल्लः[2] शाखामृगविशेषः तस्याननमिवाननं[3] यस्य स[4] तथा । अतश्चतुष्पाद्यायं द्रेक्काणः । वानरतुल्यचेष्टः दण्डं फलमामिषं च बिभर्ति । दण्डभरणादुद्यदायुधः । कूर्ची दीर्घश्मश्रुः । कुटिलैः केशै-रुपलक्षितश्च[5] ॥ १५ ॥

कन्याद्यस्वरूपमिन्द्रवज्रयाह —

**पुष्पप्रपूर्णेन घटेन कन्या**
**मलप्रदिग्धाम्बरसंवृताङ्गी ।**
**वस्त्रार्थसंयोगमभीप्समाना**
**गुरोः कुलं वाञ्छति कन्यकाद्यः ॥ १६ ॥**

इति । कन्यकाद्यो[6] द्रेक्काण एवंरूपः । कन्या पुष्पप्रपूर्णेन घटेन उपलक्षिता[8] । मलप्रदिग्धाम्बरसंवृताङ्गी मलिनाम्बरप्रावृतशरीरा । वस्त्रा-र्थसंयोगमभीप्समाना वस्त्रप्राप्तिमर्थप्राप्तिं[9] च काङ्क्षमाणेत्यर्थः । गुरोः कुलं वाञ्छति गुरुकुलं गन्तुमिच्छति[10] ॥ १६ ॥

कन्यामध्यद्रेक्काणरूपं वैतालीयेनाह —

**पुरुषः प्रगृहीतलेखनः**
**श्यामो वस्त्रशिरा व्ययायकृत् ।**
**विपुलं च बिभर्ति कार्मुकं**
**रोमव्याप्ततनुश्च मध्यमः ॥ १७ ॥**

इति । प्रगृहीतलेखनः (श्यामः) पुरुषः । स च वस्त्रशिराः वस्त्रवेष्टि-

---

१. 'विधो म' क. पाठः. २. 'क्षः शा', ३. 'स्य मुखमिव मुखं य' ख. पाठः. ४. 'स ऋक्षाननः । अ' क. पाठः. ५. 'श्च ।', ६. 'श्च ॥ पु', ७. 'न्याद्यद्रे' ख. पाठः. ८. 'ता । सा च म' क. पाठः. ९. 'प्तिं चार्थ', १०. 'ति ॥ पु' ख. पाठः.

तमस्तकः। व्ययायकृद् आयव्ययगणनपर इत्यर्थः । विपुलं कार्मुकं बिभर्ति च, रोमव्याप्ततनुश्च । एवंरूपः कन्याया मध्यद्रेक्काण इत्यर्थः ॥ १७ ॥

अथ कन्यान्त्यस्वरूपमिन्द्रवज्रया(?)ह —

गौरी सुधौतार्द्रदुकूलयुक्ता
समुच्छ्रिता कुम्भकटच्छुहस्ता ।
देवालयं स्त्री प्रयता प्रवृत्ता
वदन्ति कन्यान्त्यगतस्त्रिभागः ॥ १८ ॥

इति । गौरी स्त्री अनागतार्तवा स्त्री । "गौरी तु नग्निकानागतार्तवा" इत्यमरः । सुधौतार्द्रदुकूलयुक्ता सुधौतेन आर्द्रेण दुकूलेन विशिष्टवस्त्रेण युक्ता। समुच्छ्रिता उच्चशरीरा। कुम्भकटच्छुहस्ता कुम्भश्च कटच्छुश्च हस्ते यस्याः सा तथा । कटच्छुर्लोहभाण्डविशेषः । प्रयता शुद्धा । देवालयं प्रवृत्ता देवालयं प्रति गच्छन्तीति यावत् । एवंरूपा स्त्री कन्यान्त्यगतस्त्रिभागः इति वदन्ति। शास्त्रकारा इति शेषः॥ १८ ॥

अथ तुलाद्यस्वरूपं वसन्ततिलकेनाह —

वीथ्यन्तरापणगतः पुरुषस्तुलावा-
नुन्मानमानकुशलः प्रतिमानहस्तः ।
भाण्डं विचिन्तयति कस्य विपण्यमेतद्
रूपं वदन्ति यवनाः प्रथमं तुलायाः ॥ १९ ॥

इति । यवनाः तुलायाः प्रथमं रूपम् एवंविधं वदन्ति । तुलायाः प्रथमद्रेक्काणः पुरुषरूपः । स कीदृशः किं करोतीत्याह — वीथ्यन्तरापणगतः वीथ्यां राजवीथ्याम् अन्तरापणम् अन्तर्निषद्यां गतः । तुलावान्, उन्मानमानकुशलः उन्माने माने च कुशलः । प्रतिमानहस्तः (प्रतिमानं) तुलाभारादिमानसाधनम् । एतद्भाण्डं कस्य विपण्यं विक्रेयमिति चिन्तयति । एवंरूपः प्रथमद्रेक्काण इत्यर्थः ॥ १९ ॥

---

१. 'र्थः ॥ गौ', २. 'वा । गौ', ३. 'क्ता । उच्च', ४. 'षः ॥ वी' ख. पाठः. ५. 'स पुरुषः की', ६. 'त्यत्राह' क. पाठः. ७. 'णगतः अ' ख. पाठः. ८. 'न', ९. 'ने कु' क. पाठः. १०. 'र्थः ॥ क' ख. पाठः.

अथ तुलाद्वितीयस्वरूपं तोटकेनाह —

कलशं परिगृह्य विनिष्पतितुं
समभीप्सति गृध्रमुखः पुरुषः ।
क्षुधितस्तृषितश्च कलत्रसुतान्
मनसैति तुलाधरमध्यगतः ॥ २० ॥

इति । तुलाधरमध्यगतः द्रेकाणः पुरुषः पुरुषरूपः । किं च गृध्रमुखः कलशं परिगृह्य विनिष्पतितुं समभीप्सति गन्तुमिच्छति । क्षुधितस्तृषितश्च[1] बुभुक्षया[2] पिपासया च युक्त इत्यर्थः । कलत्रसुतान् मनसा एति ध्यायतीति यावत्[3] ॥ २० ॥

अथ तुलान्त्यस्वरूपं वंशस्थेनाह —

विभीषयंस्तिष्ठति रत्नचित्रितो
वने मृगान् काञ्चनतूणवर्मभृत्[4] ।
धनुर्धरः किन्नररूपभृन्नर-
स्तुलावसाने यवनैरुदाहृतः ॥ २१ ॥

इति । तुलावसाने द्रेकाण एवंरूपः । धनुर्धरो नरः वने मृगान् विभीषयन् तिष्ठति । रत्नचित्रितः रत्नैरलङ्कृतः । काञ्चनतूणवर्मभृत्, किन्नररूपभृत् विकृतरूप इत्यर्थः[5] ॥ २१ ॥

अथ वृश्चिकप्रथमस्वरूपमुपजातिकयाह —

वस्त्रैर्विहीनाभरणैश्च नारी
महासमुद्रात् समुपैति कूलम् ।
स्थानच्युता सर्पनिबद्धपादा
मनोरमा वृश्चिकराशिपूर्वः ॥ २२ ॥

इति । वृश्चिकराशिपूर्वद्रेकाण[6] एवंविधा स्त्री भवति । मनोरमा नारी स्थानच्युता महासमुद्रात् कूलं समुपैति । वस्त्रैर्विहीनाँ[7] परिधानीयोत्तरीयावकुण्ठनसाधनैर्वस्त्रैर्विहीना, आभरणैश्च[8] विहीना । सर्पनिबद्धपादा च । एवंविधं स्त्रीरूपं वृश्चिकादिद्रेकाणस्य रूपमित्यर्थः[9] ॥ २२ ॥

---

१. 'श्च । कं', २. 'तीत्यर्थः ॥' क. पाठः. ३. 'त् ॥ वि' ख. पाठः. ४. 'धृत् ।' क. पाठः. ५. 'र्थः ॥ वस्त्रैः' ख. पाठः. ६. 'र्वो', ७. 'ना वस्त्रैः प' क. पाठः. ८. 'श्च ही', ९. 'र्थः ॥ स्था' ख. पाठः.

अथ वृश्चिकद्वितीयस्वरूपं (तोटके? दोधके)नाह —

**स्थानसुखान्यभिवाञ्छति नारी**
**भर्तृकृते भुजगावृतदेहा।**
**कच्छपकुम्भसमानशरीरा**
**वृश्चिकमध्यमरूपमुशन्ति ॥ २३ ॥**

इति[1]। वृश्चिकमध्यमरूपम् एवंविधमुशन्ति। भुजगावृतदेहा नारी भर्तृकृते भर्त्रर्थं स्थानसुखानि अभिवाञ्छति। कच्छपकुम्भसमानशरीरा कच्छपवद् वृत्तं कुम्भवन्महोदरं च कच्छपकुम्भसमानं तथाविधं शरीरं यस्याः[2] सा तथा। एवंरूपा स्त्री वृश्चिकमध्यमरूपं वृश्चिकमध्यद्रेक्काणस्य रूपमेवमिति उशन्ति। आचार्या इति शेषः ॥ २३ ॥

अथ वृश्चिकान्त्यस्वरूपं पुष्पिताग्रमाह —

**पृथुलचिपिटकूर्मतुल्यवक्त्रः**
**श्वमृगसृगालवराहभीष (?) कारी।**
**अवति च मलयाचल*प्रदेशं**
**मृगपतिरन्त्यगतश्च वृश्चिकस्य ॥ २४ ॥**

इति। वृश्चिकस्य अन्त्यगतो द्रेक्काणः पृथुलचिपिटकूर्मतुल्यवक्त्रः पृथुलं चिपिटं कूर्मतुल्यं च वक्त्रं यस्य स तथोक्तः[3], तादृशो मृगपतिर्भवति। श्वमृगसृगालवराहाणां भीषकारी भयङ्करः। मलयाचलप्रदेशम् अवति च। मलयाचलप्रदेशं चन्दनवनमिति यावत्[4]। एष द्रेक्काणः मुखे नररूपः अधःकाये सिंहरूपश्चतुष्पाच्च[5] भवति। एवं वृश्चिकान्त्यद्रेक्काणरूपम्[6] ॥ २४ ॥

अथ धन्विपूर्वस्वरूपमिन्द्रवज्रया(?)ह —

**मनुष्यवक्त्रोऽश्वसमानकायो**
**धनुर्विकृष्यायतमाश्रमस्थः।**
**क्रतूपयोग्यानि तपस्विनश्च**
**रक्षत्यथाद्यो धनुषस्त्रिभागः ॥ २५ ॥**

---

१ 'ति। भु' ख. पाठः. २. 'स्याः। ए' क. पाठः. ३. 'थः॥ पृ', ४. 'धाता' ख. पाठः. ५. 'च। ए' क. पाठः. ६. 'णम्॥ मनु' ख. पाठः.

* करप्र इति मूलपाठः.

इति । अथ धनुषः आद्यः त्रिभागः आश्रमस्थः आयतं धनुर्विकृष्य क्रतूपयोग्यानि तपस्विनश्च रक्षतीत्यन्वयः। क्रतूपयो(ज्या? ग्या)नि यज्ञोपयोगिद्रव्याणि । मनुष्यवक्त्रः, अश्वसमानकायः अश्वसमानाधःकायः । तस्मादयं द्रेक्काणो नरश्चतुष्पाच्च उद्यदायुधश्च[3] ॥ २५ ॥

अथ द्वितीयस्वरूपमुपजाति(कमा? कया)ह —

मनोरमा चम्पकहेमवर्णा[1]
भद्रासने तिष्ठति भद्ररूपा ।
समुद्ररत्नानि विघट्टयन्ती
मध्यात्रिभागो धनुषः प्रदिष्टः ॥ २६ ॥

इति । धनुषो मध्यत्रिभाग एवंरूपः प्रदिष्ट इति सम्बन्धः । कीदृग्रूप इत्यत्राह[2] — भद्ररूपा मनोरमा चम्पकहेमवर्णा स्त्री भद्रासने समुद्ररत्नानि विघट्टयन्ती तिष्ठति। भद्रमासनं भद्रासनम् । समुद्ररत्नानि समुद्रजातानि मुक्ताप्रवालादीनि रत्नानि[4] । विघट्टयन्ती चलयन्ती, तिष्ठतीत्यर्थः[5] । एतादृशं धनुर्मध्यद्रेक्काणरूपम् ॥ २६ ॥

अथ तृतीयस्वरूपमुपजातिकयाह —

कूर्ची नरो हाटकचम्पकाभो
वरासने दण्डधरो निषण्णः ।
कौशेयकान्युद्वहतेऽजिनं च
तृतीयरूपं नवमस्य राशेः ॥ २७ ॥

इति । नवमस्य राशेः तृतीयरूपम् एवंविधं भवति[6] । हाटकचम्पकाभः कूर्ची दीर्घश्मश्रुर्नरः वरासने दण्डधरो निषण्णः कौशेयकानि अजिनं च उद्वहते इत्यन्वयः। कौशेयकानि पट्टवस्त्राणि । अजिनं चर्म । दण्डधरत्वेन उद्यदायुध इत्यर्थः[7] । एवंविधं धनुषस्तृतीयद्रेक्काणरूपम् ॥ २७ ॥

---

१. 'गः आय' क. पाठः. २. 'श्च ॥ म' ख. पाठः. ३. 'ह — मनोरमा भद्रस्वरूपा च', ४. 'दिर' क. पाठः. ५. 'र्थः ॥ कू', ६. 'ति । कू', ७. 'र्थः ॥ रो' ख. पाठः.

अथ मकरप्रथमस्वरूपं (तोटके? दोधके)नाह —

रोमचितो मकरोपमदंष्ट्रः
सूकरकायसमानशरीरः ।
योक्त्रकजालकबन्धनधारी
रौद्रमुखो मकरे प्रथमस्तु ॥ २८ ॥

इति । मकरे प्रथमस्तु[1] द्रेक्काण एवंविधो भवति । रोमचितः रोमभिर्व्याप्तशरीरः । मकरोपमदंष्ट्रः मकरो नक्रः तत्सदृशी दंष्ट्रा यस्य स तथोक्तः[2] । सूकरकायसमानशरीरः सूकर[3]शरीरतुल्याधःकायः । योक्त्रकजालकबन्धनधारी योक्त्रं वृषादीनां युगबन्धनपाशः, जालकं निगलाकारलोहजालबद्धपर्यन्ता वागुरा एवंरूपबन्धनद्रव्यधारणशीलः । रौद्रमुखः भयङ्करमुखः पुरुषो भवति । एष द्रेक्काणो निगलभृच्चतुष्पादो नरश्च[4] ॥ २८ ॥

अथ द्वितीयस्य स्वरूपमुपजातिकयाह —

कलास्वभिज्ञाब्जदलायताक्षी
श्यामा विचित्राणि च मार्गमाणा ।
विभूषणालङ्कृतलोहकर्णा
योषित् प्रदिष्टा मकरस्य मध्ये ॥ २९ ॥

इति । मकरस्य मध्यद्रेक्काण एवंविधा योषित्[5] प्रदिष्टा । कलासु अभिज्ञा कलाविद्यासु कुशला । अब्जदलायताक्षी, श्यामा यौवनमध्यस्था, विचित्राणि वस्तूनि वस्त्रादीनि मार्गमाणा अन्विच्छन्ती । विभूषणालङ्कृतलोहकर्णा[6] विभूषणालङ्कृता लोहकर्णा[7] च[8] । विभूषणानि कर्णाभरणादन्यानि गृह्यन्ते । कर्णे लोहालङ्कारै[9]र्युक्तेत्यर्थः[10] ॥ २९ ॥

अथ मकरान्त्यस्वरूपं रथोद्धतयाह —

किन्नरोपमतनुः सकम्बल-
स्तूणचापकवचैः समन्वितः ।

---

१. 'मद्रे' ख. पाठः. २. 'था । सू' क. पाठः. ३. 'रतु', ४. 'श्च ॥ कला' ख. पाठः. ५. 'त् । क' क. पाठः. ६. 'र्णी' ख. पाठः. ७. 'ता च लो' क. पाठः. ८. 'र्णी च । कर्णे' ख. पाठः. ९. 'रा इत्युक्तं भवति ॥' क. पाठः. १०. 'र्थः ॥ कि' ख. पाठः.

**कुम्भमुद्वहति रत्नचित्रितं**
**स्कन्धगं मकरराशिपश्चिमः ॥ ३० ॥**

इति । मकरान्त्यद्रेक्काण एवंविधः । किन्नरोपमतनुः किन्नरवद् विकृतशरीर इत्यर्थः । सकम्बलः कम्बलवेष्टितः । तूणचापकवचैः तूणेन शरधिना चापेन कवचेन च समन्वितः । रत्नचित्रितं स्कन्धगं कुम्भमुद्वहति । एवंविधः पुरुषो मकरान्त्यद्रेक्काणरूपम् ॥ ३० ॥

अथ कुम्भाद्यस्वरूपं रथोद्धतयाह —

**स्नेहमद्यजलभोजनामिष-**
**व्याकुलीकृतमनाः सकम्बलः ।**
**कौशिकेय(?)वसनोऽजिनान्वितो**
**गृध्रतुल्यवदनो घटादिजः ॥ ३१ ॥**

इति । घटादिजः कुम्भस्य आदिभवो द्रेक्काण एवंरूपो भवति । स्नेहमद्यजलभोजनामिषव्याकुलीकृतमनाः स्नेहास्तैलादयः, मद्यं मदिरा, जलं पानीयं, भोजनमोदनादि, आमिषं मांसम् । एतेषामभावात् कथमेतेषां प्राप्तिर्भवेदिति व्याकुलीकृतबुद्धिरित्यर्थः । सकम्बलः शयनासनसाधनकम्बलयुक्तः । कौशिकेयवसनः कौशिकेयं पट्टविशेषः । आजिनान्वितः चर्मणान्वितः, गृध्रतुल्यवदनः । एष द्रेक्काणः पक्षी च ॥३१॥

अथ द्वितीयस्वरूपज्ञानार्थं वैतालीयमाह —

**दग्धे शकटे सशाल्मलौ**
**लोहान्याहरतेऽङ्गना वने ।**
**मलिनेन पटेन संवृता**
**भाण्डैर्मूर्ध्नि गतैश्च मध्यमः ॥ ३२ ॥**

इति । कुम्भमध्य(द्रेक्काण) एवंविधः । अङ्गना वने मलिनेन पटेन संवृता दग्धे शकटे लोहान्याहरते इत्यन्वयः । सशाल्मलाविति वनविशेषणं, शाल्मलीवृक्षसहिते वने । दग्धशकटगतानि लोहानि

१. 'रावापेन चा' ख. पाठः. २. 'गतं कु' क. पाठः. ३. 'पः ॥ [illegible]' ख. पाठः. ४., ५. 'गमैर्व्याकु', ६. 'दि एतेषामागमं प्राप्तिं प्रति व्याकुलीकृतमनाः एतेषां राहित्येन कथमेषां' क. पाठः. ७. 'षः । अजिनं चर्म गृ', ८. 'च ॥ द' ख. पाठः. ९, १०. 'ह' ख. पाठः. ११. 'श', १२. 'णम् । अग्निदग्धे श' क. पाठः.

गृह्णती मलवस्त्रसंवृता मूर्ध्नि स्थितैर्भाण्डैश्च उपलक्षिता अङ्गना तरुणी कुम्भमध्यद्रेक्काण इत्युक्तं भवति । अयं द्रेक्काणश्चाग्निसहितः ॥ ३२ ॥

अथ कुम्भान्त्यस्वरूपमिन्द्रवज्रयाह —

**श्यामः सरोमश्रवणः किरीटी**
**त्वक्पत्रनिर्यासफलैर्बिभर्ति ।**
**भाण्डानि लोहव्यतिमिश्रितानि**
**सञ्चारयत्यन्त्यगतो घटस्य ॥ ३३ ॥**

इति । घटस्यान्त्यगतो द्रेक्काण एवंविधः । श्यामः पुरुषः तथा सरोमश्रवणः लोमशकर्णः, किरीटी च सन्, त्वक्पत्रनिर्यासफलैः लोहव्यतिमिश्रितानि भाण्डानि बिभर्ति सञ्चारयति च । त्वक् चर्म, पत्रं दलं, निर्यासो हिङ्गुगुग्गुल्वादिः, फलानि हरीतक्यादीनि, एतैः क्रयविक्रयसाधनभूतैः सह लोहव्यतिमिश्रितानि भाण्डानि बिभर्ति संगृह्णाति, सञ्चारयति च प्रसारयति (च) । एवंकर्मा पुरुषः कुम्भान्त्यद्रेक्काणरूपः ॥ ३३ ॥

अथ मीनाद्यस्वरूपमिन्द्रवज्रयाह —

**स्रुग्भाण्डमुक्तामणिशङ्खमिश्र-**
**व्याक्षिप्तहस्तः सविभूषणश्च ।**
**भार्याविभूषार्थमपां निधानं**
**नावा प्लवत्यादिगतो झषस्य ॥ ३४ ॥**

इति । झषस्यादिगतो द्रेक्काण एवंकर्मा पुरुषः । स्रुग्भाण्डमुक्तामणिशङ्खमिश्रव्याक्षिप्तहस्तः यज्ञपात्रैः मुक्ताशङ्खादिभिश्च जलद्रव्यैः मिश्रैः मिलितैः व्याक्षिप्तहस्तः सविभूषणः विभूषणैः सहितश्च सन्

१. 'ह्णाति' ख. पाठः. २. 'ह' ख. पाठः. ३. 'ण्डैरुप', ४. 'ता च । एष द्रेक्काणः स्त्रीरूपः ॥' क. पाठः. ५. 'तः ॥ श्या' ख. पाठः. ६. 'रूपः । श्या', ७. 'मः श्यामवर्णः स', ८. 'णः रोमसहिते श्रवणे श्रोत्रे यस्य स तथा । कि' क. पाठः. ९. 'लैः सह लो' ख. पाठः. १०. 'न्धा', ११. 'ग्गुलादीनि फ', १२. 'न्धा', १३. 'पः ॥ स्रु' ख. पाठः. १४. 'दिद्रे', १५. 'व्यमि' क. पाठः. १६. 'तः स' ख. पाठः.

भार्याविभूषार्थम् अपां निधानं समुद्रं नावा प्लवति । एवंव्यापारः पुरुषो मीनादिद्रेक्काणः[1] ॥ ३४ ॥

अथ मीनद्वितीयस्वरूपं वसन्ततिलकेनाह —

अत्यु[2]च्छ्रितध्वजपताकमुपैति पोतं
कूलं प्रयाति जलधेः परिवारयुक्ता ।
वर्णेन चम्पकमुषा प्रमदा त्रिभागो
मीनस्य चैष कथितो मुनिभिर्द्वितीयः ॥ ३५ ॥

इति । मीनस्य द्वितीयस्त्रिभागः[3] मुनिभि[4]रेष कथितः । एष इति एवमुक्तरूप इत्यर्थः । चम्पकमुषा वर्णेन उपलक्षिता प्रमदा परिवारयुक्ता अत्यु[5]च्छ्रितध्वजपताकं पोतमुपैति जलधेः कूलं प्रयाति चेत्यन्वयः[6] । चम्पकमुषा चम्पकसदृशेनेत्यर्थः[7] ॥ ३५ ॥

अथ मीनान्त्यद्रेक्काणस्वरूपमिन्द्रवज्रयाह —

श्वभ्रान्तिके सर्प[8]विवेष्टिताङ्गो
वस्त्रैर्विहीनः पुरुषस्त्वटव्याम् ।
चोरानलव्याकुलितान्तरात्मा
विक्रोशते(?)ऽन्त्यो[9]पगतो झषस्य ॥ ३६ ॥

इति । झषस्य अन्त्योपगतः द्रेक्काणः एवंविधः पुरुषो[10] भवति । वस्त्रैः विहीनः पुरुषः अटव्यां श्वभ्रान्तिके सर्प[11]विवेष्टिताङ्गः चोरानलव्याकुलितान्तरात्मा विक्रोशते इत्यन्वयः[12] । वस्त्रैः परिधानीयोष्णीषैः । श्वभ्रान्तिके[13] गर्तसमीपे । चोरैरनलेना[14]ग्निना च व्याकुलितः अन्तरात्मा यस्य स तथा । विक्रोशते हाकारं कुरुते । एष सर्पद्रेक्काणः अग्निस[15]म्बन्धी च । इति षट्त्रिंशद्विधानां द्रेक्काणानां[16] रूपाणि प्रदर्शितानि । एतद्रूपसम्बन्धिनामसाधारणवस्तूनां प्रश्नसमये दर्शने[17] वा श्रवणे वा

---

१. 'णः ॥ अत्यु' ख. पाठः. २. 'भ्यु' ३. 'ग एवंरूपो मु', ४. 'भिः कथितः च', ५. 'भ्यु', ६. 'यः ॥ अ' क. पाठः. ७. 'र्थः ॥ श्व', ८. 'नि' ख. पाठः. ९ 'न्त्यद्रे', १०. 'षः । व' क. पाठः. ११. 'नि', १२. 'यः । श्व' ख. पाठः. १३. 'के चो', १४. 'न दवाग्नि', १५. 'नलस', १६. 'नामेवं रू', १७. 'ने श्र' क. पाठः.

सति तत्सम्बन्धिना द्रेक्काणेन सूर्यस्य योगे चन्द्रस्य योगे वा सम्भवति प्रष्टुः शुभमशुभं वा फलं दैवज्ञेन निर्देष्टव्यमित्यादिबहुविधोपयोगिं द्रेकाणज्ञानम्[2]। इति समस्तेदृष्टजातकनष्टजात(के ? क)लक्षणोक्त्यनन्तरं द्रेकाणरूपाणि परमकारुणिकेन वराहमिहिराचार्येण सम्यक् प्रदर्शितानीत्यवगन्तव्यम् ॥ ३६ ॥

इति श्रीरुद्रकृते बृहज्जातकविवरणे द्रेक्काणाध्यायः पञ्चविंशः ॥

---

## अथ षड्विंशोऽध्यायः।

अथ चिकीर्षितप्रतिज्ञानिर्व्यूढिम् आत्मौद्धत्यपरिहारपूर्वकं[4] वसन्ततिलकेनाह —

**आदित्यदासतनयस्तदवाप्तबोधः**
***कापिष्ठिलः सवितृलब्धवरप्रसादः।**
**आवन्तिको मुनिमतान्यवलोक्य सम्य-**
**ग्घोरां वराहमिहिरो रुचिरां चकार ॥ १ ॥**

इति। वराहमिहिरोऽहं मुनिमतानि सम्यगवलोक्य रुचिरां होरां चकारेत्यन्वयः। मुनिमतानि गर्गवसिष्ठपराशरादीनां मतानि। सम्यगवलोक्य सम्यक् शब्दादर्थतस्तात्पर्यतश्चावलोक्य, पश्यार्थाः ज्ञानार्थाः, विज्ञायेति यावत्। ग्रहणधारणोहापोहार्थविज्ञानतत्त्वज्ञानगुणयुक्तया[6] बुद्ध्या यथावदवधार्येत्यर्थः। रुचिरां रुचिप्रदां श्रोतॄणां पठनरुचिप्रदामित्यर्थः। होरां गणितजातकशाखाख्यस्कन्धत्रयात्मकस्य ज्योतिःशास्त्रस्य सारभूतं निषेकादिशवपरिणामान्तकालाधिकरणनानाविधफलप्रदर्शनपरं शास्त्रं चकार कृतवानस्मि। कीदृश इत्यत्राह—आदित्यदासतनयः आदित्यदासाख्यस्य कार्तान्तिकोत्तमस्य तनयः। अनेन विशेषणेन सम्प्रदायशुद्धिरुक्ता। तदेव दर्शयति — तदवाप्तबोध इति। तस्मादादित्यदासात् पितुरेव अवाप्तः बोधः ज्ञानं साम्प्रदायिकं जातकविषय-

१. 'वे सति', २. 'णरूपज्ञा', ३. 'स्तजातकदृष्ट' क. पाठः. ४. 'कमुपदिशति —', ५. 'क्य वि', ६. 'र्थज्ञा' ख. पाठः. ७. 'का' ख. पाठः. ८. 'णं ना', ९. 'रं जातकशा', १०. 'त्राह' क. पाठः.

* 'कापित्थके' इति मुद्रितपुस्तकपाठः,

ज्ञानं यस्य सः तदवाप्तबोधः। कापिष्ठिलः कापिष्ठिलगोत्रजात इत्यनेनाभिजन्म सूचितम्। सवितृलब्धवरप्रसादः सवितुरादित्यदेवाल्लब्धो वरप्रसादो यस्य सः सवितृलब्धवरप्रसादः। ननु रावणादिवत् केवलं लब्धवरः, किन्तु आदित्यदेवाल्लब्धवरो लब्धप्रसादश्चेत्यर्थः। अनेन परमकारुणिके सवितरि आत्मनो भक्त्यतिशयं द्योतयता भगवदनुग्रहस्य प्रसादोपबृंहितत्वेन सर्वकामदुघत्वं प्रतीयते। आवन्तिकः अवन्तिविषयभवः। चकारेति उत्तमपुरुषेऽपि परोक्षविषयलिट्प्रयोगेण अत्र शास्त्रे प्रोक्तेषु विस्मापनप्रत्ययादिलक्षणविधिषु स्वमनीषापरिकल्पितत्वं परिह्रियते। एवं पुरातनैरुक्तानि लक्षणानि। एषां लक्षणानां लक्ष्येषु संवादश्च सम्यग् दृश्यते। अतो मया लोकानुग्रहकाम्यया सम्प्रदायसिद्धानि[3] प्रदर्शितानि इति प्रतीयते। आगममूलमिदं शास्त्रमिति द्योतितं[4] भवति ॥ १ ॥

अध्यायानुक्रममाह सार्धेन श्लोकद्वयेन —

> राशिप्रभेदो[1] ग्रहयोनिभेदो
> वियोनिजन्माथ निषेककालः।
> जन्माथ सद्योमरणं तथायु-
> र्दशाविपाकोऽष्टकवर्गसंज्ञः[5] ॥ २ ॥

> कर्माजीवो राजयोगाः खयोगा-
> श्चान्द्रा योगा द्विग्रहाद्याश्च योगाः।
> प्रव्रज्यातो राशिशीलानि दृष्टि-
> र्भावस्थानान्याश्रयोऽथ प्रकीर्णः[6] ॥ ३ ॥

---

१. 'रप्र', २. 'हप्र', ३. 'नि द', ४. 'ति ॥ अध्यायसंग्रहार्थमुपजातिकामाह — रा', ५. 'ज्ञः ॥ इति। प्रथमो राशिप्रभेदः द्वितीयो ग्रहयोनिभेदः तृतीयो वियोनिजन्मा चतुर्थो निषेककालः पञ्चमो जन्म षष्ठः सद्योमरणं सप्तम आयुर्दायः अष्टमो दशाफलानि नवमोऽष्टकवर्गः ॥ 'पुनरपि शालिनीमाह — कर्मा', ६. 'र्णः। इति। दशमः कर्माजीवः एकादशो राजयोगः द्वादशः खयोगः त्रयोदशश्चान्द्रयोगः चतुर्दशो द्विग्रहयोगः पञ्चदशः प्रव्रज्यायोगः षोडशो राशिशीलानि सप्तदशो ग्रहदृष्टिः अष्टादशो भावफलम् एकोनविंश आश्रययोगः विंशः प्रकीर्णः ॥ पुनरपि शालिनीमाह — नेष्टा', क. पाठः.

नेष्टा योगा जातकं भामिनीनां
निर्याणं स्यान्नष्टजन्मा दृगाणः।

इति। तत्र प्रथमं राशिभेदाध्यायेन द्वितीयेन ग्रहयोनिभेदाध्यायेन च शास्त्रव्यवहारसि(द्धेः? द्धये) राशिग्रहाणां संज्ञा तत्सम्बन्धिनो विशेषाश्च प्रदर्शिताः। तृतीयेन वियोनिजन्माध्यायेन मानुषेतराणां चतुष्पदां पक्षिणां तरूणां च लक्षणानि प्रदर्शितानि। चतुर्थेन निषेकाध्यायेन ऋतुकालमिथुनमैथुनगर्भसम्भवानां, सम्भूतस्य गर्भस्य (स्त्री)पुन्नपुंसकत्वप्रसवकालानां च लक्षणानि प्रदर्शितानि। पञ्चमेन जन्माध्यायेन विस्मापनतात्कालिकलक्षणप्रपञ्चदर्शनपुरस्सरं जातकशास्त्रप्रतिपाद्यानां लक्षणानां प्रथमसाधनं जन्म प्रदर्शितम्। षष्ठेन सद्योमरणाध्यायेन जातस्यारिष्टनिमित्तानि विनाशलक्षणानि प्रदर्शितानि। सप्तमेनायुर्दायाध्यायेन अरिष्टलक्षणाभावाज्जीविताज्जीवनकालज्ञानं प्रदर्शितम्। अष्टमेन दशाविपाकाध्यायेन जीवतां जीवितकालस्य यथानिर्दिष्टक्रमभाविभिर्दशान्तर्दशाभेदैर्बहुधा विभक्तस्य पुनरावर्तमानवर्षमासदिवसाद्यात्मकस्य तत्तत्कालफलविशेषानुभवनिर्देशसाधनत्वं प्रदर्शितम्। ततो नवमेनाष्टकवर्गाध्यायेन ग्रहाक्रान्तराशिचक्रस्य षण्णवतिधा विभक्तस्य ग्रहगोचरवशेन फलविशेषनिर्देशप्रकारः प्रदर्शितः। ततः कर्माजीवाध्यायेन राजयोगाध्यायेन खयोगाध्यायेन चान्द्रयोगाध्यायेन द्विग्रहादियोगाध्यायेन प्रव्रज्याध्यायेन राशिशीलाध्यायेन (दृष्टिफलाध्यायेन) भावाध्यायेन (स्थानाध्यायेन?) आश्रयाध्यायेन प्रकीर्णकाध्यायेन क्रमादेकादशभिरध्यायैर्जन्मिनां पुंसां नैसर्गिकानि लक्षणानि प्रदर्शितानि। एकविंशेन ने(ष्टा? ष्ट)योगाध्यायेन पुंसां पुत्रकलत्रेन्द्रियाद्यनिष्टयोगाः प्रदर्शिताः। द्वाविंशेन भामिनीजातकाध्यायेन स्त्रीणां लक्षणान्युक्तानि। त्रयोविंशेन निर्याणाध्यायेन पुंसामनुभूतदशाफलगोचरफलनिसर्गफलानामवसाने देहवियोगलक्षणस्य निर्याणस्य कारणभेदाश्च प्रदर्शिताः। चतुर्विंशेन नष्टजातका-

---

१. 'णः। अध्यायानां विंशतिः पञ्चयुक्ता चत्वार्युक्तान्यत्र वृत्ता (?) शतानि॥ इति। एकविंशोऽनिष्टयोगः द्वाविंशः स्त्रीजातकं त्रयोविंशो निर्याणं चतुर्विंशो नष्टजातकं पञ्चविंशो द्रेक्काणफलम्। षड्विंशोऽध्यायक्रमप्रदर्शनपरोऽध्यायः॥' क. पाठः.

ध्यायेन दैवज्ञैरवश्यमादेष्टव्यस्य पृच्छकानां जातकफलस्य मूलभूत-जन्मकालपरिज्ञानेऽपि प्रश्नकालविलग्नवशाज्जातकानयनं प्रदर्शितम् । पञ्चविंशाध्यायेन संज्ञाध्याये पूर्वमदर्शितानां तत्रतत्र फलविशेषनिर्देशोपयोगिनां द्रेक्काणानां रूपं प्रदर्शितम् । तस्मात् पञ्चविंशो द्रेक्काणाध्यायः ॥ ३½ ॥

अथ उत्तरार्धेन अध्यायसङ्ख्यामाह —

**इत्यध्याया विंशतिः पञ्च चोक्ता**
**वृत्तान्येभिः स्युस्त्र्यशीत्या शतानि ॥ ४ ॥**

इति । उक्तप्रकारेण अध्याया विंशतिः पञ्च च उक्ताः । तथा एभिरध्यायैः त्र्यशीत्या शतानि वृत्तानि स्युः । अत्र शास्त्रे अध्यायाः पञ्चविंशतिः । तेषु चाध्यायेषु साकल्येन त्र्यशीतिसहितानि त्रीणि शतानि वृत्तानि (इति) उक्तं भवति । एवं जातकविषयं शास्त्रं पञ्चविंशत्यध्यायं त्र्यशीत्युत्तरशतत्रयप्रमाणश्लोकत्वेनोपसंहृतम् । अथ केचिच्चतुर्थपादमन्यथा पठन्ति—"जन्माद्येतद्यात्रिकं चाभिधास्ये" इति । अस्मिन् पक्षे श्लोकसङ्ख्या नोक्ता स्यात् ॥ ४ ॥ *

श्रीमान् वराहमिहिराचार्यः स्वात्मना विरचिताया यात्राहोरायाश्च अध्यायानुपदिशति —

**प्रश्नास्तिथिर्भं[1] दिवसाः क्षणाश्च**
**चन्द्रो विलग्नं त्वथ लग्नभेदः ।**
**सिद्धिर्ग्रहाणामथ चापवादो**
**विमिश्रकार्यं[2] तरुवेधनं च ॥**

**अतःपरं गुह्यकपूजनं स्यात्**
**स्वप्नं तथा[3] स्नानविधिः प्रदिष्टः ।**
**याज्ञे ग्रहाणामपि निग्रहश्च**
**क्रमादथोक्तः शकुनोपदेशः ॥**

एते प्रश्नादयः शकुनोपदेशान्ता यात्राहोरायां निर्दिष्टाः ॥

---

१. 'न्मन्येत', २. 'र्यं', ३. 'प', ४. 'तः', ५. 'मथ निर्गमश्च' इति मुद्रितपाठः.

---

* राशिप्रभेद इत्याद्यारभ्यैतदन्तो भागः पञ्चविंशाध्यायान्तिमोऽशो योजनीयः ।

विवाहकालः करणं ग्रहाणां
प्रोक्तं तथोक्ता विपुला च शाखा।
स्कन्धैस्त्रिभिर्ज्योतिषसङ्ग्रहोऽयं
मया कृतो दैवविदां हिताय॥

विवाहकालो विवाहपटलः, ग्रहाणां करणं पञ्चसिद्धान्तिकाख्यं गणितशास्त्रं, तथा विपुला शाखा संहिताख्यं शास्त्रं मया कथितम्। एवमयं ज्योतिषसङ्ग्रहः गणितस्कन्धसंहितास्कन्धजातकस्कन्धाख्यैस्त्रिभिः स्कन्धैः मया दैवविदां हिताय कृतः॥

पृथु विरचितमन्यैः शास्त्रमेतत् समस्तं[1]
तदनु लघुतयैतत्[2] तत्प्रदेशार्थयुक्तम्[3]।
कृतमिह हि समर्थं धीविषाणामलत्वे
मम यदिह दुरुक्तं सज्जनैः क्षम्यतां तत्॥

मया संक्षिप्य लघुतया कृतमपीदं शास्त्रं धीविषाणामलत्वे समर्थं बुद्धिशृङ्गस्य निर्मलीकरणे समर्थम्। इह मया यद् दुरुक्तं भवति तत् सज्जनैः क्षम्यताम्॥

ग्रन्थस्य तु[4] प्रचरतोऽस्य[5] विनाशमेति
लेख्यात् बहुश्रुतमुखाधिगतक्रमेण[6]।
यद्यन्मयोरुकृतमल्पतया कृतं वा
कार्यं तदत्र विदुषा परिहृत्य रागम् (?)॥

इत्यस्य ग्रन्थस्य पाररक्षणाय विद्वज्जनं प्रार्थयते॥

दिनकरमुनिगुरुचरणप्रणिपातकृतप्रसादमतिनेदम्।
शास्त्रमुपसङ्गृहीतं नमोऽस्तु पूर्वप्रणेतृभ्यः॥

दिनकरो रविः, मुनयो वसिष्ठरोमशपौलिशाः, गुरुः पितामहः ब्रह्मा, एते पञ्च सिद्धान्तकर्तारः। तेषां प्रणिपातेन कृतप्रसादमतिना मया इदं ज्योतिर्विषयं शास्त्रं सारसङ्ग्रहरूपेण प्रदर्शितम्। इति। (स्व ? सर्व)लोकानुग्रहाय स्कन्धत्रयसारसङ्ग्रहात्मकम् आत्मनो व्यापारमुपसंहरन्नाचार्यः ज्योतिश्शास्त्रस्य प्रणायकान् पूर्वाचार्यान् नमस्करोति — नमोऽस्तु पूर्वप्रणेतृभ्य इति।

---

१. 'पृथक् तद् वि', २. 'म', ३. 'थंमेव', ४. 'चा', ५. 'तो', ६. 'म' इति मुद्रितपाठः.

श्रीमद्वराहहोरातात्पर्यमनल्पमपि यथाशक्ति ।
विवृतं मयेह तदिदं विशोधयन्तु सुधियोऽनुगृह्णन्तु ॥

कृत्वा रुक्मिसहोदरीकमितरि प्रावण्यपूतं मन-
स्तद्विभ्रम्य गिरा वराहमिहिरोक्तेरर्थनामिश्रया ।
सत्स्वीकृत्यनुविद्धमागमिकताप्राणं सुधीदं प्रिया-
यार्थे (?) व्याकृषि वास्तवज्ञसदनो नन्वल्पयाहं धिया ॥

भद्राशीर्निर्धूताघाद्धि मकरेऽर्के बुधोदये ।
इदं होराविवरणं रुद्रेण सुसमापितम् ॥

इति होराविवरणे षड्विंशोऽध्यायः ॥

---

शुभं भूयात् ।

## होराशास्त्रे स्मृता ग्रन्थकर्तारः।

## विवरणोपात्तवाक्यतद्ग्रन्थतत्कर्तारः ।

| पृष्ठम्. | वाक्यानि. | ग्रन्थनाम. | कर्तृनाम. |
|---|---|---|---|
| २ | 'आशीर्नमस्क्रिया—' | ... | ... |
| ,, | 'एतद्यन्मण्डलं—' | ... | ... |
| ,, | 'प्रसज्यप्रतिषेधोऽसौ—' | ... | भर्तृहरिः |
| ३ | 'प्रकाशकौ द्वौ—' | ... | .... |
| ,, | 'सलिलमये शशिनि—' | संहिता | ... |
| ,, | 'चन्द्रो जलमयो—' | ... | आर्यभटः |
| ,, | 'द्वावेव पुरुषौ—' | ... | ... |
| ४ | 'अग्नौ प्रास्ताहुतिः—' | ... | ... |
| ५ | 'मूलाधारोद्गतो—' | ... | ... |
| ७ | 'प्रमाणमिच्छा च—' | ... | ... |
| ,, | 'नवांशके शीतगु—' | ... | ... |
| ८ | 'प्रियो मौनी नटो—' | ... | ... |
| ९ | 'शुश्रूषा श्रवणं चैव—' | ... | ... |
| ,, | 'स्वस्थचित्तो—' | ... | ... |
| १० | 'ज्ञेयोऽत्र प्रथमं—' | ... | श्रीपतिः |
| ,, | 'यदुपचितमन्य—' | सारावली | ... |
| ,, | 'दशाप्रभेदेन—' | ... | ... |
| १२ | 'चन्द्रो रुद्रो जयो—' | ... | ... |
| ,, | 'अथ गुलिकः—' | ... | ... |
| ,, | 'सर्वो द्वन्द्वो—' | ... | ... |
| १३ | 'मेषादेः कन्यान्तं—' | ... | ... |
| १७ | 'ग्रहभागेष्ववका—' | कृष्णीयम् | |
| ,, | 'जातो न जीवति—' | ... | ... |
| १८ | 'मूलाधारे दृगाणः—' | ... | ... |
| ,, | 'इह तावदक्षदशकं—' | ... | भगवत्पादाचार्यः |
| १९ | 'सिंहः कन्या तुलाली—' | ... | ... |
| ,, | 'पृष्ठोदयेषु—' | कृष्णीयम् | ... |
| २० | 'ओजेषूग्राः पुरुषाः—' | सारावली | ... |
| ,, | 'विषमेषु ग्रह—' | कृष्णीयम् | ... |
| २१ | 'स्थिरराशौ लग्न—' | ... | भट्टोत्पलः |
| ,, | 'क्षितिसुतरवि—' | कृष्णीयम् | ... |

| पृष्ठम्. | वाक्यानि. | ग्रन्थनाम. | कर्तृनाम. |
|---|---|---|---|
| २१ | 'द्रेक्काणसदृश—' | ... | ... |
| २२ | 'रवीन्द्वोर्विषमे—' | ... | ... |
| २३ | 'सुखिनः प्रकृष्ट—' | कृष्णीयम् | ... |
| ,, | 'वर्गोत्तमा नवांशा—' | सारावली | ... |
| २४ | 'सिंहे विंशति—' | ... | विद्यामाधवः |
| ,, | 'तन्त्रे सुपरिज्ञाते—' | ... | ... |
| २५ | 'अथोपचयसंज्ञा—' | ... | ... |
| २७ | 'लग्नाद्याः स्युर्भावा—' | ... | ... |
| २८ | 'केन्द्रात् परं पण—' | सारावली | ... |
| ,, | 'यो यो भावः—' | ... | ... |
| ,, | 'मूर्त्यादिभाव—' | ... | ... |
| २९ | 'केन्द्रस्थाः स्युः—' | ... | बादरायणः |
| ,, | 'सर्वमपहाय—' | ... | ... |
| ३० | 'भवनाधिपति—' | सारावली | ... |
| ,, | 'अविकारकरं—' | ... | ... |
| ३१ | 'आत्मा सहैति—' | संहिता | .... |
| ,, | 'ग्रहा वारनाथा—' | ... | ... |
| ,, | 'चन्द्रार्कौ बल—' | ... | ... |
| ,, | 'आत्मादयो गगन—' | सारावली | ... |
| ३२ | 'द्वादशमण्डल—' | ,, | ... |
| ३४ | 'रविकुजसुरगुरु—' | कृष्णीयम् | .... |
| ,, | 'अमावास्याचतु—' | ... | ... |
| ३५ | 'क्रूरग्रहोऽर्कः कुज—' | ... | यवनः |
| ,, | 'आचारसत्त्व—' | सारावली | ... |
| ३७ | 'विप्रौ भृगुजेन्द्र—' | कृष्णीयम् | ... |
| ,, | 'साम्नो भृग्वङ्गिरसौ—' | सङ्ग्रामविजयः | ... |
| ,, | 'सूर्यात्मजेन्दुपुत्रौ—' | कृष्णीयम् | ... |
| ,, | 'सात्त्विकं शौच—' | ... | ... |
| ३८ | 'राजसं बहुभाषित्वं—' | ... | ... |
| ,, | 'तामसं भयमज्ञानं—' | ... | .... |
| ,, | 'एकाकिनि वन—' | ... | ... |
| ,, | 'यः सात्त्विकस्तस्य—' | ... | ... |

| पृष्ठम्. | वाक्यानि. | ग्रन्थनाम. | कर्तृनाम. |
|---|---|---|---|
| ५८ | 'स्त्रीणां गतोऽ—' | ... | बादरायणः |
| ५९ | 'क्षामप्रसन्नवदनां—' | ... | ... |
| ,, | 'रजोनिर्गमनात्—' | ... | ... |
| ,, | 'पुरुषोपचयगृह—' | ... | बादरायणः |
| ६० | 'भर्तुः शुद्धा चतुर्थे—' | ... | ... |
| ,, | 'पुत्रोऽल्पायुर्दारिका—' | ... | ... |
| ६२ | 'लग्नाधिपो वा—' | ... | ... |
| ,, | 'भार्याधिपस्थित—' | ... | ... |
| ६४ | 'क्रूरेषु पतिं त्यजति—' | ... | ... |
| ,, | 'सन्तो ह्याहुरपत्यार्थे—' | ... | ... |
| ६५ | 'शुद्धे शुक्लार्तवे—' | ... | ... |
| ,, | 'शुक्लं शुद्धं गुरु—' | ... | ... |
| ,, | 'पूर्णषोडशवर्षा स्त्री—' | ... | ... |
| ६६ | 'क्रमाच्चन्द्रक्रियाः—' | ... | ... |
| ६७ | 'मार्तण्डोदय—' | ... | ... |
| ६८ | 'जन्मान्तरकृतं पापं—' | ... | ... |
| ,, | 'राक्षसभुजङ्गभैरव—' | ... | ... |
| ६९ | 'गुरुस्थितसुतस्थाने—' | ... | ... |
| ,, | 'लग्नस्येन्दोर्गुरो—' | ... | ... |
| ७१ | 'स्फुटमिह भवति—' | ... | ... |
| ,, | 'मनःशरीरयोस्तापः—' | ... | ... |
| ७२ | 'अशुभैर्द्वादश—' | ... | गार्गिः |
| ७३ | 'वस्तिद्वारे विपन्नायाः—' | ... | वाहटः |
| ७९ | 'अन्योन्यं रविचन्द्रौ—' | ... | बादरायणः |
| ८१ | 'समराशौ शशि—' | सारावली | ... |
| ८२ | 'सौरं विदुर्भास्कर—' | ... | ... |
| ८३ | 'ओजोऽष्टमे—' | ... | ... |
| ८४ | 'गर्भिण्याः परि—' | ... | ... |
| ,, | 'सञ्जातसारे महति—' | ... | ... |
| ८६ | 'कुलीरालिझषा—' | ... | गार्गिः |
| ८८ | 'लग्नद्रेक्काणगो—' | ... | ,, |
| ८९ | 'शेषत्वादायुषो—' | ... | वाहटः |

| पृष्ठम्. | वाक्यानि. | ग्रन्थनाम. | कर्तृनाम. |
|---|---|---|---|
| ९० | 'यावत्संख्ये —' | ... | ... |
| ९३ | 'नवांशकं तु प्रथमं —' | ... | ... |
| ९५ | 'चरे चरस्थिरद्वन्द्वाः —' | ... | ... |
| ९६ | 'चरस्थिरोभयेष्वाथ —' | ... | ... |
| ९७ | 'होरामनीक्षमाणे—' | सारावली | ... |
| ९८ | 'भौमद्रेकाणगे चन्द्रे —' | ... | गार्गिः |
| ९९ | 'विस्तीर्णा पृथिवी —' | ... | ... |
| १०० | 'गुरुक्षेत्रगते चन्द्रे —' | ... | गार्गिः |
| १०२ | 'जलवत्यजलेन —' | कृष्णीयम् | ... |
| १०७ | 'म्रियते च पापदृष्टे —' | सारावली | ... |
| १०८ | 'पितृमातृगृहे वर्गे —' | ,, | ... |
| १०९ | 'एकद्वित्रिचतुश्शर —' | पद्धतिः | ... |
| ,, | 'दिग्भ्योऽधिकं पश्यति —' | ... | श्रीपतिः |
| ११० | 'योगे दृष्टिफलं योज्यं —' | ... | ... |
| ,, | 'जातस्तमिस्रे यदि—' | ... | यवनेश्वरः |
| १११ | 'नीचस्थे भूशयनं —' | सारावली | ... |
| ,, | 'शीर्षोदये विलग्ने —' | ,, | ... |
| ,, | 'लग्नाधिपेंऽशक —' | ... | मणिन्थः |
| ,, | 'क्लेशो मातुः क्रूरैः —' | सारावली | ... |
| ११६ | 'उदयशशिमध्य —' | ... | जीवशर्मा |
| ,, | 'शशिलग्नान्तर —' | स्वल्पजातकम् | ... |
| १२२ | 'अर्धास्तमयादूर्ध्वं —' | संहिता | ... |
| १२३ | 'पूर्वापरभागगतै —' | ... | बादरायणः |
| ,, | 'पर्यभिभ्यां —' | ... | ... |
| ,, | 'पापेषु लग्नाभि —' | .... | यवनेश्वरः |
| ,, | 'अरिव्ययगतैः —' | .... | ... |
| १२४ | 'पापेषु लग्नाभि —' | ... | यवनेश्वरः |
| १२५ | 'व्ययाष्टसप्तोदयगे —' | सारावली | ... |
| ,, | 'क्षीणे च चन्द्रे व्ययगे —' | .... | गार्गिः |
| १२६ | 'लग्नाच्छशी नैध —' | ... | यवनेश्वरः |
| ,, | 'पक्षे सिते भवति —' | .... | मालव्यः |
| १३१ | 'स्वोच्चशुद्धा ग्रहाः —' | सारावली | ... |

| पृष्ठम्. | वाक्यानि. | ग्रन्थनाम. | कर्तृनाम. |
|---|---|---|---|
| १७१ | 'सप्तैते होरेशाः—' | .... | आर्यभटः |
| १७६ | 'देवो धवो धिगो—' | ... | ... |
| ,, | 'देवः सुम्भः समा—' | ... | ... |
| ,, | 'कालो बलीयान्—' | ... | ... |
| ,, | 'पुंसां जन्मादिभावेषु—' | ... | विद्यामाधवः |
| १८० | 'इष्टान्युदयोच्चादौ—' | ... | ... |
| १८१ | 'पाकं द्वादशधा वदन्ति—' | जातकपद्धतिः | श्रीपतिः |
| १८३ | 'उदयादिन्दुतो वा—' | ... | गार्गिः |
| १८५ | 'सम्रृगोरगसारङ्ग—' | ... | ... |
| १८६ | 'पापैः पापमतिः स्यात्—' | ... | यवनाः |
| १८७ | 'पापैरुच्चगतैर्जाता—' | ... | जीवशर्मा |
| ,, | 'त्रिप्रभृतिभिरुच्चस्थै—' | स्वल्पजातकम् | आचार्यः |
| १८९ | 'लग्ने सौरस्तुङ्गे—' | ... | बादरायणः |
| ,, | 'आदित्यश्च निशा—' | ... | माण्डव्यः |
| १९० | 'सूर्यश्चापे सेन्दु—' | ... | बादरायणः |
| १९५ | 'तुलायां दशमे भागे—' | ... | ... |
| १९७ | 'पापक्षेत्रगतैः पापैः—' | ... | गार्गिः |
| २०० | 'आश्लेषार्धाद्—' | संहिता | वराहमिहिरः |
| २०६ | 'सृष्ट्वा ग्रहेन्द्रान् निदध्रे—' | ... | ... |
| २०७ | 'स्वांशेऽथवाधिमित्रांशे—' | ... | गार्गिः |
| २०८ | 'निधनं शून्यं षष्ठे—' | ... | श्रुतकीर्तिः |
| ,, | 'शशिनः सौम्याः षष्ठे—' | ... | बादरायणः |
| २११ | 'सर्वत्र सम्पदस्तस्य—' | ... | .... |
| २१४ | 'अपुत्रामात्रावुभावेतौ त्रि—' | ... | ... |
| ,, | 'अथौपनिषदिकम्—' | कौटल्यादिसूत्रम् | कौटल्यः |
| २१५ | 'अतिमतिरतिविभव—' | .... | ... |
| ,, | 'किं कुर्वन्ति ग्रहाः—' | ... | .... |
| २१७ | 'सम्पदो गुरुसंयोगे—' | ... | ... |
| २१९ | 'वर्णधर्माश्रमाचार—' | ... | .. |
| २२१ | 'नवमस्थाने सौरो—' | ... | ... |
| २३१ | 'शशिचन्द्रानलहिम—' | पराशरहोरा | पराशरः |
| २३९ | 'शिखिशुक्रार्कचन्द्रार—' | ... | ... |

| पृष्ठम्. | वाक्यानि. | ग्रन्थनाम. | कर्तृनाम. |
|---|---|---|---|
| २५२ | 'विवेकिनो भवन्—' | ... | ... |
| २५३ | 'अधमं जीवधनं—' | ... | ... |
| २५४ | 'सर्वेषां वारतारा—' | उमामहेश्वर-[संवाद: | ... |
| २५५ | 'वदन्ति भावैक्य—' | ... | श्रीपति: |
| २६३ | 'जन्माधिपो लग्नप—' | ... | यवनेश्वर: |
| २६४ | 'आदावन्तेऽन्तःफल—' | ... | गार्गि: |
| २६५ | 'धीचित्पुत्राङ्ग—' | ... | ... |
| २६६ | 'चतुर्थाष्टमगै: —' | ... | गार्गि: |
| २६७ | 'पञ्चमे नवमे द्यूने—' | ... | ,, |
| २७० | 'षष्ठं द्वितीयभवनं—' | ... | ... |
| २७१ | 'परस्परगृहे यातौ—' | ... | गार्गि: |
| २७२ | 'चक्षुस्तेजोमयं तस्य—' | .. | वाहट: |
| २७३ | 'अश्मनो जन्म—' | ... | ... |
| २७६ | 'धूमो वेदगृहे—' | ... | ... |
| २८५ | 'सौन्दर्यं लग्न—' | .... | ... |
| २९३ | 'मरणं प्राणिनां—' | ... | ... |
| २९४ | 'अत्युत्कटै: पुण्य—' | ... | ... |
| ,, | 'लग्नपगुरुरवि —' | ... | ... |
| ,, | 'लग्नाधिपस्थित—' | ... | ... |
| २९८ | 'तस्मान्नृप: कुसुम—' | महायात्रा | ... |
| ,, | 'अथ नृपतिसमीपे—' | ,, | ... |
| ३०२ | 'दर्शावधि मासम्—' | ... | ... |
| ,, | 'चित्रादितारका—' | ... | बोधायन: |
| ३०६ | 'समत्रिघातस्तु घन:—' | ... | ... |
| ,, | 'दिनप्रवृत्तिर्मरुताम्—' | ... | श्रीपति: |
| ३१२ | 'यावन्नानुग्रह:—' | ... | ... |

# श्लोकानुक्रमणी ।

## शुद्धिपत्रम् ।

| पृष्ठम्. | पङ्क्तिः. | अशुद्धम्. | शुद्धम्. |
|---|---|---|---|
| १८ | १८ | द्वादशा | द्वादशां |
| १९ | २ | प्रश्नो | प्रश्ने |
| ३० | १० | पुरुष | पुरुषे |
| ३८ | ३ | गुजाका | कुजार्की |
| ५८ | २४ | पल्ये | प्रल्ये |
| ९६ | १ | सोश्च | साश्च |
| १५१ | १० | भावो | भांवो |
| २८६ | ६ | युधाति | युवति |
| २८८ | १९ | स्थित | स्थिते |
| २९६ | २५ | णान्तर | णानन्तर |
| ३३० | २४ | याज्ञे | यज्ञो |
| ३३१ | १७ | ह्यान् | ह्याद् |

## READY FOR SALE.

| | RS. | AS. | P. |
|---|---|---|---|
| भक्तिमञ्जरी (Stuti) by H. H. Svâti Srî Râma Varma Mahârâjah. | 1 | 0 | 0 |
| स्यानन्दूरपुरवर्णनप्रबन्धः (Kavya) Syânandûrapuravarnanaprabandha by H. H. Svâti Sri Râma Varma Mahârâjah, with the commentary Sundarī of Râjarâja Varma Koil Tampurân. | 2 | 0 | 0 |

### Trivandrum Sanskrit Series.

| | RS. | AS. | P. |
|---|---|---|---|
| No. 1—दैवम् (Vyâkarana) by Deva with Purushakâra of Krishnalîlâsukamuni. | 1 | 0 | 0 |
| No. 2—अभिनवकौस्तुभमाला-दक्षिणामूर्तिस्तवौ by Krishnalîlâsukamuni. | 0 | 2 | 0 |
| No. 3—नलाभ्युदयः (Kâvya) by Vâmana Bhatta Bâna (Second Edition). | 0 | 4 | 0 |
| No. 4—शिवलीलार्णवः (Kâvya) by Nîlakantha Dîkshita. | 2 | 0 | 0 |
| No. 5—व्यक्तिविवेकः (Alankâra) by Mahima Bhatta with commentary. | 2 | 12 | 0 |
| No. 6—दुर्घटवृत्तिः (Vyâkarana) by Saranadeva. | 2 | 0 | 0 |
| No. 7—ब्रह्मतत्त्वप्रकाशिका (Vedânta) by Sadâsivendra Sarasvatî. | 2 | 4 | 0 |
| No. 8—प्रद्युम्नाभ्युदयम् (Nâtaka) by Ravi Varma Bhûpa. | 1 | 0 | 0 |
| No. 9—विरूपाक्षपञ्चाशिका (Vedânta) by Virûpâkshanâtha with the commentary of Vidyâchakravartin. | 0 | 8 | 0 |
| No. 10—मातङ्गलीला (Gajalakshana) by Nîlakantha. | 0 | 8 | 0 |
| No. 11—तपतीसंवरणम् (Nâtaka) by Kulasekhara Varma with the commentary of Sivarâma. | 2 | 4 | 0 |
| No. 12—परमार्थसारम् (Vedânta) by Bhagavad Âdisesha with the commentary of Râghavânanda. | 0 | 8 | 0 |
| No. 13—सुभद्राधनञ्जयम् (Nâtaka) by Kulasekhara Varma with the commentary of Sivarâma. | 2 | 0 | 0 |

| | RS. | AS. | P. |
|---|---|---|---|
| No. 14—नीतिसारः (Nîti) by Kâmandaka, with the commentary of Sankarârya. | 3 | 8 | 0 |
| No. 15—स्वप्नवासवदत्तम् (Nâtaka) by Bhâsa. (Second Edition). | 1 | 8 | 0 |
| No. 16—प्रतिज्ञायौगन्धरायणम् (Nâtaka) by Bhâsa. | 1 | 8 | 0 |
| No. 17—पञ्चरात्रम् Do. Do. | 1 | 0 | 0 |
| No. 18—नारायणीयम् (Stuti) by Nârâyana Bhatta with the commentary of Desamangala Vârya. | 4 | 0 | 0 |
| No. 19—मानमेयोदयः (Mîmâmsâ) by Nârâyana Bhatta and Nârâyana Pandita. | 1 | 4 | 0 |
| No. 20—अविमारकम् (Nâtaka) by Bhâsa. | 1 | 8 | 0 |
| No. 21—बालचरितम् Do. Do. | 1 | 0 | 0 |
| No. 22—मध्यमव्यायोग-दूतवाक्य-दूतघटोत्कच-कर्णभारोरुभङ्गानि (Nâtaka) by Bhâsa. | 1 | 8 | 0 |
| No. 23—नानार्थार्णवसंक्षेपः (Kosa) by Kesavaswâmin (Part I. 1st & 2nd Kândas). | 1 | 12 | 0 |
| No. 24—जानकीपरिणयः (Kâvya) by Chakra kavi. | 1 | 0 | 0 |
| No. 25—काणादसिद्धान्तचन्द्रिका (Nyâya) by Gangâdharasûri. | 0 | 12 | 0 |
| No. 26—अभिषेकनाटकम् (Nâtaka) by Bhâsa. | 0 | 12 | 0 |
| No. 27—कुमारसम्भवः (Kâvya) by Kâlidâsa with the two commentaries, Prakâsikâ of Arunagirinâtha and Vivarana of Nârâyana Pandita (Part I. 1st & 2nd Sargas). | 1 | 12 | 0 |
| No. 28—वैखानसधर्मप्रश्नः (Dharmasûtra) by Vikhanas. | 0 | 8 | 0 |
| No. 29—नानार्थार्णवसंक्षेपः (Kosa) by Kesavaswâmin (Part II. 3rd Kânda). | 2 | 4 | 0 |
| No. 30—वास्तुविद्या (Silpa). | 0 | 12 | 0 |
| No. 31—नानार्थार्णवसंक्षेपः (Kosa) by Kesavaswâmin (Part III. 4th, 5th & 6th Kândas). | 1 | 0 | 0 |

| | RS. | AS. | P. |
|---|---|---|---|
| No. 32—कुमारसम्भवः (Kâvya) by Kâlidâsa with the two commentaries, Prakâsikâ of Arunagirinâtha and Vivarana of Nârâyana Pandita (Part II. 3rd, 4th & 5th Sargas). | 2 | 8 | 0 |
| No. 33—वाररुचसंग्रहः (Vyâkarana) with the commentary Dîpaprabhâ of Nârâyana. | 0 | 8 | 0 |
| No. 34—मणिदर्पणः (शब्दपरिच्छेदः) (Nyâya) by Râjachûdâmanimakhin. | 1 | 4 | 0 |
| No. 35—मणिसारः (अनुमानखण्डः) (Nyâya) by Gopînâtha. | 1 | 8 | 0 |
| No. 36—कुमारसम्भवः (Kâvya) by Kâlidâsa with the two commentaries, Prakâsikâ of Arunagirinâtha and Vivarana of Nârâyana Pandita (Part III. 6th, 7th & 8th Sargas). | 3 | 0 | 0 |
| No. 37—आशौचाष्टकम् (Smriti) by Vararuchi with commentary. | 0 | 4 | 0 |
| No. 38—नामलिङ्गानुशासनम् (Kosa) by Amarasimha with the commentary Tîkâsarvasva of Vandyaghatîya Sarvânanda (Part I. 1st Kânda). | 2 | 0 | 0 |
| No. 39—चारुदत्तम् (Nâtaka) by Bhâsa | 0 | 12 | 0 |
| No. 40—अलङ्कारसूत्रम् (Alankâra) by Râjânaka Srî Ruyyaka with the Alankârasarvaswa of Sri Mankhuka and its commentary by Samudrabandha (Second edition). | 2 | 8 | 0 |
| No. 41—अध्यात्मपटलम् (Kalpa) by Âpastamba with Vivarana of Srî Sankara Bhagavat Pâda. | 0 | 4 | 0 |
| No. 42—प्रतिमानाटकम् (Nâtaka) by Bhâsa. | 1 | 8 | 0 |
| No. 43—नामलिङ्गानुशासनम् (Kosa) by Amarasimha with the two commentaries, Amarakosodghâtana of Kshîraswâmin and Tîkâsarvaswa of Vandyaghatîya Sarvânanda (Part II. 2nd Kânda 1—6 Vargas). | 2 | 8 | 0 |

| | RS. | AS. | P. |
|---|---|---|---|
| No. 44—तन्त्रशुद्धम् (Tantra) by Bhattâraka Srî Vedottama. | 0 | 4 | 0 |
| No. 45—प्रपञ्चहृदयम् (Prapanchahridaya). | 1 | 0 | 0 |
| No. 46—परिभाषावृत्तिः (Vyâkarana) by Nîlakantha Dîkshita. | 0 | 8 | 0 |
| No. 47—सिद्धान्तसिद्धाञ्जनम् (Vedânta) by Srî Krishnânanda Sarasvatî. (Part I). | 1 | 12 | 0 |
| No. 48— Do. Do. (Part II). | 2 | 0 | 0 |
| No. 49—गोलदीपिका (Jyotisha) by Parameswara. | 0 | 4 | 0 |
| No. 50—रसार्णवसुधाकरः (Alankâra) by Singa Bhûpâla. | 3 | 0 | 0 |
| No. 51—नामलिङ्गानुशासनम् (Kosa) by Amarasimha with the two commentaries, Amarakosodghâtana of Kshîraswâmin and Tîkâsarvaswa of Vandyaghatîya Sarvânanda (Part III. 2nd Kânda 7—10 Vargas). | 2 | 0 | 0 |
| No. 52—नामलिङ्गानुशासनम् (Kosa) by Amarasimha with the commentary Tîkâsarvaswa of Vandyaghatîya Sarvânanda (Part IV. 3rd Kânda) | 1 | 8 | 0 |
| No. 53—शाब्दनिर्णयः (Vedânta) by Prakâsâtmayatîndra. | 0 | 12 | 0 |
| No. 54—स्फोटसिद्धिन्यायविचारः (Vyâkarana). | 0 | 4 | 0 |
| No. 55—मत्तविलासप्रहसनम् (Nâtaka) by Srî Mahendravikramavarman. | 0 | 8 | 0 |
| No. 56—मनुष्यालयचन्द्रिका (Silpa). | 0 | 8 | 0 |
| No. 57—रघुवीरचरितम् (Kâvya). | 1 | 4 | 0 |
| No. 58—सिद्धान्तसिद्धाञ्जनम् (Vedânta) by Srî Krishnânanda Saraswatî (Part III). | 2 | 0 | 0 |
| No. 59—नागानन्दम् (Nâtaka) by Srîharshadeva with the commentary Nâgânandavimarsinî of Sivarâma | 3 | 4 | 0 |
| No. 60—लघुस्तुतिः (Stuti) by Srî Laghubhattâraka with the commentary of Srî Râghavânanda. | 0 | 8 | 0 |

| | RS. | AS. | P. |
|---|---|---|---|
| No. 61—सिद्धान्तसिद्धाञ्जनम् (Vedânta) by Srî Krishnânanda Sarasvati (Part IV). | 1 | 8 | 0 |
| No. 62—सर्वमतसंग्रहः (Sarvamatasangraha). | 0 | 8 | 0 |
| No. 63—किरातार्जुनीयम् (Kâvya) by Bharavi with the commentary Sabdârthadîpika of Chitrabhânu (1, 2 and 3 Sargas). | 2 | 8 | 0 |
| No. 64—मेघसन्देशः (Kâvya) by Kâlidasa with the commentary Pradîpa of Dakshinâvartanatha. | 1 | 0 | 0 |
| No. 65—मयमतम् (Silpa) by Mayamuni. | 3 | 8 | 0 |
| No. 66— महार्थमञ्जरी (Darsana) with the commentary Parimala of Maheswarânanda. | 2 | 8 | 0 |
| No. 67—तन्त्रसमुच्चयः (Tantra) by Nârâyana with the commentary Vimarsini of Sankara (Part I. 1–6 Patalas). | 3 | 4 | 0 |
| No. 68—तत्त्वप्रकाशः (Agama) by Srî Bhojadeva with the commentary Tâtparyadîpikâ of Srî Kumara. | 2 | 0 | 0 |
| No. 69—ईशानशिवगुरुदेवपद्धतिः (Tantra) by Isânasivagurudevamisra (Part I. Sâmānyapâda). | 1 | 8 | 0 |
| No. 70—आर्यमञ्जुश्रीमूलकल्पः (Part I). | 2 | 8 | 0 |
| No. 71— तन्त्रसमुच्चयः (Tantra) by Nârâyana with the commentary Vimarsini of Sankara (Part II. 7—12 Patalas). | 3 | 8 | 0 |
| No. 72— ईशानशिवगुरुदेवपद्धतिः (Tantra) by Isanasivagurudevamisra (Part II. Mantrapada). | 4 | 0 | 0 |
| No. 73 — ईश्वरप्रतिपत्तिप्रकाशः (Vedanta) by Sri Madhusudanasarasvati. | 0 | 4 | 0 |

| | RS. | AS. | P. |
|---|---|---|---|
| No. 74— श्रीयाज्ञवल्क्यस्मृतिः (Dharmasâstra) with the commentary Bâlakrîdâ of Visvarûpâchârya. (Part I—Âchâra and Vyavahâra Adhyâyas). | 4 | 0 | 0 |
| No. 75—शिल्परत्नम् (Silpa) by Srîkumâra (Part I). | 3 | 4 | 0 |
| No. 76—आर्यमञ्जुश्रीमूलकल्पः (Part II). | 3 | 4 | 0 |
| No. 77—ईशानशिवगुरुदेवपद्धतिः (Tantra) by Isanasivagurudevamisra (Part III. Kriyapada 1—30 Patalas). | 3 | 4 | 0 |
| No. 78—आश्वलायनगृह्यसूत्रम् with the commentary Anavila of Haradattacharya. | 5 | 0 | 0 |
| No. 79—अर्थशास्त्रम् of Kautalya with commentary by Mahamahopadhyaya T. Ganapati Sastri (Part I—1 & 2 Adhikaranas). | 8 | 0 | 0 |
| No. 80—अर्थशास्त्रम् of Kautalya with commentary by Mahamahopadhyaya T. Ganapati Sastri (Part II—3 to 7 Adhikaranas). | 8 | 0 | 0 |
| No. 81—श्रीयाज्ञवल्क्यस्मृतिः (Dharmasastra) with the commentary Bâlakrîda of Visvarûpâchârya (Part II. Prâyaschittâdhyâya). | 3 | 12 | 0 |
| No. 82—अर्थशास्त्रम् of Kautalya with commentary by Mahamahopadhyaya T. Ganapati Sastri (Part III—8 to 15 Adhikaranas). | 8 | 0 | 0 |
| No. 83—ईशानशिवगुरुदेवपद्धतिः (Tantra) by Isanasivagurudevamisra (Part IV. Kriyapada 31–64 Patalas and Yogapada). | 4 | 0 | 0 |
| No. 84—आर्यमञ्जुश्रिमूलकल्पः (Part III). | 2 | 12 | 0 |
| No. 85—विष्णुसंहिता (Tantra). | 4 | 8 | 0 |

| | RS. | AS. | P. |
|---|---|---|---|
| No. 86— भरतचरितम् (Kâvya) of Srî Krishnakavi. | 2 | 0 | 0 |
| No. 87— सङ्गीतसमयसारः (Sangîta) of Sangîtâkara Srî·Pârsvadeva. | 1 | 12 | 0 |
| No. 88— काव्यप्रकाशः (Alankâra) of Mammatabhatta with two commentaries the Sampradayaprakasini of Sri Vidyachakravartin and the Sâhityachûdâmani of Srî Bhattagopâla (Part I. 1–5 Ullâsas). | 5 | 0 | 0 |
| No. 89— स्फोटसिद्धिः (Vyākarana) by Bharatamiśra. | 0 | 8 | 0 |
| No. 90—मीमांसाश्लोकवार्त्तिकम् (Mīmāmsā) with the commentary Kāśikā of Sucaritamiśra (Part I). | 2 | 8 | 0 |
| No. 91—होराशास्त्रम् (Jyotisa) of Varāhamihirāchārya with the Vivaraṇa of Rudra. | 3 | 0 | 0 |

*Apply to:—*

*The Curator,*

*for the publication of Sanskrit Manuscripts,*

*Trivandrum.*

